महामहोपाध्याय स्मार्त्त श्रीरघुनन्दन भट्टाचार्य्यकृतम्।

# एकादशी तत्त्वम्।

श्रीराधामोहन गोस्वामि-विरचित टीकासमेतम्।

चुँचुड़ा—विश्वनाथ चतुष्पाठीस्थाध्यापक

**श्रीहरिनाथ स्मृतिभूषणेन**

संशोधितम्।

श्रीहरिनाथ स्मृतिभूषणेन, श्रीनिवारण भट्टाचार्य्येणच

प्रकाशितम्।

हुगलि

बुधोदय यन्त्रे

श्रीकाशीनाथ भट्टाचार्य्येण

मुद्रितम्।

शकाब्दा १८१६।




मूल्य  मुद्रा।

| ःशीतत्त्वस्य निर्घण्ट: | पृष्ठा | पंक्ति |
|---|---|---|
| ाचरणम् | १ | १ |
| ा | १ | ४ |
| ःशी-व्रतं | ४ | ६ |
| ाधिकरणं | ८ | २ |
| ति: पुण्यकाले विधिवत्प्रतिषेधनं | १७ | ८ |
| स्मरणं | २२ | ४ |
| ्माजेनन्याय: | २७ | १ |
| ार्म्ममात्रे नारायण नमस्कार स्मरणं | ३५ | १५ |
| विष्णुनामादिकीर्त्तनं | ३६ | २ |
| ावधारणं | ३६ | ८ |
| ार्म्मणि प्रथमत: ॐ तत्सदिति निर्देश: | ३८ | ११ |
| विषयो व्रतम् | ४१ | ८ |
| ाम्यैकादशी व्रतम् | ४८ | ३ |
| ाद्ववविषय: | ५० | ५ |
| स-समन्वय: | ५२ | १ |
| ेलक्षणानि | ५२ | ६ |
| ्स्यादि-वर्ज्जनम् | ५३ | ८ |
| व्रते स्त्रीगमनं | ५५ | ५ |
| हे स्त्रीगमननिषेध: | ५६ | ३ |
| ्सुतार्थं चतुर्थाहत्याग: | ५७ | १ |
| शीभोजन निन्दा | ५८ | २ |
| ा साधकंनित्यादि | ५८ | २ |
| जन्याय: | ५८ | १० |
| ीवन्याय: | ६५ | १ |
| मनसा कर्म्मानुष्ठानम् | ६६ | ६ |
| र्म्मण: पापक्षयादिकं | ७३ | ८ |

| | | |
|---|---|---|
| एकादशी व्रतफलम् | ७६ | १ |
| रात्रिसत्रन्यायः | ७७ | ३ |
| संयोग पृथक्त्वन्यायः | ८१ | १ |
| वृद्धिमात्रस्य नित्यता एकस्य नित्यत्वकाम्यत्वे च | ८६ | ४ |
| योषित्मात्रविवेचनम् | ८३ | १ |
| उपवासाधिकारिणः | ८८ | ५ |
| कर्णैकादश्यां सपुत्र-वैष्णवानामधिकारः | १०६ | ५ |
| वैष्णव-लक्षणम् | ” | ७ |
| नित्योपवासे रव्यादि-दोषाभावः | १०८ | ११ |
| ममवारेषूपवासः | १११ | ३ |
| उपवासे पितृश्रेषाघ्राणम् | ” | ६ |
| पूर्ण तिथि स्वरूपम् | ११२ | ३ |
| पूर्णैकादश्युपवासः | ११४ | १० |
| विस्पृशैकादशी | १२३ | ७ |
| दशमीविद्धैकादशी नोपोष्या | १२५ | १३ |
| एकादशी-संक्षेपः | १४३ | १० |
| दशमी-नियमः | १४७ | ३ |
| एकादशी-नियमः | १४८ | १५ |
| सङ्कल्पः | १५० | १३ |
| श्रीशपूजा-विवेचनम् | १५२ | ८ |
| षट्त्रिंशदुपचारादि | १५३ | ३ |
| अपपर्व्वनिरूपणम् | १८० | १० |
| द्वादशी नियमाः | १८७ | ११ |
| उपवास-समर्पणम् | १८० | ६ |
| पारणाकालः | ” | १० |
| सङ्कटे जलपारणम् | १८३ | १ |
| तुलसी-महिमा | १८४ | २ |
| रुद्राक्ष-धारणम् | ” | ११ |
| स्वदत्तदेवनैवेद्यभक्षणम् | १८५ | ३ |

| | | |
|---|---|---|
| स्त्रियाः श्राद्धपिण्डादनम | १९५ | ८ |
| कूपादित्यागयागता | २०४ | १ |
| कूपादौ त्यक्तुरुपयोगः | ” | ९ |
| रजस्वला-सूतकिनोर्व्रतम् | २०६ | ६ |
| उपवासानुकल्पः | २०७ | १२ |
| ऊहव्यवस्था | २०९ | ४ |
| एकभक्तम् | २२५ | ४ |
| नक्तम | २२६ | २ |
| हविष्यद्रव्य-निर्णयः | ” | १० |
| स्विन्नधान्यस्य भक्ष्यत्वम् | २२७ | ४ |
| प्रातिनिध्य-विवेचनम् | २३० | १० |
| चान्द्रायणादौ ग्रास-परिसंख्या | २४२ | ८ |
| पारणा-नियमः | २४४ | १६ |
| जलपानेऽशनानशने | २४५ | ६ |
| ग्रयैनादिव्यवस्था | २४६ | ११ |

# एकादशी तत्त्वम्।

प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरं। मुनीन्द्राणां स्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः। (१) अज्ञानतिमिरध्वंसिहरिपादनखत्विषं। नत्वा वच्मि तत्र तत्त्वमेकादशीव्रतादिषु। एकादशीव्रतं तत्र कालञ्चन्यायनिर्णयः। मुख्यकालेतु संक्रान्तेर्विधिवत्प्रतिषेधनं। व्रतस्य लक्षणं तत्र ग्रहसम्भाञ्जनन्तथा। वैदिके कर्म्ममात्रे तु नारायणनतिस्मृती। विष्णुनामादिसाङ्गार्थं तथाऽच्छिद्रावधारणं। ॐ-तत्सदितिनिर्द्देशः कर्म्मणां प्राग्भवेद्व्रतं। सङ्कल्पविषयो नित्यं काम्यञ्चैकादशीव्रतं। वृद्धिश्राद्धस्य विषय उपवास-

ॐ हरये नमः। भवेऽस्मिन् कान्तारे मुहुरटनदुःखैकविकलः, समीहे संलब्धं तव चरणपाथोज शरणं। न योगोज्ञानंवा भजनमपि वा यद्यपि हरे, तथाप्याशादीर्घा तव च करुणा किं न कुरुते। वन्दे श्रीकृष्णमानन्दघनं परममीश्वरं। राधा स्वर्णलता सङ्गतमालरुचिविग्रहं। श्रीराधामोहनोदीपं करोति शुभदर्शनं। एकादश्यादितत्त्वानां पूर्व्वाचार्य्यमतेच्छया। ग्रन्थारम्भे विघ्नविघाताय मङ्गलमाचरन् शिष्यशिक्षायै निवध्नाति प्रणम्येत्यादि। संश्चासौ चिच्चासावानन्दश्चेति व्युत्पत्त्या सच्चिदानन्दशब्देन नित्यो ज्ञानस्वरूप आनन्दस्वरूपश्च यस्तमित्यर्थो लभ्यते। द्वैतवादिनस्तु

समन्वयः। दयादिलक्षणान्यत्र व्रते गन्धादिवर्ज्जनं। ऋतौ व्रते स्त्रीगामित्वं श्राद्धाहे न च तद्भवेत्। चतुर्थाह्न परित्यागः प्रशस्तसुतकाङ्क्षिणः। एकादशीभोजने तु निन्दा नित्यत्वसाधकं। नित्यं सदादि विश्वजिद्यावज्जीवनयौ तथा। अशक्तौ मनसा कर्म्म नित्यानां पापक्षया दिकं। एकादशीव्रतफलं रात्रिसत्त्वनयस्तथा। न्यायः संयोगपार्थक्यं वृद्धिश्राद्धस्य नित्यता। एकस्य नित्य काम्यत्वे योषित्श्राद्धविवेचनं। उपवासाधिकारी च कृष्णायामधिकारिता। वैष्णवानां सपुत्राणां तत्र वैष्णवलक्षणं। नित्योपवासे रव्यादिदोषाभाव उपोषणं। सप्त वारेष्वथाग्नेयः पितृशेष उपोषणे। पूर्णतिथिस्वरूपञ्च

मन्तौ चिदानन्दौ यस्येति विग्रहं वर्णयन्ति। परमात्मानं सर्व्वान्तर्यामिण ईश्वरं जगज्जन्मादिकारणं। मुनीन्द्राणामिति बहुवचन स्मरणात् स्मृतिरित्यत्र एकवचनार्थोऽविवक्षितस्तेन मुनीन्द्रकृतस्मृतिवचनानामित्यर्थः सकल स्मृतेरव्याख्यानत्वात् स्मृतिपदस्य स्मृतिवचनपरत्वात्। तत्र स्मृतिर्धर्म्मसंहिता, धर्म्म प्रयोजकार्थबोधक वचनसमूहात्मको ग्रन्थ इति यावत्। धर्म्म प्रयोजकत्वं साक्षात् परम्परया ग्राह्यं तेन पापार्थक तद्वचनानां प्रायश्चित्ताद्यर्थक वचनानाञ्च दृष्टार्थकानां दायभागादिवचनानाञ्च संग्रहः। तथाहि नरकादि साधनतया पापकर्म्म श्रवणात् ततो निवृत्तिर्भवति,प्रायश्चित्तादिना च संजात, पापानां विनाशस्ततो निष्पापतया स्नानादिसाधनता सहकारिणस्नानाद्युत् पत्तिरिति, एवं यथा शास्त्रोपात्तदायादि धनद्वारा कर्म्मानुष्ठानेन विलक्षण धर्म्मोत्पत्तिरिति; तेषां परम्परया धर्म्मार्थकत्वं। तथाच स्मृतिः, तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते, ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मण इति। तथा याज्ञवल्क्यवचनं, न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथि प्रियः। श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यत इति। तत्त्वं तत् पर्य्यविषयीभूतमर्थं वक्तीति वचधातोः शब्दोऽर्थः, तत्त्वमित्यत्र द्वितीयायाः

पूर्णैकादशिका तथा। त्रिस्पृशैकादशी चैव दशम्यासंयुता सदा। नोपोष्या तासु संक्षेपोद्दशमी नियमास्तथा। एकादश्याञ्च सङ्कल्पः श्रीशपूजा विवेचनं। षट्त्रिंशदुपचारादि जपपर्व्वनिरूपणं। द्वादशीनियमास्तद्वदुपवास-समर्पणं। पारणायास्तथा कालः सङ्कटे जलधारणं। तुलसीमहिमा तत्र तथा रुद्राक्षधारणं। स्वदत्तदेवनैवेद्याद्युपयोगः क्रियास्तथा। श्राद्धपिण्डादनन्तञ्च कूपादित्यागयागता। त्यक्तुस्तत्रोपयोगश्च रजःसूतकिनोर्व्रतं। उपवासानुकल्पश्च

व्यापारानुवन्धिविषयित्वमर्थः, आख्यातस्य कृति भविष्यत्सामीप्यरूप वर्त्तमानत्वञ्चार्थः, भविष्यत् सामीप्यञ्चाव्यवहितोत्तरत्वं। यद्वा वचधातो निरूपणमर्थः, निरूपणं ज्ञानानुकूलशब्दः, विषयित्वं द्वितीयार्थः, तस्य धात्वर्थस्यैकदेशे ज्ञानेऽन्वयः। तेन स्मृतितत्त्वविषयकशब्दानुकूला व्यवहितोत्तर कृतिमान्, स्मृतितत्त्वविषयकज्ञानानुकूलशब्दानुकूलाव्यवहितोत्तर कृतिमान् वा श्रीरघुनन्दन इत्यर्थः। यद्यपि पूर्व्वं मङ्गलाचरणं स्मृतितत्त्वनिरूपणप्रतिज्ञानञ्च कृतं तथापि विघ्नबाहुल्यशङ्कया पुनर्मङ्गलाचरणं, पुनः प्रतिज्ञा च एकादशीतत्त्वनिरूपणग्रन्थस्य स्मृतितत्त्वनिरूपण ग्रन्थान्तर्गतत्व ज्ञापनेन स्मृतितत्त्वश्रवणेच्छोः शिष्यस्य एकादशीतत्त्वश्रवणप्रवर्त्तनाय। ननु, इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नत इति मलमासतत्त्वारम्भे प्रतिज्ञातत्वादेकादशीतत्त्वस्य स्मृतितत्त्वान्तर्गतत्वं पूर्व्वं ज्ञातमेवेतिचेत्; तथापि प्राक् प्रतिज्ञातं यत्स्मृतितत्त्वान्तर्गतमेकादशीतत्त्वं तदेवेदानीं निरूप्यत इति ज्ञापनार्थं पुनः प्रतिज्ञाचरणमिति। (१) अज्ञानेति अज्ञानं मिथ्याज्ञानमात्मनो देहाद्यभिमानरूपं, वेदान्तसम्मता माया वा तदेव तिमिरं तद्ध्वंसित्वं हरिपादनखत्विषो ध्यानादियोगेन, त्विट्पदेन प्रकाशकतासाम्येन ज्ञानं वा लक्ष्यते, एतेन हरिचरणध्यानादि, संसारमूलाज्ञाननिरसनद्वारा मोक्षार्थमवश्यं कर्त्तव्यं स्मृतितत्त्वज्ञानमपि चित्त शुद्ध्यादिद्वारा हरिभजनानुकूल्येन ज्ञानसाधनद्वारा मोक्षार्थमिति प्रयोजनञ्च दर्शितं। अतएव पुनः पुनरेव कृष्णप्रणामः कृतः। अन्यत् तल्लज्जा-

तथैवोह्व्यवस्थितिः। 'एकभक्तं तथा नक्तं हविष्यद्रव्य-निर्णयः। खिन्नधान्यस्य भक्ष्यत्वं प्रातिनिध्यविवेचनं। चान्द्रायणादौ ग्रासानां परिसंख्याव्यवस्थितिः। पारणा-नियमः पानीत्वपामनशनाशनं। व्यवस्था शयनादीनां संकथ्यन्ते जगत्पतेः। (२)

अथैकादशीव्रतं। तत्र वराहपुराणं। एकादश्यां निरा-हारो यो भुङ्क्ते द्वादशीदिने। शुक्ले वा यदि वा कृष्णे

धिकरणन्यायादिकं प्रसङ्गतः, प्रसङ्गसङ्गतिरस्य एकादशीतत्त्वेप्यन्वयः। मलमासादि व्यवहारतत्त्वादिग्रन्थेन कतिपयधर्मतत्त्वे व्यवहारतत्त्वे च ज्ञाते तदुत्कर्षसम्बन्धेन स्मृतस्यैकादशीतत्त्वस्य निरूपणादिति भावः। यद्यपि अज्ञानतिमिरध्वंसित्वं हरेरवयवमात्रस्य तथापि भक्त्यातिशयेन पादनखे-त्युक्तं, प्रणम्येत्यत्र नत्यर्थः स्वापकर्षबोधकव्यापारः प्रशब्देन भक्तिश्रद्धाति-शययुक्तत्वं द्योत्यते स्वपदं कर्त्तृपरं अपकर्षश्च अयमस्मादपकृष्ट इति प्रतीति साक्षिकोऽवधिमान् गुणविशेषः विशेषत्वञ्च वैजात्यं, एवञ्चापकर्षस्यावधि मत्त्वेन तदन्वितावधिताश्रयवाचक कर्मपदसाकाङ्क्षं स्वापकर्षबोधक व्यापा-रार्थकक्रियापदं, ततश्चावधित्वं द्वितीयार्थः, तस्य निरूपकत्वसम्बन्धेन धात्व-र्थतावच्छेदकघटकापकर्षेऽन्वयात् निरुक्तेश्वर निष्ठावधित्वनिरूपकस्वाप-कर्षबोधक व्यापारानन्तरं स्वसमान कर्त्तृकैकादशीतत्त्वनिरूपणानुकूल कृतिमान् श्रीरघुनन्दन इति बोधः पर्य्यवसितः। एतेन धात्वर्थतावच्छेदक-क्रियाजन्य फलस्य स्वापकर्षबोधस्य पुरुषान्तरनिष्ठत्वेन तस्य कर्मता-पत्तिरिति निरस्तं। नत्यर्थकधातुस्थले व्युत्पत्तिवैलक्षण्यादिति संक्षेपः। प्रतिषेवनं प्रतिषेधः। तत्र व्रतलक्षणप्रसङ्गे गृहसम्मार्ज्जनं गृहसम्मा-र्ज्जनन्यायः। नति स्मृती कर्त्तव्ये तत्र स्मृतिर्ध्यानं विष्णुनामानि उच्चा-र्य्यानि संकल्पविषयो व्रतमिति लक्षणं। एकादशीव्रतमेकादश्युपवासव्रतं नित्यं काम्यञ्च संकथ्यन्ते सम्यक्विचारेण निरूप्यन्ते। (२) अथैकादशी-व्र...मिति अथशब्द आनन्तर्य्यार्थः, व्यवहारतत्त्वनिरूपणानन्तरमिति पर्य्य-वसितं। एकादशीपदमेकादश्युपवासपरं तदात्मकं व्रतमिति समु-

तद्व्रतं वैष्णवं महत्। महत्त्वमाह। यदीच्छेद्विष्णुनावासं पुत्त्रसम्पदमात्मनः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। एतद्विदन् सुघोराणि हन्ति पापानि पार्थिव।। यो गृहीत्वा व्रतं मोहादेकादशीदिने नरः। न समापयते तस्य गतिः पापीयसी भवेत्। अत्र, एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिण इति भविष्यपुराणे उपवासपदान्निराहारपदं नैकादशीकालमात्राभोजनपरं,

दितार्थः, निरूप्यत इति पूरणीयं एतादृश प्रतिज्ञाफलं, शिष्यावधानं अवधानञ्च शिष्यशुश्रूषा। तत्रेति तत्पदं एकादशीव्रतपरं बोधकत्तुं सप्तम्यर्थः,. तस्य वराहपुराणेऽन्वयः तद्व्रतमिति तस्य व्रतं भवति निराहारत्वमेव व्रतं भवतीत्यर्थः। यदीच्छेदिति तथाच विष्णुलोकवासादि पुण्यजनकत्वं सुघोरपापबहुलनाशकत्वञ्च महत्त्वमित्यर्थः। गृहीत्वा आरभ्य संकल्प्येति यावत्, आरम्भो वरणं यज्ञे संकल्पो व्रतजापयोरिति वचनात्। न समापयते चरमकालपर्य्यन्तं नाचरतीत्यर्थः। एतच्च निरतिशयपापाय अकृतसंकल्पस्याप्येकादशीव्रतानाचरणे पापश्रवणात्। यद्वा गृहीत्वा आरभ्य न समापयते द्वादशीदिनकृत्य पारणादिकं न कुर्य्यादिति। निराहारपदमिति, एकादश्यामिति वाक्यसहकारेणेति शेषः, तद्युक्तेति एकादशीयुक्तदिनसम्बन्ध्यहोरात्राभोजनपरमित्यर्थः। एतेनैकादश्या यत्र दिवसमात्रसम्बन्धो न तु रात्रौ तत्र तद्युक्तत्वस्याहोरात्रेऽसत्वेपि न क्षतिः। एकादशीदिनसम्बन्धित्वमेकादश्यामित्यनेन लभ्यते, तदन्वयस्याहोरात्राभोजने, इत्येकादशीयुक्तदिने उपवासलाभ इति, तत्रैव अहोरात्राभोजन एव, लक्षणाप्रसङ्गात् स्वारसिकलक्षणाप्रसङ्गात्, उपवासपरत्वे उपवासवत् परत्वे, न लक्षणा न स्वारसिकलक्षणा किन्तु निरूढ़लक्षणेत्यर्थः निरूढ़त्वञ्च अनादिप्रयोगसिद्धत्वेन शक्तितुल्यत्वं, सामान्यशब्दस्य सामान्यधर्म्मावच्छिन्नशक्तपदस्य विशेष तात्पर्य्यकत्वात् विशेषधर्म्मावच्छिन्नेतात्पर्य्यग्राहकनिरूढ़लक्षणया विशेषधर्म्मावच्छिन्नबोधकत्वात्। नास्त्याहारो यस्येति विग्रहवाक्येन निरा-

किन्तु तद्युक्ताहोरात्राभोजनपरं तत्रैवोपवासपदव्यवहारात्। न च वैपरीत्यं उपवासपदस्याहाराभावमात्रपरत्वे लक्षणाप्रसङ्गात्। निराहारपदस्योपवासपरत्वे तु न लक्षणा सामान्यशास्त्रस्य विशेषतात्पर्य्यकत्वात्। तथाच कात्यायनः। नित्योपवासी यो मर्त्त्यः सायं प्रातर्भुजिक्रियां। सन्त्यजेन्मतिमान् विप्रः संप्राप्ते हरिवासरे। सायंप्रातरिति रात्रिदिवोपलक्षणं। मुनिभिर्हरिशयनं-

हारपदं आहाराभाववत्परं समस्तपदस्य विशिष्टार्थे शक्तिस्वीकारादुपवासपरत्वञ्च, निराहारत्वंविशेषधर्म्म इत्यग्रे व्यक्तो भविष्यति, समस्तपदस्य शक्तिस्वीकारे तस्य पदत्वस्वीकार एव वीजं। तदस्वीकारेतु निराहारपदघटकनिर्पदस्याहाराभाववति निरूढ़लक्षणास्वीकारात् समासस्य च तादृशार्थतात्पर्य्यग्राहकत्वं सामान्यधर्म्मावच्छिन्ने निरूढ़लक्षकपदस्य विशेषधर्म्मावच्छिन्नेऽपि लक्षणाया निरूढ़त्वात्। नच निराहारपदस्य उपवासपरत्वेऽपि एकादशीपदस्य तद्युक्तदिनपरत्वावश्यकत्वे एकादशीयुक्तदिनमात्रे निराहारत्वान्वये अर्थवशसम्पन्न एव उपवासलाभ इति, कथं निराहारपदस्य उपवास परत्वमिति वाच्यं, केवल निराहारत्वस्य व्रतत्वाभावेन तत्व्रतं वैष्णवं महदित्युक्तवाधापत्तेः। एकादशीयुक्तदिने उपवासं कुर्य्यात्, आहारं वर्ज्जयेदिति विधिद्वय कल्पनापत्तेश्च, नचैकादशीपदस्य तद्युक्तदिनपरत्वे तन्मतेऽपि लक्षणेति वाच्यं, गुणवाचक शुक्लादिपदस्य गुणिपरत्ववत् एकादशीवाचकपदस्य तद्युक्तलक्षणाया निरूढ़त्वात्। यद्वा निराहारपदं निराहारपदघटकाहार पदं, उपवासपरं उपवासघटकाहोरात्रावच्छिन्नभोजनद्वयपरं, एवञ्चाहारपदसामान्यपदं तस्य विशेषपरत्वं अहोरात्रावच्छिन्नभोजनद्वयपरत्वं स्फुटमिति। ननु उपवासपदस्य निराहार एव शक्तिः, नत्वहोरात्रावच्छिन्न भोजनाभावे; इत्यतोऽहोरात्रावच्छिन्नभोजनाभावपरत्वमुपवासपदस्याह,तथाचेति,नित्योपवासी सायं प्रातर्भुजिक्रियां वर्ज्जयेदित्यन्वये य इति पदवैयर्थ्यं उपवासपदस्य सायं प्रातर्भोजनाभावपरत्वे उद्देश्यतावच्छेदकविधेययोरैक्येनशाब्द

प्रात ...षप्राणां मर्त्यवासिनां नित्यं। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तरिति छन्दोगपरिशिष्टैक वाक्यत्वात्। अतएव खण्डतिथेरप्यहोरात्रत्वकीर्त्तनं अहो रात्रसाध्यकर्म्माङ्गत्वार्थं। तथाच विष्णुधर्म्मोत्तरे। सा तिथिस्तदहोरात्रं यस्यामभ्युदितोरविः। तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणं। सा तिथिस्तदहोरात्रं यस्यामस्तमितोरविः। तया कर्म्माणि कुर्व्वीत ह्रास वृद्धी न कारणं। शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितोरविः। तच्च तिथ्यन्तरसहायभावं विना प्रायो न सम्भवति अतएव

वेधानुपपत्तिश्चेत्यतः संप्राप्ते हरिवासरे यो मर्त्यो मरणधर्मकोऽतएव मतिमान् प्रेक्षावान् विप्रः सायं प्रातर्भुजिक्रियां वर्जयेत् स नित्योपवासीत्य न्वयः, यत्पदात्तत्पदाध्याहारः यत्तत्पदानुक्तौ सायंप्रातर्भुजिक्रियां वर्ज्जये द्विप्रो नित्योपवासीत्यन्वयो न सम्भवति, आख्यातार्थस्य धर्म्मितावच्छेदक विध यान्वये व्युत्पत्तिविरोधात्, स नित्योपवासीतत्र तत्पदस्यैकादश्यवच्छिन्न सायं प्रातर्भोजनाभावत्वपरत्वमुपवासपदञ्चोपवासपदार्थपरं एकादश्य वच्छिन्न सायं प्रातर्भोजनाभाव विशिष्टे नित्योपवासपदार्थतोऽभेदान्वये उद्देश्यतावच्छेदके तादृशभोजनाभावे विधेयतावच्छेदकस्य नित्योपवास पदार्थस्याभेदान्वयः, एकविशिष्टेऽपरविशिष्टान्वये तथा व्युत्पत्तेरौत्सर्गिक त्वात्, तत्र चैकादश्यवच्छिन्न सायं प्रातर्भोजनाभावत्वे प्रत्यवाय जनकीभूता भाव प्रतियोगित्वरूप नित्यत्वस्यावच्छेदकतापर्य्याप्तिः, धर्म्मितावच्छेदके पारतन्त्र्येण भासते, तथैवोपवासपदार्थतावच्छेदकत्वं एकादश्यवच्छिन्नत्वोप लक्षिते सायं प्रातर्भोजनाभावत्वमात्रे भासते तथा व्युत्पत्तेः सिद्धान्त सिद्धत्वात्। तथाच सायं प्रातर्भोजनाभावत्वावच्छिन्नस्य उपवासपदार्थत्वं प्रमाणसिद्धमिति। संप्राप्ते दशमीवेधादिरहिते हरिवासरे एकादशी द्वादश्यन्यतरयुक्तदिने, एकादशीमुपवसेत् द्वादशीमथवा पुनः, विमिश्रां

गृह्यपरिशिष्टे युग्माग्नीत्यभिधाय तिथ्योर्युग्मं महाफल मित्युक्तं अस्य प्रयोजनन्तु तिथेःखण्डविशेषनियमनं । स्वतिथ्या कर्म्मानिर्व्वाहे सहायभावेनान्यतिथ्यनुप्रवेशेना होरात्रसाध्योपवासाद्याचरणञ्च । एवञ्च प्रातःकाले तत्तिथ्यलाभे तिथ्यन्तरेऽप्युपवाससङ्कल्पः अहोरात्राभोजनरूपस्य तस्य प्रातरारम्भार्हत्वात् । संवत्सरप्रदीपेऽपि प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेदित्युक्तं । अत्र कर्म्मणस्तावदपूर्व्वजनकत्वेन विधेयत्वेन च प्राधान्यं । तिथ्यादेर्गुणत्वेन क्वचिदुपलक्षणत्वमाह गर्गः । तिथिनक्षत्रवारादि साधनं पुण्यपापयोः । प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमा इति प्रधानस्य विधेय कर्म्मणो गुणभावेनाङ्गत्वेन, एवञ्च निराहारपदस्योपवासपरत्वेन कलञ्जाधिकरणान्या-

वापि कुर्व्वीत न दशम्यायुतां क्वचिदित्यादि वक्ष्यमाणवचनात् । रात्रिदिवोपलक्षणं रात्रिदिनपरं सार्द्धप्रहरयामान्तरित्यनेन रात्रेः षण्मुहूर्त्तानन्तरं महानिशात्वेन भोजननिषेधः, अतएव सर्व्वत्र वचने एकादशीपदस्यैकादशीयुक्तदिन परत्वादेव । सा सूर्य्योदयसम्बन्धिनी तिथिः तिथिविहित कार्य्योपयोगिनी, एतच्च पूजाद्यभिप्रायेण अहोरात्रं अहोरात्रव्याप्ततुल्या एतच्चाहोरात्रसाध्योपवासयोग्यत्वाय, तत्तद्विहिततिथिबोधकपदानां तत्तद्गुणयुक्तदिनपरत्व ग्राहकं, ह्रासवृद्धी तिथेः स्वल्पकालसम्बन्ध बहु काल सम्बन्धौ अमावस्यास्थलवत्तत्तत्तिथिक्षयवृद्धी न कारणं न कर्म्मणि नियामकौ, वेदाःप्रमाणमितिवदेकत्वाविवक्षयाकारणमित्येकवचननिर्द्देशः तिथ्योर्युग्ममिति एतयोरित्यर्थः युग्मं योगः, महाफलं तत्तत्तिथिद्वयविहित कर्म्मजन्यपरमापूर्व्वसाधनं एतत्पदेन युग्मादिपदाद्वृत्त्या वा तत्तत्तिथिद्वय परामर्शः । युग्मक्रमेण तत्तत्तिथीर्निर्द्दिशति, युग्माग्नीत्यादि, तत्र युग्मञ्च अग्निश्च युग्माग्नी कृतञ्च भूतञ्च कृतभूते युग्माग्नीच कृतभूतेच युग्माग्निकृतभूतानीति विग्रहेण युग्मद्वयलाभः । अपूर्व्वजनकत्वेन

थान्नैकादशीलक्षणमतिवाह्य भोजनं• किन्त्वेकादश्यामिति विहितैकादशीयुताहोरात्राधिकरणपरं। (३) अथ कलञ्जाधिकरणं। तत्र श्रुतिः, न कलञ्जं भक्षयेदिति, कलञ्जभक्षणा-

अपूर्व्वद्वारा फलजनकत्वेन प्राधान्यं साक्षादपेक्षणीयत्वं, अन्यथा फलाभावः स्यादितिभावः। गुणत्वेनसाक्षादसाधनत्वेसति साधनत्वेन साधनतावच्छेदक-घटकत्वे नेति यावत्। क्वचि दुपवासादिस्थले पूजादेस्तिथिखण्डेऽपि समाप्ति सम्भवान्नतत्वोपलक्षणता, उपवासादेस्तत्रासम्भवादेवोपलक्षणत्वकल्पना-दितिभावः। उपलक्षणत्वं कर्म्मकालाव्यापकत्वे सति कर्म्मकालवृत्तित्वं। अङ्गत्वेन प्रधानजन्यफले परम्परया उपयोगित्वेन, तथाच तिथिपदं क्वचित्तिथियुक्तदिनपरमितिभावः। (३)

अधिक्रियते विचारविषयीक्रियते यत्तदधिकरणं, तत्राङ्गानि पञ्च, यथाह भट्टः, विषयो विशयश्चैव पूर्व्वपक्षस्तथोत्तरं। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतं। अत्र यमधिकृत्य विचारः सविषयः, तत्र विप्रतिपत्त्या संशयो विशयः, विरोधिवादिनो मतं पूर्व्वपक्षः, वादिनिरासकवाक्यमुत्तरं तत्राप्रामाण्यसंशयनिरासेनोपसंहारो निर्णयः। न कलञ्जं भक्षयेदिति श्रुतिः, स्वर्गकामोयजेत, इत्यादौ लिङर्थस्य कार्य्यस्य यागादावन्वये यागे इष्टसाधनताज्ञानं योग्यता-ज्ञानविधया हेतु-रन्वय-प्रयोजकरूपस्य योग्यतात्वात्, कार्य्यान्वय प्रयोजकरूपञ्च काम्यस्थले इष्टसाधनत्वं नित्य-सन्ध्यावन्दनादौ नित्यत्वं प्रत्यवायजनकीभूताभावप्रतियोगित्वरूपं घटादौ जलाहरणाद्यन्वये छिद्रेतरत्वमिव इष्टसाधनत्वादिरूपयोग्यता ज्ञानमपि शब्देनैव स्वीकार्य्यं * प्रमाणान्तरासन्निधानात्। तत्रच, इष्टसाधन-तान्वये फलपर्य्यन्तस्थायित्व-फलपर्य्यन्तस्थायिव्यापारोपधायकत्वान्यतर-योग्यता, यागे च कालान्तरभाविस्वर्गरूपफलपर्य्यन्तस्थायित्वस्याभा-वात् अपूर्व्वरूपव्यापारस्य प्रागज्ञानाच्च प्रथमतः स्वर्गरूपेष्टसाधन-त्वान्वयासम्भव इति, कार्य्यत्वेन कार्य्येलिङःशक्तिः, कार्य्यविशेषेघटादौ शक्तिग्रहात् योग्यताबलात् विधिजन्यशाब्दबोधे कार्य्यत्वेनापूर्व्वं भाषते

* स्वर्गकामोयजेतेत्यादौ तत्तद्वाक्यघटकपदेनैव, अन्यथा तादृशेष्टसाधनत्वादिरूपयोग्यताज्ञानस्य क्लृप्तीलाभः। नापदार्थः शाब्दबोधे भासत इति नियमादित्यभिप्रायः।

भावविषयकं कार्य्यमित्यर्थः । तत्र कालविशेषानुपादाना-न्निषिध्यमानक्रियायां प्रवृत्तिमतोनिषेधविधावधिकाराद्-यावत्कालमेव तस्यां तस्य निवृत्तिः । न हि कलञ्जभक्षणा-

समानप्रकारत्वेन शाब्दबोधं प्रति शक्तिपदपदार्थोपस्थित्योर्हेतुत्वात्, एवञ्च स्वर्गकामो यजेतेत्यादौ यागविषयकं स्वर्गकामकार्य्यमिति प्रथमतोऽन्वयबोधः । तत्र कार्य्यं लिङर्थः तत्र कार्य्यत्वं यदि साध्यत्वं लिङर्थैकदेशे कार्य्यत्वे निरूपितत्वसम्बन्धेन स्वर्गकामाऽन्वयः यद्वि च धर्म्मत्वरूपकार्य्यत्वमेव लिङ्पदार्थतावच्छेदकं लाघवात् तदा लिङर्थधर्म्मे साध्यता सम्बन्धेन स्वर्गकामान्वयः, स्वर्गकामकार्य्ये च यागस्य जन्यतासम्बन्धेनान्वय इति, यागजन्यं स्वर्गकामकार्य्यमित्यन्वयबोधः । विषयशब्दस्य जनकार्थकत्वात् यागविषयकं स्वर्गकामकार्य्यमित्यभिलापः क्रियते, वस्तुतस्तु आख्यातसामान्यशक्त्या कृतिरपि लिङोऽर्थः कृतौ स्वर्गकामस्याधेयतासम्बन्धेनान्वयः कृतेश्च कार्य्ये साध्यतासम्बन्धेनान्वयः । तेन स्वर्गकामकृतिसाध्यं यागविषयकं कार्य्यमित्यन्वयः, कृतिसाध्यत्वज्ञानं विना विधिवाक्यस्य प्रवर्त्तकत्वानुपपत्तेः । निषेधस्थले च आख्यातार्थकृतिर्नविवक्षिता कलञ्जभक्षणाभावादौ तत्कार्य्ये च प्रवृत्तिसाध्यतानङ्गीकारात् किन्तु प्रवृत्तिमतएव साध्यतासम्बन्धेनान्वय इति । अनन्तरञ्च यागविषयककार्य्यस्य स्वर्गकामकृतिसाध्यत्वं यागे स्वर्गकामकृतिसाध्यत्वं विना अनुपपन्नमित्यनुपपत्तिज्ञानात् विधिवाक्येन यागे स्वर्गकामकृतेः साध्यता सम्बन्धेनान्वयबोधः स च औपादानिकबोध इत्युच्यते, इदानीं कार्य्यत्वेनापूर्व्वोपस्थित्या स्वर्गपर्य्यन्तस्थाय्यपूर्व्वरूपव्यापारोपधायकत्वज्ञानाधीनेष्टसाधनत्वरूपयोग्यताज्ञानसम्भवादिति प्रभाकरमतं । तन्मते निषेधवैदिकवाक्ये "न कलञ्जं भक्षयेदित्यादौ लिङर्थकार्य्ये कलञ्जभक्षणाभावस्यान्वयात् कलञ्जभक्षणाभावविषयकं कार्य्यमित्यन्वयबोधो भवति, नित्यनिषेधस्थले, तैःपरश्चापूर्व्वस्वीकारात्, ततश्च कलञ्जभक्षणाभावे साध्यतासम्बन्धेन कर्त्तुरौपादानिकः शाब्दबोधः, कलञ्जभक्षणाभावः प्रवृत्तिमत्पुरुषीय इत्याकारको जायते । अत्र च कार्य्यतान्वयप्रयोजकरूपयोग्यता, प्रत्यवायजनकप्रतियोगिकाभावत्वं तज्ज्ञानं योग्यताज्ञानतयापेक्षितं

दृयतः कुतश्चित् कारणान्निवृत्तस्य निषेधानुपालनं सकृदृत्त-मिति कलञ्जभक्षणनिषेधो न पुनस्तं निवर्त्तयति, किन्तु

कलञ्जभक्षणाभावे तज्ज्ञाने सति कलञ्जभक्षणे प्रत्यवायजनकत्वं ज्ञायत इति ततो निवृत्तिः। न च प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामितिन्यायात् कथं नञर्थाभावेन सह लिङर्थकार्य्यस्यान्वय इति वाच्यं, व्युत्पत्तिवैचित्र्यात् नञर्थमन्तराकृत्वापि प्रकृतिप्रत्ययार्थयोः क्वचिदन्वयबोधस्वीकारात्। न कलञ्जं भक्षयेदित्यत्र कर्तृविशेषाश्रवणात् कर्त्राकाङ्क्षायां प्रवृत्तिमान् अध्याक्रियते भक्षणप्रवृत्तिरहितं प्रति, निषेधवैफल्यादिति। अत्र निषेधस्य सार्व्वकालिकत्वयुक्तिप्रदर्शनेन तद्वैलक्षण्यमेकादश्यां दर्शयितुमाह तत्रेत्यादि, निषिध्यमानक्रियायां कलञ्जभक्षणादौ प्रवृत्तिमतः प्रवृत्तियोग्यतावतः, यथा श्रुतार्थे निषिध्यमानक्रियायां प्रवृत्त्यभावद्वारा तत्क्रियारहितस्य साध्यतासम्पादनस्य वक्ष्यमाणस्यासङ्गत्यापत्तेः। योग्यता च न सामग्री, तत्सत्वेप्रवृत्त्यवश्यम्भावात्, किन्तु प्रवृत्त्यसाधारणकारणं तत्कार्य्यताज्ञानादि, वस्तुतस्तु प्रवृत्तिपदं यथा श्रुतमेव न हि प्रवृत्तिमात्रेण कलञ्जभक्षणादिनिष्पत्तिः, किन्तु प्रवृत्तिपरम्परया साधनसम्पत्त्या, तथाच भक्षणस्वरूपयोग्यप्रवृत्तिमन्तं निषेधविधिर्भक्षणोपधायकप्रवृत्तिं प्रतिरुध्य-निवर्त्तयित्वा भक्षणाभावं सम्पादयति। तत्र क्रियायामिति सप्तम्या अनुकूलत्वमर्थः न तु विषयत्वमन्नादिभक्षणं विषयीकृत्य प्रवृत्तिमतो दैवात् कलञ्जभक्षणे-निषेधादावनधिकारापत्तेः * केचित्तु प्रवृत्तिमतः व्यापारवत इत्यर्थः, तेन मनसा तु प्रवृत्तस्य इत्यादिकारिकासङ्गतिरित्याहुः। निषेधविधावधिकारात् नियोज्यत्वात् निषेधवाक्याधीनकलञ्जभक्षणाभावे स्वकार्य्यताज्ञानादिसत्त्वादिति यावत्। यद्वा अधिकारात् निषेधाननुपालननिबन्धनदोषश्रवणात्,तस्यामिति निषिध्यमाणक्रियायामित्यर्थः,निवृत्तिरप्रवृत्तिः, नहीति न निवर्त्तयतीत्यनेनान्वयः, कुतश्चित्कारणात् कलञ्जभक्षणादि

* अन्नादिभक्षणं विषयीकृत्येति यत्र अन्नमात्रभक्षणे प्रवृत्तिरस्ति न कलञ्जभक्षणे परन्तु अन्नमिश्रितं कलञ्जं भक्षयति तत्रान्नभक्षणविषयिणी या प्रवृत्तिः सा निषिध्यमानक्रियानुकूला भवति न तु निषिध्यमानक्रियाविषया।

भक्षणप्रवृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तदा तदैव निषेधविधिरपि तं निवर्त्तयति। (४) नहि कलञ्जभक्षणमुपक्रम्य यावत्कालं तन्नक्षयति, अतस्तदितरकाले तन्निवृत्तिः सिद्धैवेति विफलोविधिः। ननु नासौनिवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्तेरिति, सत्यं प्रवृत्त्युपाधिना विनाशं प्राप्तान् प्रागभावएव प्रवृत्तिनिराकरणात् साध्यमानोनिवृत्तिरुच्यते, नतु प्रवृत्तिरपि

प्रवृत्त्यनुकूल-यत्किञ्चित् वस्तुविरहात्। प्रतियोगिकारणविरहस्यैवाभावकारणत्वात्, निषेधो निषेधवाक्यं, प्रवृत्तिमत्तामात्रमितिमात्रपदेन शुचित्वादिव्युदासः (४) न ह्योति अन्यथेत्यर्थः। तदितरकाले भक्षणादितरकाले विफलोविधिः स्यादितिशेषः। भ्रान्तःशङ्कते। ननु नासौ निवृत्तिरिति, असौ, निवृत्तिः सिद्धैवेत्यत्र निवृत्तिशब्दार्थो न निवृत्तिः प्रयत्नविशेषः, निवृत्त्यनुपपत्तेरिति, तथाच कथं निषेधवैफल्यमितिभावः। भ्रमं निराकृत्य समाधत्ते सत्यमितिप्रवृत्त्युपाधिना प्रवृत्तात्मकोपाधिना निषिध्यमाणक्रियोपधायकप्रवृत्त्या, प्राप्तान्निति, सम्भावनायां स्यत्प्रत्ययः। तथाच प्रागभावस्य सामग्रीनाश्यतया यदिकलञ्जभक्षणे प्रवृत्तिः स्यात् तदा तत्प्रागभावो नश्येदिति सम्भावनाविषय इत्यर्थः। यद्वा प्रवृत्तिकालमपेक्ष्य भविष्यत्त्वं स्यत्प्रत्ययार्थः प्रवृत्त्युपाधिजन्यप्रवृत्त्युत्तरकालीननाशोत्पत्त्याश्रय इत्यर्थः। प्रपूर्व्वापधातुना उत्पत्तिरुच्यते उत्पत्तेश्च प्रतियोगिताश्रयत्वमपिस्यत्प्रत्ययार्थः, प्रवृत्तिघटितसामग्रीनाश्यतावच्छेदकः प्रागभावत्वाश्रय इति यावत्, एतत् कथनञ्च प्रवृत्त्यभावसाध्यताग्रहार्थं व्यतिरेकसहचारप्रदर्शनार्थं संसर्गाभाववाचिना निषेधवाक्यस्य-नञा निवृत्तिंबोधयितुमशक्यत्वादिति भावः, प्रवृत्तिनिराकरणात् प्रवृत्त्यभाव द्वारानिवृत्तिरुच्यते, निवृत्तिशब्देन प्रागभावएवोच्यते। तथाच निद्रादिकाले सहजत एव भक्षणप्रागभावसत्त्वान्निषेधवैफल्यं स्याद्यदि प्रवृत्तिरधिकारिविशेषणं न स्यादिति भावः। ननु प्रवृत्त्युत्तरकालीन निवृत्तिरेव निषेधवाक्यस्य नञा लक्षणीया, तथाच तत्र साध्यतासम्बन्धेन

साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमतएव निषेधविधावधिकारः। यत्तु, मनसा तु प्रवृत्तस्य, भूतचेष्टावतोपि वा। यदनागतभावस्य, वर्ज्जनं तन्निवर्त्तनमिति। तत्रापिशब्देनाप्रवृत्तमात्रसमुच्चयान्न विरोधः, भूतचेष्टावत इति भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते। प्राप्ते

कर्त्तुरन्वये विशेषणीभूत प्रवृत्तावपि साध्यतयान्वयः स्वीक्रियत इति, निद्रादिकाले प्रवृत्त्युत्तरकालीनत्व विशिष्टप्रागभावस्यासत्त्वान्निषेधवैफल्यं, तथाच किमर्थं प्रवृत्तेरधिकारिविशेषणतेति, अत आह न च प्रवृत्तिरपीति, यद्वा ननु कलञ्जभक्षणाभावविषयकं कार्य्यमित्यत्र कृतिसाध्यत्वमेव कार्य्यत्वं तत्र कार्य्यैकदेशे कृतौ कर्त्तुरन्वये कलञ्जभक्षणाभावे कृतिसाध्यत्वंविना कार्य्यस्य साध्यत्वमनुपपन्नमिति प्रवृत्तिसाध्यत्वं कलञ्जभक्षणाभावे स्वीक्रियते, तथाच निद्रादिदशायां न तादृशकलञ्जभक्षणाभावसिद्धिरिति, कर्तृगतप्रवृत्तिविशेषणं व्यर्थमित्यत आह, प्रवृत्तिरपीति, तथाच लिङः कृतिसाध्यत्वेन कार्य्ये न शक्तिर्गौरवात् निषेधकार्य्ये कृतिसाध्यत्वबाधाच्च, किन्तु धर्म्मत्वादि-लघुधर्म्मपुरस्कारेण लिङादिपदशक्तिरिति, तादृशधर्म्मे कर्त्तुः साध्यतासम्बन्धेनान्वयेन कलञ्जभक्षणाभावस्य प्रवृत्तिसाध्यतास्वीकार इति न कर्त्तृविशेषणप्रवृत्तेर्वैफल्यमितिभावः। साध्यतया साध्यतान्वयितया नञर्थ घटकतया च उपदिश्यत इति गौरवात्मानाभावाच्च, न च प्रवृत्तेरसाध्यत्वे अधिकारिविशेषणप्रवृत्तेः कुतोलाभ इत्यत आह रागप्राप्तेति, लौकिकसामग्रीवशादुत्पन्नेत्यर्थः, मनसा तु प्रवृत्तस्य कृतिसाध्यतानिश्चयादिमतो भक्षणानुकूलयत्नमात्रवत इति वा मात्रपदेन शरीरचेष्टाव्यवच्छेदः। भूतचेष्टावतः शरीरचेष्टावतो भक्षणोपादानकलञ्जादिग्रहणरूपचेष्टावत इति यावत्, यद्वा भूते प्राप्ते कलञ्जादौ भक्षणार्थं चेष्टावत इत्यर्थः। भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीः त्रिषूचिते। प्राप्ते-वृत्ते-समे-सत्ये-देवयोन्यन्तरे तु ना इति मेदिन्युक्तेः। वर्ज्जनं संसर्गाभाव इति यत्कारिकावाक्यं तत्रेत्यर्थः। अप्रवृत्तमात्रेति प्रवृत्त्यभाववतोलाभादित्यर्थः। तथाच तद्द्वारा भक्षणादिप्रागभावस्यैव निषेधपदार्थत्वे वचनतात्पर्य्यं, एवञ्च,

वृत्ते समे सत्ये देवयोन्यन्तरे तु ना, इति मेदिन्युक्ते भूते प्राप्ते निषेधो चेष्टावत इत्यर्थः। (५) ततश्च प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते। प्रागभावश्चानादिसंसर्गाभावमात्ररूपः स चाप्रवृत्तस्य भक्षण कारणमननुतिष्ठतः सिद्धत्येव, तस्मात् सकृत् क्रिया-पर्य्यवसायित्वे विफलोविधिः, कादाचित्काकरणस्य निषेधमन्तरेणापि प्राप्तेः। नच स्वर्गकामादिवत् साध्यतया प्रवृत्तिमत्कर्तृकत्वमप्यङ्गं विषयमात्राननुष्ठानाधीन-सिद्धत्वान्निषेधनियोगानामितिकर्त्तव्यताकाङ्क्षाविरहात्।

न विरोध इत्यस्य एतद्वचनबलाद्भूतचेष्टादिमत्त्वावच्छिन्न-वर्ज्जनस्य निषेध-वाक्यबोध्यत्वलाभेन केवलप्रागभावस्य तथात्वविरोधो नेत्यर्थः, (५) प्रागभावस्यानादित्वेऽपि नैमित्तिकसाध्यतास्तीत्याह कालान्तरसम्बन्धि-तयेति, अनेदे तृतीया कालान्तरसम्बन्धिता, उत्तरकालानुवृत्तिः। ननु यस्य पुंसः कलञ्जभक्षणं न भविष्यति तस्य तत्प्रागभावो न सिद्धः प्रागभावस्य प्रतियोगिसमदेशत्वनियमादित्यत आह, अनादि-संसर्गाभावमात्रपरः, अनादि संसर्गाभावत्वेन तत्सामान्यपरः, अनादि-त्वेन विशेषणाद्ध्वंसव्यावृत्तिः। एवञ्च प्रागभावस्याप्रसिद्धत्वेऽप्यत्यन्ता-भावमादाय निषेधपर्य्यवसानं, वैयर्थ्यमुपसंहरति स चाप्रवृत्तस्यापी-त्यादि। अथ कलञ्जभक्षणाभावे, आख्यातसामान्यशक्त्यासाध्यतासम्बन्धेन कृतेरन्वये बाध इत्याशङ्क्याह नचेति, साध्यतया साध्यतासम्बन्धेन, प्रवृत्तिमत्कर्तृत्वं प्रवृत्तिमत्कृतिः, कार्य्यानुयितया विवक्षितं विषयमा-त्रेति स्वप्रतियोगिकारणमात्राननुष्ठानसाध्यत्वादित्यर्थः, निषेधनियोगानां निषेधवाक्यस्य नियोगो व्यापारः कार्य्यताज्ञानं येषु विषयेषु तेषां नञर्थः संसर्गाभावस्तत्कार्य्याणामित्यर्थः तथाच बाधात् कृतिरिह, न विवक्षि-तेति भावः। ननु निषेधस्याभावस्य उपवासस्येव भावसम्वलितत्वे तद्विशिष्टाभोजनस्य कृतिसाध्यत्वमबाधितमित्यत आह, इति कर्त्तव्यतेति, तथाच न तद्भावघटितमितिभावः। अतएव निषेधनियोगानाम·

अतएव शुचित्वमपि तत्र नाङ्गं। (६) तस्मान्निषेधविधिषु काकवन्नोदेवदत्तस्य गृहा इत्यादिवत्तटस्थत्वेनाधिकारि-विशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्काल-मेव निवृत्तौ साफल्यं, न पुनर्निमित्तान्तरवत् सकृदनु-ष्ठानेनैव शास्त्रार्थसिद्धिः, नैमित्तिकश्राद्धादावमावस्या-

ननुष्ठानाधीनत्वादेव, नाङ्गं नाधिकारिविशेषणं, (६) तस्मादिति, निषेध-नियोगानां प्रवृत्त्यसाध्यत्वात्, इदञ्च तटस्थत्वेनेत्यत्र हेतुः, यद्वा उप-संहरति तस्मादिति, प्रवृत्तेरधिकारिविशेषणत्वाभावे निषेधवैफल्यादि-त्यर्थः। इदञ्च विशेषणीभूताया इत्यत्र हेतुः। तटस्थत्वेन उपलक्षण-त्वेन, अन्यथा विशेषणविधया निविष्टत्वे विशेष्यान्वयिनान्वयित्वं विशेषणत्वमितिनियमेन प्रवृत्तिविशिष्टस्य साध्यतासम्बन्धेनान्वये तत्र विशेषणीभूतप्रवृत्तेरपि साध्यतासम्बन्धेन कलञ्जभक्षणाभावेऽन्वये निषि-धस्याप्रमाण्यापत्तिः, विशेषणीभूतायाव्यावर्त्तकीभूतायाः, यद्यपि दण्डी कुण्डलीत्यादौ दण्डसमानकालीनत्वस्य कुण्डलादावनवगाहनेन दण्डस्य विशेषणत्वं तथात्रापि प्रवृत्तेः समानकालीनत्वस्य कलञ्जभक्षणाभावादौ धर्म्मि-पारतन्त्र्येण भाने विशेषणत्वसम्भवः, तथापि साध्यतादिसम्बन्धेन विशिष्टस्यान्वये विशेषणस्य साध्यतादि सम्बन्धेनैवान्वय इति व्युत्पत्ते-रुपलक्षणत्वमुक्तं, न पुनरिति न वेत्यर्थः। निमित्तान्तरवत् आवश्यक-विहितकर्म्मणि इव शास्त्रार्थसिद्धिः, प्रत्यवायानुत्पत्तिरूप-शास्त्रबोधित फलसिद्धिः, निषेधस्य सकृदनुपालनेन नैव प्रत्यवायानुत्पत्तिरित्यर्थः॥ आवश्यकेति विशेषणात् काम्यानां नैमित्तिकानां कामनाभेदेन पुन-रनुष्ठानमस्ति किन्तु तत्रापि यत्र विशेषबाधोऽस्ति तत्र स्नानादौ न पुनः पुनरनुष्ठानं। नच नित्यसन्ध्यावन्दनादौ ब्रह्मलोकादिप्राप्त्यादि-कामनया न कथं पुनः पुनरनुष्ठानमिति वाच्यं नित्यकर्म्मणो यदार्थ-वादिकं फलं श्रूयते तद्गुणफलमिवानुषङ्गिकमिति न तदर्थं पुनः क्रिया-रम्भः, तथोक्तं नित्यक्रियां तथाचान्येह्यनुषङ्गफलां श्रुतिमिति, विहित-नित्यक्रियायाः सकृदनुष्ठानेनैव शास्त्रार्थसिद्धिरित्यत्र युक्तिमाह नैमित्तिक इति विधिगौरवापत्तेरिति अमावस्याकालं व्याप्य श्राद्धं कुर्व्वीतेत्यत्र

वच्छिन्नजीवनस्याधिकारिविशेषणस्यैकत्वात् सकृत्करणे-नैव शास्त्रस्य सफलकत्वं, नैकामावास्यायामेव पुनःपुनः क्रियापरत्वं विधिगौरवापत्तेः। नहि तत्र सकृत्करण-मेव शास्त्रं विना सिद्ध्यति। अतएव स्मृति, यथा, अह्ने-नैवाह्निकं कर्म्म मासेनैव च मासिकं। न्यूनाधिकं न कर्त्तव्यं नचैकत्र क्रियाद्वयं। एकस्याः क्रियाया एकदा वारद्वयविधानं न युक्तमिति हलायुधः। अमावास्या-भेदेन पुनस्तदवच्छिन्न जीवनभेदादधिकारावृत्त्या शास्त्रार्थो-ऽप्यावर्त्तत इति, (७) एतन्न्यायमूलकमेव व्याख्यातृवचन-

विधितात्पर्य्यकल्पने गौरवापत्तेरित्यर्थः, न चात्रविधिवैफल्यमस्तीत्याह न हीति अमावस्याभेदेनेति, अधिकारभेद एव क्रियाभेदनियम इति भावः। अत्रेदं वोध्यं निषेधस्थले कलञ्जभक्षणाभावादौ प्रत्यवायजन-काभावत्वग्रहे कलञ्जभक्षणादौ प्रत्यवाय-जनकत्वग्रहोभवति स च कलञ्जभक्षणत्वाद्यवच्छेदेनैवेति, कलञ्जभक्षणमात्रे द्वेषोदयेन सर्व्वदा ततो निवृत्तिरिति, प्रवृत्तेरधिकारि-विशेषणत्वमफलं, किन्तु कीटादि व्यावृ-त्तये, नरत्वादिकमेवाधिकारि-विशेषणमुपेयं, नित्यविधिस्थले सन्ध्या-वन्दनादौ प्रत्यवायानुत्पत्तिरूपेष्टसाधनत्वादिग्रहेण सकृदनुष्ठिते प्रत्य-वायानुत्पादसिद्ध्या प्रयोजनाभावेन न पुनस्तदनुष्ठानं, नित्यकर्म्मणि यत्फलान्तरं तदप्यानुषङ्गिकमिति, न तदर्थमपि पुनरारम्भः, काम्ये दानादौ फलवाहुल्याय पुनः पुनस्तत्क्रियत एव, काम्यमपि वारुण्यादौ गङ्गास्नानादिकं पुनः पुनर्नक्रियते अजस्रस्नाननिषेधादिति, न्यायमतेतु, निषेधस्थले कलञ्जभक्षणाभावादिजन्यमपूर्व्वं न स्वीक्रियते, किन्तु वलवदनिष्टाननुवन्धित्वस्यापिविध्यर्थतया वलवदनिष्टाननुवन्धित्वरूप-तद-भाव एव नञा कलञ्जभक्षणादौ वोधात इति, तत्र द्वेषोदयेन नियत-निवृत्तिः।(७) एतन्न्यायमूलमेवेति, एतद्युक्तिमूलकमेवेत्यर्थः। वृत्तिः पालनं विधिनिषेधयोर्व्विधिनिषेधवाक्यप्रतिपाद्यकर्म्मानुष्ठान कर्म्माकरणयोः, पूज्य-

इत्थं जीमूतवाहनेन लिखितं, यथा, निमित्तं काल-मादाय वृत्तिर्व्विधि-निषेधयोः। तत्र पूज्ये विधेर्वृत्ति-र्निषेधः कालमात्रके। तिथीनां पूज्यता नाम कर्म्मानु-ष्ठानतोमता। निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते। पूज्ये युग्मादिनेतिशेषः।. कालमाधवीये वृद्धगार्ग्यः, निमित्तं कालमादाय वृत्ति-र्विधि-निषेधयोः। विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके। तिथीनां पूज्यता नाम कर्म्मानुष्ठानतोमता। निषेधस्तु निवृत्त्यात्मा काल-मात्रमपेक्षते। (८) रविसंक्रान्तौ तु तदुपलक्षितपुण्यकाल एव ग्राह्योविधिवन्निषेधेऽपि, कालान्तरकल्पने गौरवा-

त्रिंशिखण्डे, तिथाविति निमित्तकालमात्रोपलक्षणं, तेन संक्रान्त्यादि-परिग्रहः, तिथ्यादिकर्त्तव्योपवासादेश्च विशेषवचनप्राप्ततिथिखण्डाद्युप-लक्षितदिनस्य निमित्तत्वं वोध्यं, अहोरात्रादिसाध्यत्वादुपवासादेरिति। तत्र तयोर्म्मध्ये, कालमात्रक इति मात्रपदं साकल्यार्थकं, पूज्यता युग्मादि-वचनप्राप्तकर्म्माङ्गता, कर्म्मानुष्ठानतः कर्म्मणोऽनुष्ठानं यत्र पूर्व्वाह्लादौ तत्-सम्बन्धात्, यद्वा कर्म्मानुष्ठानतः पूज्यता कर्म्मानुष्ठानविधानतः कर्म्म-योग्यता, निवृत्त्यात्मा अभावरूपः, कालमात्रमपेक्षत इति, निरुक्तयुक्तेरिति-भावः। (८) ननु निषेधस्यकालमात्रापेक्षणे संक्रान्तिस्थले निषिद्धक्रियाया अकरणं संक्रान्त्युपलक्षितदिनमात्रे स्यादित्यत आह, संक्रान्तौ त्विति, कालान्तरकल्पन इति, संक्रमणकालस्यातिसूक्ष्मतया क्रियायोग्यता-भावात्, मानार्द्धादिकालविशेषस्य पुण्यत्वेन विधानात्, तत्कालस्यैवोप-स्थितत्वेन निषेधनिमित्तत्वावधारणात्, कालान्तरकल्पने संक्रान्त्युपलक्षित-दिनमात्रस्यनिषेधनिमित्तत्वकल्पने गौरवादिति, पुण्यकालस्याऽपि सं-क्रान्त्युपलक्षितदिनत्वेन प्राप्ततया तदधिककालसम्बन्धकल्पनमेवगौरव-मितिभावः। ननु प्रामाणिकं गौरवं न दोषाय, इत्यतआह, वचना-भावाच्चेति, साधकमप्याह, प्रत्युतेति, कालान्तरे निषेधानुपालने वाधकं,

द्वचनाभावाच्च। संक्रान्त्युपवासस्य तु व्रतत्वेन भावरूप-त्वान्नावघटितत्वाद्वा उभयथापि, तत्र पूज्ये विधेर्वृत्ति-रित्यनेन पुण्यकालयुक्ताहोरात्रकर्त्तव्यता, एवमेव गुरु-चरणाः। प्रत्युत एकस्मिन् काले विधेयप्रतिषेध्ययोः प्रतिपादकं कामधेनु-नैयतकालिक-कल्पतरु-कृत्यचिन्ता-मणि-हेमाद्रि-वाचस्पतिमिश्र-धृतदेवीपुराणं। अतीताना-गतोभोगोनाड्यः पञ्चदश स्मृताः। सान्निध्यन्तु भवेत्तत्र ग्रहाणां संक्रमे रवेः। व्यवहारो भवेल्लोके चन्द्रसूर्य्योप-लक्षिते। काले विकलते सर्व्वं ब्रह्माण्डं सचराचरं। पुण्यपापविभागेन फलं देवी प्रयच्छति। एकधापि कृतं तस्मिन् कोटि-कोटिगुणं भवेत्। धर्म्माद्विवर्द्धते ह्यायू-राज्यं पुत्त्रसुखादि च। अधर्म्माद्व्याधिशोकादि-विषुवायन-सन्निधौ। विषुवेषु च यद्दत्तं जप्तं भवति चाक्षयं। एवं विष्णुपदे चैव षड़शीतिमुखेषु च। भोगोव्याप्तिः

पुण्यकाले निषेधानुपालनं साधकमपीत्यर्थः, रविसंक्रान्ति-पूर्व्वापर-सन्नि-हितकालानां पापपुण्यनिमित्ततायां कालसामान्ये कार्य्यसामान्य-निमित्ततावश्यकीत्यतस्तां वक्तुमारभते, व्यवहार इति, व्यवहारोवैदिक लौकिकक्रियाविशेषप्रवृत्तिः, लोके लोकानां, चन्द्रसूर्य्योपलक्षितेऽह्नि रात्रौ चेत्यर्थः, सर्व्वत्र निमित्तत्वं सप्तम्यर्थः, तथाच दिनविहिते कर्म्मणि दिनस्य, रात्रिविहिते कर्म्मणि रात्रेर्निमित्तत्वमित्यर्थः। विकलते उत्-पद्यते, नश्यति च। ननु कालस्य जगत्कर्त्तृत्वं न सम्भवति, सूर्य्यक्रियादि-रूपत्वेनाचेतनत्वात्, कार्य्यवैचित्र्यमपि कथमित्यत आह, पुण्यपाप विभागेनेति, तथाच देवी तत्तत्कालकृत-कर्म्मजन्य-पुण्यपाप-सहकारेण सुखदुःखादिफलं जनयतीत्यर्थ इति कालस्यापि निमित्तत्वं, ननु रवि-संक्रमणसन्निहितनाड़ीषु ग्रहसान्निध्ये किं फलमत आह, एकधा-

सूक्ष्मसंक्रमणकालसन्निधाने पुण्यतमत्वमिति यावदिति कल्पतरुः। (६) वस्तुतस्तु भुज्यत इति भोगोभोग्यः, संक्रमणे रवेरतीतानागतः कालोभोग्यस्तन्निमित्तपुण्यपाप-जननयोग्य इति यावत्। अतएव, पुण्यपापविभागेन

योत्यादि, तस्मिन् संक्रान्ति-पूर्व्वापरकाले, विषुवायनसन्निधाविति, अत्र विषुवपदं महाविषुवपरं, वर्षप्रथमत्वात् प्रथमनिर्द्देशः, अयनस्य तत्तुल्यफलत्वात् एकत्रसमासेन लिखनं, अग्रे च विषुवपदं जलविषुवपरं, भोगोव्याप्तिरिति, सूर्य्यस्येत्यर्थः, अतीतानागतो यस्तस्मिन्निति, यत् तत्पदपूरणेन फलितमर्थमाह सूक्ष्मेति, अत्र पुण्यतमत्वं अतिशयपुण्य-जननयोग्यताप्रयोजकसम्बन्धः, अथवा भोगोलोकानां, अस्यां भूमौ देवदत्तस्य भोग इत्यत्र देवदत्तकर्त्तृकग्रहणविषयस्य जनकत्वमिव, अत्र जनकर्त्तृकातिशयपुण्यकर्म्मनिमित्तत्वं लभ्यत इति, अत्र यत्तत्पद-पूरणापेक्षेत्यतआह, (६) वस्तुतस्त्विति, अतीतानागत इत्यनन्तरं कालपदं पूरयित्वा समुदितार्थमाह संक्रमण इत्यादि। तन्निमित्तक इति संक्रान्ति-निमित्तकेत्यर्थः, अत्रायुर्वृतमित्यत्रेव पुण्यपापजननद्वारा भोगजनकपरं भोगपदं, भुज्यते अनेनेति व्युत्पत्त्या वा भोगपदं तज्जनकपरमिति तत्त्वं। दिवा विष्णुपदी विषयमितीति, नच पुण्यायां विष्णुपद्याञ्च प्राक्पश्चादपि षोड़श इति वृहद्वशिष्ठवचनेन विरोध इति वाच्यं, तस्यद्वात्रिंशद्दण्डान्यूनदिन-मानस्थलाभिप्रायत्वात्, पञ्चदशनाड्यस्तु तन्न्यूनदिनमानाभिप्रायेणेति, दिन-मानार्द्धस्य पूर्व्वापरगतस्य पुण्यकालत्वे तात्पर्य्यमत्रेदं बोध्यं, अतीता-नागतोभोगोनाड्यः पञ्चदशस्मृता इत्यस्य विष्णुपदीमात्रविषयत्वे, एक-धापि कृतं तस्मिन्नित्यनेन पञ्चदश-नाड्यात्मक-कालमात्र-परामर्शात्तदुत्तरं विषुवायन-सन्निधावित्यादिना सकलसंक्रान्त्युपादानविरोधात्, परन्तु उभयतः पञ्चदशनाड़ीनां पुण्यतमत्वं, कल्पतरुग्रन्थेऽपि भोगशब्देन पुण्य-तमत्वं व्याख्यातं, शातातप-जावालि-वृहस्पतिवचनैर्वर्त्तमाने तुलामेषे ज्ञेयस्त्वोभयतोदश इति यदुक्तं तत्पञ्चदशनाड़ीतोऽप्याधिक्याय, एवं मन्दा मन्दाकिनीत्यादिनासंक्रमणे त्रिचतुरादि घटिकानां पारमार्थिकपुण्यत्वमुक्तं तदप्याधिक्याय, अतएव देवलेन, याया: सन्निहिता नाड्यस्तास्ताः

फलमित्युपसंहृतं । यत्तु, अर्द्धरात्रे व्यतीते तु संक्रान्ति-र्यदहर्भवेत् । पूर्व्वे व्रतादिकं कुर्य्यात्, परेद्युः स्नान-दानयोरिति, तदुपोष्यैव च संक्रान्त्यां स्नात्वा योऽभ्य-र्च्चयेद्रविं । प्रातः पञ्चोपचारेण स काममफलमाप्नुयादिति भीमपराक्रमीयैकवाक्यतया परदिवसीयस्नानदाननिमि-त्तकं प्राग्दिनोपवाससंयमरूपव्रतादिपरमन्यथा प्रागुक्त-विरोधापत्तेः । स च कालः कियानित्याह, नाड्यः पञ्च-

पुण्यतमाः स्मृता इति सामान्यत एवोक्तं, एवञ्च देवीपुराणे षड़शीति मुखे-ऽतीत इत्यादिना षड़शीत्यादिषु पुण्यत्वमुक्तं यत् तत्पुण्यतमेष्वपि विशेष-त्वाय, अयनयोर्यत्पञ्चदशदण्डाधिकदण्डग्रहणं तत्पुण्यतरत्वाय, अह्नि-संक्रमणे पुण्यमहः कृत्स्नमुदाहृतमिति वचनस्वरसात् । विष्णुपद्यां पुण्य-तरकालो देवीपुराणेनोक्तः, प्राक्पश्चादपि षोड़शेति वचनमेव विष्णुपद्यां पुण्यतर कालपरं, एवमह्निसंक्रमणे पुण्यमहः कृत्स्नमुदाहृतं । रात्रौ-संक्रमणे भानोर्द्दिनार्द्धं स्नानदानयोरिति वृहद्वशिष्ठवचने कृत्स्नदिनपदं कृत्स्नदिनमानपरं, पञ्चदशनाड़ीकथनमपि दिनमानार्द्धाभिप्रायेन, तथाच देवीपुराणवचनैकवाक्यतया कृत्स्नदिनमानमपि संक्रान्तिपूर्व्वापरीभूत-त्वेन ज्ञेयमिति चेदत्रोच्यते, अह्निसंक्रमणे पुण्यमितिवचनं यथा श्रुतार्थमेव, एतदेकवाक्यतया देवीपुराणे, अतीतानागतपञ्चदशनाड़ी-पुण्यत्वकथनं दिनमध्यसंक्रान्त्यभिप्रायेण, तेन पञ्चदशपदं दिवासंक्रान्ति-पूर्व्वापरीभूतदिनसम्बन्धिकालपरमिति, सामान्यकालमुक्त्वा तत्रैव संक्रान्तिविशेषे विशेषकालमाह, यावद्विंशकला भुक्तेत्यादिना, यद्वा, अतीतानागतो भोग इत्यस्यातीतोऽनागतश्च भोग इत्यर्थः, एवञ्च क्वचिद-तीतो भोगःक्वचिदनागतःक्वचिच्चातीतोऽनागतश्चेत्युभयं, तदेव विवृतं भवि-ष्यत्ययने पुण्यमित्यादिना, विष्णुपद्यां विशेषानुक्तत्वात् विनिगमनाविर-हेण अतीतानागतोभयग्रहणं, अयनयोरधिककाल पुण्यत्वं यदुक्तं तत्पञ्च-दशनाड़ीपुण्यत्वाविरोधि, अतीतत्वञ्चात्र संक्रान्त्यव्यवहितपूर्व्वक्षणमारभ्य तत्क्षण-पूर्व्वकालीनत्वं, अव्यवहित पूर्व्वत्वञ्च तत्तत्संक्रान्ति प्रागभा-

दर्शेति, उभयतः पञ्चदशदण्डानां पुण्यत्वं दिवा विषुवदी-विषयमिति तिथितत्त्वे वक्ष्यते। सान्निध्यमित्यादिना तस्यैव कालस्य स्तुतिः, विकलते स्वभावात् प्रच्यवते, देवी संक्रान्तिकालस्वरूपा दुर्गा संक्रान्त्यपक्रमे देवीपुराण एव, समायनमृतुर्म्मासः पक्षोऽहश्च क्रमेण तु। स्थूलसूक्ष्म-विभागेन देवी सर्व्वगता विभो, इत्यभिधानात्, कलाकाष्ठा-दिरूपेण परिणामप्रदायिनीति मार्कण्डेयपुराणाच्च। (१०) तस्मादमावस्यायां हरितमपि न छिन्द्यादित्यादेर्नि-

वाधिकरणसूर्य्यकिरणावच्छिन्नक्षणप्रागभावानधिकरणत्वे सति तत् प्रागभावाधिकरणत्वं, तेन रात्रिसंक्रान्तिस्थले दिवसशेषयामद्वयलाभः, संक्रान्तिदिनपूर्व्वदिवसीयपञ्चदशदण्डव्यवच्छेदश्च, न च रात्रिसञ्चारस्थले संक्रान्त्यव्यवहितपूर्व्वरात्रिक्षणमारभ्य तत्पूर्व्वकालीन-पञ्चदशदण्डपरि-ग्रहोऽपिस्यादिति वाच्यं संक्रान्त्यधिकरणरात्रिक्षणभिन्नत्वस्य संक्रान्त्यव्यव-हितपूर्व्वक्षणे निवेशात्, तत्र रात्रिपदञ्च दिवसप्रथमसंक्रान्तिपूर्व्व-क्षण-लाभायेति, वस्तुतस्तु रात्र्युत्पन्नध्वंसप्रतियोगिरात्रिक्षणभिन्नत्वं निवेश्यं तेन दिनाद्यक्षणोत्पन्नसंक्रान्तिपूर्व्वपूर्व्वक्षणस्यापि व्यावर्त्तनं, एव-मनागतत्वं संक्रान्त्यव्यवहितोत्तरक्षणमारभ्य तदुत्तरकालीनत्वं तद-व्यवहितोत्तरत्वञ्च तत्संक्रान्तिक्षणध्वंसाधिकरणसूर्य्यकिरणावच्छिन्न-कालध्वंसानधिकरणत्वे सति तत्संक्रान्तिक्षणध्वंसाधिकरणत्वं, तेन क्वचिद्रात्रिसंक्रान्तिस्थले तत्परदिवसीयपूर्व्वयामद्वयग्रहणं संक्रान्त्य-व्यवहितोत्तरक्षणे संक्रान्त्यधिकरणरात्रिक्षणभिन्नत्वमपि निवेश्यं, तेन रात्रिसंक्रान्त्यव्यवहितोत्तरक्षणमादाय पञ्चदशदण्डव्यवच्छेदः, वस्तुतस्तु स्वाधिकरणरात्रिवृत्तिप्रागभावप्रतियोगिरात्रिक्षणभिन्नत्वं निवेश्यं, तेन दिवसचरमक्षणोत्पन्नसंक्रान्त्युत्तरक्षणस्यापि व्यावृत्तिः, संक्रान्तिक्षणस्य पुण्यत्वं दण्डापूपन्यायसिद्धमित्येवं रीत्या सर्व्वं परिष्कार्य्यमिति। स्वभावात् प्रच्युतिर्ज्जन्ममरणं देवीत्यपेक्षयामाह, संक्रान्त्यादिकालस्वरूपा-दुर्गेति स्वरूपत्वमधिष्ठातृत्वं परिणामः प्रजानां कार्य्यरूपेणोत्पत्तिः। (१०).

षेधविधित्वेन कलञ्जभक्षणन्यायात् यावत् कालभावित्वं, निराहारस्य तु वैधोपवासरूपत्वात् व्रतरूपत्वाच्च न तदवसरः, तयोर्भावघटितत्वात्। (११)

अथ व्रतलक्षणं। दीर्घकालानुपालनीयःसंकल्पोव्रतमिति, नारायणोपाध्यायानां स्वरसः। स्वकर्त्तव्य-विषयोनियतसंकल्पोव्रतमिति श्रीदत्त-हरिनाथ-वर्द्धमानप्रभृतयः सङ्कल्पश्च भावे मयैतत् कर्त्तव्यमेव, निषेधेतु न कर्त्तव्यमेवेति ज्ञानविशेषः। अतएव सङ्कल्पः कर्म्ममानसमित्याभिधानिकाः। वस्तुतस्तु पूर्व्वोक्तवराहपुराणवचनेनैकादश्युपवासस्य व्रतत्वाभिधानात् एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्र-उदाहृत, इत्यादि याज्ञवल्क्याद्युक्तेषु एकभक्तनक्तायाचितभोजनोपवासादिषु पादकृच्छ्राद्यभिधानाच्च, न सङ्कल्पोव्रतं किन्तु सङ्कल्पविषयतत्तत्कर्म्मैव व्रतमिति। अतएव व्रतानां सङ्कल्पसम्भवत्वमाह मनुः। सङ्कल्पमूलः कामोवै यज्ञाः सङ्कल्पसम्भवाः। व्रतानियमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः। अनेन कर्म्मणा इदमिष्टं फलं साध्यत

यावत् कालेन [illegible] नमावस्याकालव्यापकहरितादिच्छेदनाभावपरत्वं, अत्र तु एकादश्यां निराहार इत्यादि वचने तु, तदवसरः कलञ्जाधिकरणन्याय सहकारः, तयोर्निराहारोपवासयोः, भावघटितत्वादिति, भावस्य भावघटितस्यापि अनुष्ठानसाध्यत्वात् कलञ्जाधिकरणन्यायस्थलीययुक्तेरभावः। विधिः पूज्यतिथौ तत्रेत्यस्य विषयता चेति, (११) दीर्घकालानुपालनीयः, अहरन्यूनकालानुष्ठेयविषयकः, पुनः पुनरनुष्ठेयविषयको वा, अभावरूपव्रतस्य भावाङ्गकत्वेन तद्विशिष्टस्य कृतिसाध्यत्वरूपमनुष्ठेयत्वमस्तीति भावः। स्वकर्त्तव्यो विषयो यस्य स संकल्पाश्रयः पुरुषः नियतः सामानाधि

इत्येवंविषया बुद्धिः संकल्पः, तदनन्तरमिष्टसाधनतयावगते तस्मिन्निच्छा जायते, ततस्तदर्थं प्रयत्नं कुरुत इत्येवं यज्ञाः सङ्कल्पसम्भवाः, व्रतानियम-धर्म्माश्चतुर्थाध्याये वक्ष्यमाणाः सर्व्वे इत्यनेनान्येऽपि शास्त्रार्थाः संकल्पादेव जायन्त इति कुल्लूकभट्टः। व्रते सङ्कल्पमाह वराहपुराणं। प्रातःसङ्कल्पयेद्विद्वानुपवासव्रतादिकं। नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ स्मृतौ। सङ्कल्पो व्रतस्यारम्भ इत्याह राघवभट्टधृतोविष्णुः, व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकं। आरम्भोवरणं यज्ञे संकल्पोव्रतजापयोः। नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया। निमन्त्रणन्तु वा श्राद्धे आरम्भः स्यादिति श्रुतिः। पाकपरिष्क्रियेति साग्निदर्शश्राद्धविषयं तत्रैव तस्याग्न्युद्धरणविधानेन तदग्निपाकस्यासाधारणत्वात्। संकल्पविधानन्तु संवत्सरप्रदीपे, प्रातः सन्ध्यां ततःकृत्वा संकल्पं बुध आचरेत्। शान्तिपर्व्वणि, गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः। देवतास्तस्य तुष्यन्ति कामिकं तस्य सिध्यति। अन्यथा तु वृथा मर्त्त्याः क्लिश्यन्ति

करणस्य सम्बन्धेन नियमविशिष्टः नियमित-कालविशेष-विषयको वा, एतन्मतद्वये प्रत्यक्षादिशब्दानां ज्ञानविशेषे तद्विषये च प्रवृत्तिरतोव्रतपदस्य निरुक्तसंकल्पे तद्विषये च प्रवृत्तिरिति बोध्यं, संकल्पे व्रतपदप्रवृत्तौ प्रमाणाभावमाकलय्याह वस्तुतस्त्विति, पादकृच्छ्रादीति तेषां व्रतत्वं मन्वादिप्रसिद्धमितिभावः। तत्तत्कर्म्मैवेतीति, संकल्पविषयमात्रस्य व्रतत्वे यज्ञादीनामपि व्रतत्वापत्तिरत आह तत्तदिति, मन्वादिशास्त्रकारीयव्रतपदपरिभाषा-

स्वल्पबुद्धय:। यद्वेति पचान्तरं। तेन ताम्रपात्राभावे संकल्पमात्रं करणीयं। कल्पतरौ तु यद्वेति नक्तादिव्रतपरं। तदयुक्तं, तत्पदाध्याहारापत्तेः, यत्संकल्पयेत्तद्गृह्णीयादित्यनेनैवोपपत्तौ वाकारोपवासपदवैयर्थ्यापत्तेश्च। तथाच कालमाधवीये वराहपुराणं गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयात् यद्वा वार्य्येव-धारयेत्। (१२) यद्यपि व्रतं शास्त्रविहितोनियमः, नियमश्च कामचारस्य विशेषेणावरोधः, यथा अश्राद्धभोजी, अर्थित्वात् प्रवृत्तौ नियमः, सति भोजने अश्राद्धमेव भुङ्क्ते

विषयो व्रतमिति फलितं। संकल्पयेत् संकल्पपूर्व्वकं स्वकर्त्तव्यतयाऽभिलपेत् मनसा संकल्पयति वाचा अभिलपति इत्युक्तेः, संकल्पविधानन्त्वित्यादिना अभिलापस्यैव वक्तव्यत्वाच्च, संकल्पः संकल्पविषयीभूताभिलापः। औडुम्बरं ताम्रं, उपवासपदं व्रतान्तराद्युपलक्षकं, गृह्णीयात् संकल्पयेत् वाचा अभिलपेदिति यावत्। वार्य्येवधारयेदिति संकल्पवाक्यकल्पनार्थमित्यर्थः, (१२) कामचारस्य रागप्राप्ततया सामान्यतः प्रवृत्तियोग्यस्य विशेषे विशेषधर्म्मावच्छिन्ने, अवरोधः नियतप्रवृत्तिः, भावे नियममुक्त्वा अभावे तमाह यथेति, अप्रवृत्तौ प्रवृत्त्यभावे नियमो निल्यत्वं। सति भोजन इत्यनेनासति भोजनेऽश्राद्धभोजनाभावे न दोष इति, अश्राद्धभोजने न नियतप्रवृत्तिः, किन्तु श्राद्धमेवेत्येवकारेणाश्राद्धभिन्नं श्राद्धमन्नं तद्भोजनाभावेनैयत्यं लभ्यते इत्यप्रवृत्तौ नियम इति। इहैकादशीव्रतमित्यादि संकल्पाङ्गकव्रतघटितवाक्ये, गृह्यते विवक्ष्यते, अन्यथा तद्विवक्षणे ऋतुकालाभिगामीस्यादित्यत्रैतादृशस्मृतिवचनकल्पिते, ऋतौ भार्य्यामुपेयादित्यादि विधिबोधिते ऋतुकालभार्य्याभिगमने संकल्पादिकं स्यात् प्रातःसंकल्पयेद्विद्वान् उपवासव्रतादिष्विति वचनात्, न चेष्टापत्तिः संकल्पेन विना राजन्नित्यादिवचनस्वरसाददृष्टार्थककर्म्मण्येव संकल्पस्याङ्गत्वात् ऋत्वभिगमनादितः पुत्ररूपफलस्य संकल्पाभावेन वारयितुमशक्यत्वात् नचादृष्टार्थकत्वाभावादेव न संकल्प इति वाच्यं, संकल्पोव्रतजापयोरित्यनेन

इति वैयाकरणाः, तथा नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकमित्याभिधानिकाः, शास्त्रविहितोनियमोव्रतमिति तच्चोपवासादिलक्षणमित्यर्थः, तथापि तावन्मात्रं व्रतमिह न गृह्यते, अन्यथा ऋतुकालाभिगामी स्यादित्यादावपिसंकल्पादिकं प्रसज्येत, अत्र ऋतुकाले अभिगमनं यस्यास्ति स ऋतुकालाभिगामी,व्रतेणिन्निति कल्पतरुः। (१३) अतएव संकल्पाङ्कमेव विचार्य्यत इति विशेषः। गृहीतव्रताकरणे दोषमाह छागलेयः, पूर्व्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः। जीवन् भवति चण्डालो मृतः श्वा चैव जायते। द्वादशीव्रतमादाय व्रतभङ्गं करोति यः। द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते, इति नारदीयवचनाद्द्वादश्यां विशेषोऽपि वोध्यः। प्रायश्चित्तमाह पद्मपुराणं, लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत्। उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनं। प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्। वाशब्दः

व्रतारम्भरूपत्वेन संकल्पस्य निरूपणात्, नचादृष्टार्थकनियमविधिविषयो व्रतमिति वाच्यं, नियमविधिविषयत्वाभावेऽपि काम्यस्य पञ्चमीव्रतादेरुक्तत्वात्। (१३) संकल्पाङ्कमेवेत्येवकारेण शास्त्रीयनियमवैशिष्ट्यव्यवच्छेदः। ननु संकल्पाङ्कमात्रस्यव्रतत्वे वैदिकतथाविधकर्म्ममात्रस्य व्रतत्वापत्तिरित्यत आह विचार्य्यत इति, विशेषेण कर्म्मविशेषरूपतया निरूप्यत इत्यर्थः, पुनरेव व्रती भवेदिति पुनरेव व्रतमाचरेत्, नतु व्रतघटककतिपयपूजादिभङ्गे तदवशिष्टं कुर्य्यादित्यर्थः, नानापूजादिरूपाणां प्रधानानामेकभङ्गे तत्समुदितजन्यापूर्व्वासिद्धेर्द्दर्शादिवदिति, वस्तुतस्तु प्रायश्चित्तानन्तरं तदेव व्रतं कुर्य्यात् पुनरेवेति स्वरसात् व्रतान्तरकरणस्यानुपस्थितत्वादिति, समुच्चय इति मुण्डनस्य व्रतत्वाद्यभावात्, सर्व्वत्र

समुच्चये तेन मुण्डनञ्च कर्त्तव्यमिति प्रायश्चित्तविवेकः। प्रमादस्य सकृत्त्वे प्रतिप्रसूते देवलः, सर्व्वभूतमयं व्याधिः प्रमादोगुरुशासनं। अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः। इति कर्त्तव्यतायां स एव, अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः। सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत्। ब्रह्मचर्य्यं तथा सत्यं शौचमामिषवर्ज्जनं। व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः। प्रातर्व्रतमाचरेदित्यन्वयः। प्रधानपदार्थान्वयस्याभ्यर्हितत्वात्, प्रातःसंकल्पयेदिति वचनैकवाक्यत्वाच्च। (१४) अभुक्त्वाहारमित्यर्थात् पूर्व्वदिने एकभक्तत्वमायाति। नन्वाहारस्य रागप्राप्तत्वादनुपादेयतयोद्देश्यस्यैकत्वसंख्यायाः ग्रहसम्मार्ज्जन-

प्रायश्चित्ताङ्गत्वेनोक्तत्वाच्च, सकृदेतानि शास्त्रत इति, व्रतहानिकराणां सकृत् प्रमादादिकृतत्वे व्रतभङ्गो न भवति, तथाच मांसवर्ज्जनादिनियमव्रतस्थले सकृत्प्रमादादिकृतमांसभोजने नियमभङ्गदोषो न भवतीत्यर्थः, समारब्धे पञ्चमीव्रतादौ सकृत् प्रमादादिना पञ्चम्यां पूजाद्यकरणे व्रतभङ्गो भवत्येवेति। कश्चित्तु तत्रापि शास्त्रवलात् व्रतभङ्गो न भवति, फलसिद्धिश्चेत्याह, तच्चिन्त्यं। (१४) अर्थादिति, आरम्भात् पूर्व्वं तद्दिने प्रातर्भोजनस्याविहितत्वात् निषिद्धत्वाच्चाप्रसक्त्या निषेधायोगादित्यर्थः, एकभक्तत्वमिति, आहारमित्येकवचननिर्द्देशात्, एकभोजननिषेधे मुनिभिर्द्दिरशनं प्रोक्तमित्युक्तभोजनान्तरप्राप्तेरित्याशयः। तेन दिवा रात्रौ वा एकभोजने न दोष इत्यत्र तात्पर्य्यं नत्वेकभोजने नियमस्तेन क्वचिदुपवासेऽपि न दोष इति। व्रतमाचरेदित्यत्र व्रतेष्वेतानि चत्वारीत्यत्र च व्रतपदं व्रतपदार्थपरं न तु नियमविशिष्टपरं। तथा सति नियमस्य पूर्व्वदिनैकभक्तत्वादिरूपस्यान्वये पौनरुक्त्यापत्तेः। वस्तुतो व्रतत्वं जातिः फलविशेषजनकतावच्छेदकत्वादिना सिद्धा, सैव व्रतपदशक्यतावच्छेदिका, सा च जातिस्तत्तत्कर्म्मतत्तदुपवासादिविषयकतदुपधायकज्ञानविशेष-

न्यायेनाविवक्षितत्वं युक्तमिति। (१५) स च न्यायस्तृतीयाध्याये निरूपितो यथा, ज्योतिष्टोमे कुशपवित्रेण ग्रहं संमार्ष्टीति श्रूयते तत्र संशयः, किमेकग्रहस्य सम्मार्ज्जनमुत ग्रहैर्जुहोतीति वाक्येन प्राप्तानां दशग्रहाणां तदर्थं किमुद्देश्यगता संख्याऽविवक्षिता न वेति। यथा पशुना यजेतेत्यत्रैकवचनश्रुतिबलादुपादेयपशुगता संख्या विव-

वृत्तिः, दानादिकलञ्जभक्षणाभावादिज्ञानव्यावृत्त्या तत्तदुपदेशव्यङ्ग्या, व्रतस्य ज्ञानरूपता च नियमो व्रतमित्यनुशासनबलादवसीयते, तत्र नियमशब्दस्य स्वकर्तव्यतया ज्ञानविशेषपरत्वात् मनसा संकल्पयति वाचाभिलपति कर्म्मणा चोपपादयतीत्युक्तसंकल्पस्य कर्म्मोपधायकत्वाभावान्न व्रतत्वं, किन्तु तस्याभिलापादिद्वारा प्रयोजकतामादायैव सङ्कल्पप्रभवत्वं व्रतादीनामुक्तं, व्रतपदबोध्यज्ञानविशेषात्मकसङ्कल्पस्य तदुत्तरकालीनस्य कर्म्मणा चोपपादयतीत्युक्तकर्म्मपदबोध्यप्रवृत्त्या चोपपादनमात्रमनोयोगादिजननद्वारा वोध्यं तादृशजातिमज्ज्ञानविषयकर्म्मादौ व्रतपदप्रयोगो निरूढ़लक्षणयेति। यद्यपि श्रीदत्तादीनामेतन्मतं सम्यक्तया भाति तथापि तादृशविषयकर्म्मादावेव शास्त्रकृतां भूरिव्रतपदप्रयोगात्तादृशज्ञाने च तथाप्रयोगाभावात्तादृशजातिमज्ज्ञानविषयत्वरूपानुगतधर्म्मावच्छिन्ने तत्तत्कर्म्मादौ व्रतपदशक्तिस्तत्त्वकृद्भिरुक्तेति। अनुपादेयतया अविधेयतया उद्देश्येति उद्देश्यता तु विधेयतातद्घटकविषयताभिन्नविषयता (१५)।

यथेत्यादिपूर्व्वपक्षः, पशोरित्यनेनैवेत्येकस्मिन् यागेऽनेकपशुसम्बन्धस्याप्राप्तत्वमेकवचनेन लभ्यते, यागं प्रतीति, यागनिष्ठफलसाधनतायां पशोर्गुणीभावादवच्छेदकत्वात्, आवृत्त्यभावात् सम्बन्धाभावात् प्रधानोत्थापिताकाङ्क्षयैवाङ्गविधानादङ्गोत्थापिताकाङ्क्षया प्रधानस्याविधानाच्चेति भावः, तदवच्छेदकत्वेन पशुनिष्ठमुख्यफलसाधनतावच्छेदकताया अवच्छेदकत्वेन। युक्तमिति, एकस्मिन् यागेऽनेकपशुसम्बन्धस्वीकारे गौरवादिति भावः, न चैकत्वविशिष्टपशुत्वस्यावच्छेदकत्वमपेक्ष्य पशुत्वमात्र-

क्षिता तथैव ग्रहमित्येकवचनश्रुतिवलादुद्देश्यगतापि सङ्ख्या विवक्षिता भवितुमर्हतीति। तस्मादेकस्यैव ग्रहस्य सम्मार्ज्जने प्राप्ते सिद्धान्तयति, पशोर्व्वाक्यान्तरेणाप्राप्तत्वादनेनैव वाक्येन यागसम्बन्धावगमाद्यागं प्रति पशो-र्गुणीभावात् यावद्गुणं प्रधानस्य चावृत्त्यभावात् कियता पशुनेत्यवच्छेदकाकाङ्क्षायां तदवच्छेदकत्वेनैकत्वसंख्या सम्बध्यत इत्युपादेयगतायाः संख्याया विवक्षितत्वं युक्तं। ग्रहाणान्तु वाक्यान्तरेण यागसम्बन्धावगमात् सम्मार्ज्जनवाक्ये द्वितीयाश्रुत्या सम्मार्ज्जनं प्रति ग्रहस्य प्राधान्यावगमात् यावत् प्रधानं गुणस्य सम्मार्ज्जनस्यावर्त्तनीयत्वात् कियन्तो ग्रहाः सम्मार्ज्जनीया इत्याकाङ्क्षायामनुपादेयग्रहगता संख्या न विवक्षितेति माधवाचार्य्यः (१६)।

स्यावच्छेदकत्वे लाघवमितिवाच्यं स्वर्गादिफलं प्रति यागस्य वैजात्यपुरस्कारेणैव हेतुत्वं नतु पशुकरणकत्वमपि हेतुतावच्छेदकं किन्त्वेकपशुकरणकयाग एव तद्वैजात्यस्वीकार इति वैजात्यप्रयोजकतयैवैकत्वविशिष्टपशोर्यागाङ्गत्वमिति विधितात्पर्य्यात्। न च प्रयोजकतावच्छेदकत्वे, एकत्त्वनिवेशनगौरवं दोषायैवेतिवाच्यं प्रामाणिकत्वादवच्छेदकाकाङ्क्षयोत्थापितैकवचनश्रुतेराकाङ्क्षायोग्यतादिसत्त्वे श्रुतिवचनस्य निरर्थकत्वायोगात्। अथसंख्याविशेषकत्वविवक्षणेऽपि बहुपशुकरणेऽप्येकपशुकरणकत्वसत्त्वादेकत्वविवक्षणमफलमिति चेन्न सजातीयद्वितीयरहितत्वमेवात्र विवक्षितं, साजात्यञ्च समभिव्याहृतपदार्थान्वयित्वेन तथाच स्वाश्रययागकरणपशुनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वमेवात्रैकवचनबोधितमितिसामञ्जस्यादिति दिक्। द्वितीयाश्रुत्या द्वितीयान्तपदघटितश्रुत्या। इत्याकाङ्क्षायामिति, विनिगमकाभावेन सर्व्वेषामेव ग्रहाणां मार्ज्जनाकाङ्क्षासत्त्वादितिशेषः (१६)।

उत्तरमीमांसायां कल्पतरुस्तु, किञ्चिद्विधातुं सिद्ध-वन्निर्देश्यत्वमुद्देश्यत्वं, अनुष्ठेयत्वेननिर्देश्यत्वमुपादेयत्वं। उद्देश्याविवक्षायां ग्रहं सम्मार्ष्टीत्यत्रोद्देश्यग्रहस्याविवक्षा स्यात् तथाच चमसादेरपि सम्मार्गप्रसङ्गः स चायुक्त-श्चमसाधिकरणे हि प्रकृतयागसम्बन्धिसोमपात्रत्वाविशेषेण ग्रहपदस्य चोपलक्षणार्थत्वेन चमसादीनामपि सम्मार्ग-माशङ्क्य सिद्धान्तितं। अनुवाद्यमनुक्त्वा तु न विधेय-मुदीरयेत्। न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठतीति न्यायेन केवलसम्मार्गविध्ययोगादुद्देश्येन भाव्यं, तच्च ग्रहशब्देन समर्पितं। न च चमसो-पलक्षणार्थो ग्रहशब्दः ग्रहयागावान्तरापूर्व्वसाधन-

विधातुं कृतिसाध्यत्वेन वोधयितुं सिद्धस्य रागप्राप्तस्येव निर्देश्यत्वं मुख्यता च प्रमाणान्तरलभ्यत्वेन, उद्देश्यस्याविवक्षायामिति प्रमाणसिद्धाया-मितिशेषः। स च चमसादिः संमार्गः, उपलक्षणार्थत्वेन संमार्ज्जनांशे, उपलक्षणीभूतार्थपरत्वेनाविवक्षितार्थत्वेनेति यावत्, अलब्धास्पदं पदादनु-पस्थितं, प्रतितिष्ठति अन्वेति। यद्वा अलब्धास्पदं विधेयतया आश्रय-विशेषेऽनन्वितं, प्रतितिष्ठति अनुष्ठेयं भवति। समर्पितमिति, उद्देश्य-मित्यर्थः। चमसलक्षणार्थो यागसम्बन्धिसोमपात्रत्वरूपेण लक्षणया चमसादिग्राहकः। ग्रहयागावान्तरेति स्वर्गादिसाधने ग्रहयागद्वारी-भूतपरमापूर्व्वसाधनत्वस्यान्तरङ्गस्य निरूढ़लक्ष्यतावच्छेदकस्य तेन ग्रह-शब्देन लक्ष्यमाणत्वात् लक्षणया उद्देश्यतावच्छेदकविधयावोध्यमानत्वाद् ग्रहत्वेन ग्रहसामान्यविवक्षणे तेषु संमार्गविध्यसम्भव इति सामान्य शब्दस्य विशेषपरतायानिरूढ़त्वेन यागद्वारीभूतपरमापूर्व्वसाधनसामान्य परो ग्रहशब्दः, तथाच चमसादेर्ग्रहयागापूर्व्वसाधनत्वेन तेन रूपेण लक्ष-णयापि न तत्संग्रहस्तथा सोमपात्रत्वेन चमसाद्युपलक्षणत्वे, आधु-निकलक्षणापत्तिरिति भावः। यद्वा, अन्तरङ्गस्य ग्रहैर्जुहोतीति श्रुति-

स्यान्तरङ्गस्य तेन लक्ष्यमाणत्वात्, अन्यथा तदसाधन-स्यापि ग्रहस्य सम्मार्गः प्रसज्येत। व्रीहियवयोस्त्ववान्तरा-पूर्व्वभेदाभावात् व्रीहीन् प्रोक्षतीत्यत्र व्रीहिशब्दो यवोप-लक्षणार्थ इत्युक्तं। ततश्च ग्रहेष्वेव सम्मार्ग इति। ननु यदि ग्रहउद्देश्यत्वेन विधिपरिगृहीतस्तर्हि तदेकत्वमपि पश्वेकत्ववद्विवक्षितं स्यात्, मैवं ग्रहगतत्वेकत्वं ग्रहान् प्रत्यवच्छेदकत्वेन रूपेण न विवक्षितं (१७)। 65931

युक्ता हि पशुना यजेतेत्यत्रोपादेयविशेषणत्वादेकत्व-विवक्षा, एकप्रसवतयैकपशुविशिष्टयागविधिसम्भवात्।

समभिव्याहारलभ्यस्य लक्ष्यमाणत्वादुद्देश्यतावच्छेदकविधया लक्षणया-बोध्यत्वात्, लक्षणाबीजन्तूक्तमेवेति विकल्पत्वेन एकस्मिन् यागे पर-स्पराभावसहकारिणाङ्गत्वेन। अवान्तरापूर्व्वभेदाभावादिति, न च व्रीहि-यागयवयागयोः परस्परव्यभिचारेण कथमेकापूर्व्वजनकत्वमिति वाच्यं, एकशक्तिमत्त्वेन तयोरेकजातीयापूर्व्वजनकत्वसम्भवात्, न च तथाप्य-पूर्व्वभेद इति वाच्यं, यागावान्तरेत्यस्य यागजन्यतावच्छेदकधर्म्मावच्छिन्न-परत्वात्, तथाच व्रीहियागजन्यतावच्छेदकावच्छिन्नपरमापूर्व्वसाधनकलि-कापूर्व्वसाधनत्वेन यवस्यापि लक्ष्यमाणत्वादुभयोः प्रोक्षणं। एकस्मिन् यागे ग्रहचमसयोरङ्गत्वे चैकजातीयकलिकापूर्व्वे तयोरेकशक्तिमत्त्वेन हेतुता न सम्भवति केवलग्रहात् केवलचमसाच्च तदुत्पत्त्यापत्तेरिति। ग्रहान् प्रतीति, उद्देश्यतानिरूपितत्वं प्रत्यर्थः, उद्देश्यतायामाधेयता-सम्बन्धेन ग्रहाणामन्वयः, तथाच ग्रहनिष्ठोद्देश्यतावच्छेदकत्वेनेत्यर्थः। न विवक्षितमिति तत्तद्ग्रहनिष्ठतत्तदेकत्वानामेकत्वत्वेन विवक्षणेऽव्यावर्त्त कत्वात् यावद्ग्रहनिष्ठैकत्वस्याप्रसिद्धेश्चेतिभावः (१७)।

ननु सजातीयद्वितीयरहितत्वरूपेणैकत्वं कथं न विवक्षितमित्यत आह युक्ता हीति, उपादेयविशेषणत्वादिति, विधेययागविशेषणत्वादित्यर्थः। एकप्रसवतया, एकश्रुत्या विधेयतया, यागस्य तद्विशेषणतया पशोस्त-द्विशेषणैकत्वस्य च प्रथमतः प्राप्तत्वेन। एकपशुविशिष्टेति तथाच

अत्र तु ग्रहत्वैकत्वोद्देशेन सम्मार्गविधावुद्दिश्यमानयोर्गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादितिन्यायेन परस्परासम्बन्धाद्ग्रह एवोद्देश्यत्वेन पर्य्यवसानात् प्रत्युद्देश्यं वाक्यसमाप्तिः स्यात् ग्रहं सम्मार्ष्टि तच्चैकमिति, ततश्च

पशुनेत्यनेनैकवचनोपस्थापितैकत्वस्य प्रकारतावच्छेदकपशुत्वावच्छिन्नेऽन्वयादेकपशोर्लाभस्तस्य च करणत्वे विशिष्टस्य तस्य यागेऽन्वयात् समुदितवाक्येन विशिष्टयागे विधेयत्वं खलेकपोतन्यायेन शाब्दबोधमतेऽपि युगपदेकत्वपशुत्वविशिष्टस्य यागेऽन्वयात् विशिष्टविधेयत्वं विशेष्यीभूतयागतद्विशेषणसंसर्गाणां प्रागप्राप्तत्वात्, विधेयता च विषयताविशेषः प्राथमिकबोधविषय एव स्वीक्रियते विशिष्टविधिस्थले विशेषणान्तर्भावेन पर्य्याप्ता, एकैवेति न तत्र वाक्यभेद इतिभावः। अत्र तु ग्रहं संमार्ष्टीत्यत्र तु ग्रहत्वेकत्वोद्देशेन ग्रहनिष्ठोद्देश्यतावच्छेदकतया ग्रहत्वैकत्वयोर्भानेन संमार्गविधौ ग्रहं संमार्ष्टीति विधिजन्यबोधे उद्देश्यमानयोरुद्देश्यतावच्छेदकतयोद्देश्ययोः परस्परासम्बन्धादित्यनेनास्यान्वयः, हेतुमाह गुणानाञ्चेति सूत्रे गुणानामुद्देश्यविशेषणतयोद्देश्यानां विधेयानाञ्च परार्थत्वात् विशेष्यमात्रसाकाङ्क्षत्वादसम्बन्धः परस्परासम्बन्धः गुणगुणिभावेनान्वयाभावः, एकविषयतायामवच्छेदकत्वाभावश्च समत्वात् परस्परान्वये, आकाङ्क्षाविरहादिति। ननु यथाविधेयांशे पशुत्वैकत्वयोर्युगपदन्वयाकाङ्क्षया एकविधेयताया अवच्छेदकत्वरूपविधेयत्वं तथात्रैकस्मिन्नुद्देश्ये युगपदन्वयाकाङ्क्षया, एकोद्देश्यतायामवच्छेदकतयोभयोर्भानसम्भवान्नवाक्यभेद इत्यत आह ग्रह एवेति ग्रहत्वविशिष्टएव उद्देश्यत्वेनोद्देश्यतया पर्य्यवसानात् ग्रहैर्जुहोतीत्यादि श्रुत्या ग्रहगतैकत्वस्याप्राप्ततया ग्रहंसंमार्ष्टीत्यनेन तस्य प्राप्ततया विधेयतयैव स्यादिति तस्यानुद्देश्यतयोद्देश्यतावच्छेदकत्वासम्भवेन ग्रहत्वविशिष्टस्यैवोद्देश्यत्वमिति भावः। प्रत्युद्देश्यमित्युद्देश्यभेदेन वाक्यभेदः स्यादित्यर्थः, एकत्वस्य विधेयत्वेऽपि, उद्देश्यग्रहत्वस्य विधेयैकत्वस्य च द्वयोर्ग्रहनिष्ठैकोद्देश्यतावच्छेदकत्वासम्भवस्तयोरुद्देश्यत्वविधेयत्वलक्षणविषयतयोर्विलक्षणत्वादिति। ग्रहत्वैकत्वयोर्विशेषणयोर्भेदेऽपि एकस्यैव ग्रहस्योद्देश्यत्वेन भेद इति भावः। ग्रहमित्ये-

वाक्यभेदः स्यात्। अतएवोक्तं। प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नत इति। अतोग्रहत्वेन सर्व्वान् प्रकृताननूद्य सम्मार्गमात्रं विधेयमिति। एवं यस्योभयं हविरार्त्तिमृच्छेत् स ऐन्द्रं पञ्चशरावं चरुं निर्व्वपेदित्यत्रोभयत्वमविवक्षितं, तदुक्तं प्रकृत्यर्थोऽपि खल्वेतदुद्देश्यस्य

---

कत्वस्योद्देश्यतावच्छेदकत्वे विधेयत्वे वा विशिष्टार्थभेदेन घटं नीलमानयेत्यादाविव ग्रहं तमेकञ्च संमार्ष्टीतिवाक्यभेदः स्यादित्यर्थः। ग्रहगतैकत्वलाभाय तमिति प्रकृते विवक्षणीयं स्वाश्रयसंमार्ज्जनकर्म्मग्रहनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वावच्छिन्नस्य तात्पर्य्यग्राहकतयैव तत्पदोपन्यास इति। एवञ्चैकत्वस्य विधेयतया ग्रहत्वस्य चोद्देश्यतया तयोः प्रत्येकं धर्म्मितावच्छेदकीकृत्य सम्मार्ज्जनस्य विधेयतया वाक्यभेद इति भावः। अतएव वाक्यभेदापत्तिदोषादेव। प्राप्ते कर्म्मणीति विधातुं शक्यत इत्यत्र हेतुराकाङ्क्षाया विरहरूप उह्यः। अपिना द्वयोः परिग्रहः, तथाचाप्राप्तस्थले नानागुणविशिष्टस्यैकस्य विधेयता नानागुणेषु विशेषे चैका पर्य्याप्ता, यद्वा गुणेषु विधेयतावच्छेदकता नतु विधेयता इति न वाक्यभेदः, प्राप्ते नानागुणविधाने च विशेष्ये विधेयत्वाभावात् गुणेष्वेव भिन्नभिन्नविधेयतास्वीकारेण न वाक्यैक्यमिति भावः। अत इति, एकत्वस्य विवक्षणे वाक्यभेदापत्तेरित्यर्थः। प्रकृतान् निरुक्तयागाङ्गीभूतान्, यस्योभयमिति, आर्त्तिं विनाशं ऋच्छेत् प्राप्नोति। अत्रोभयत्वहविस्त्वयोरुद्देश्यत्वे वाक्यभेदापत्तिर्बोध्या वस्तुतोऽत्रोभयत्वविवक्षणे, एकहविर्विनाशे किं कार्य्यमित्याकाङ्क्षाया अनिवृत्तेरुद्देश्यविशेषणविवक्षाया अनियमाच्चोभयत्वमविवक्षितमुभयपदोपन्यासस्त्वेकहविर्विनाशे यत् कर्त्तव्यमुभयनाशेपि तदेव नत्वधिकमिति द्योतनायेति भावः। प्रकृत्यर्थो हविरुभयत्वादिः। तुल्यनीतित्वादिति यथा यागाङ्गग्रहाणां सर्व्वेषामेवाविशेषेण सम्मार्ज्जनाकाङ्क्षासत्त्वेनैकत्वसंख्या न विवक्षिता, तथैकस्योभयोर्व्वा नाशे किं कार्य्यमित्याकाङ्क्षोदयेनोभय-

विशेषणं। संख्यया तुल्यनीतित्वादविवक्षां प्रपद्यते। एवं स्वर्गकाम इत्यत्रापि पुंस्त्वमविवक्षितं। किञ्च सर्व्वेषामेव संस्कारकाङ्क्षितत्वेनैकत्वाविवक्षा युक्ता, तस्मात् सर्व्वे ग्रहाः सम्मार्जनीया इति (१८)।

एवमभुक्त्वा प्रातराहारमित्यत्राप्येकत्वाविवक्षाऽस्तु, सत्य

त्वमविवक्षितमिति भावः। स्वर्गकाम इत्यत्रेति स्वर्गकामनाया एवो-द्देश्यतावच्छेदकत्वेनावच्छेदकान्तराकाङ्क्षानुदयेन स्त्रीणां निषेधाभावेन च पुंस्त्वमविवक्षितमिति भावः। यत्र च यागादौ स्त्रीणाम-नधिकारस्तत्रापि विधिवाक्यस्थस्वर्गकामादिपदेन न पुंस्त्वं विवक्षितं निषेधवचनादेव शूद्रादीनामिव स्त्रीणामनधिकारलाभादिति। वस्तुतस्तु स्त्रीनिषिद्धयागादिविधौ स्वर्गकामादिपदेन पुंस्त्वं विवक्षितमन्यथा स्त्रीकृत-यागादेः सफलत्वापत्तिस्तथाच यत्र वाक्यभेदादिदोषः प्रयोजनविरहश्च तत्रैवाविवक्षितमुद्देश्यगतविशेषणमिति। (१८)।

अत्रापीति, अविशेषितेति, क्वचित् व्रतपूर्व्वदिने हविष्यादिनियमस्य विहितत्वात् पूर्व्वदिन आहारसामान्याभावस्य बोधयितुमशक्यत्वादित्यर्थः विशेषापेक्षायां आहारगतसंख्याविशेषाकाङ्क्षायां, एकवचनं नियामक माहारगतैकत्वबोधकं, आकाङ्क्षादिसत्त्वे निरर्थत्वायोगादन्यथैकवचन-स्याविवक्षितत्वे एकाहारो वा, अर्द्धाहारो वा, द्रव्यविशेषाहारो वा निवर्त्तनीय इत्यनिश्चयापत्तेरित्यर्थः। नचैकत्वाहारत्वयोरुद्देश्यतयो-र्भेदेन वाक्यभेदापत्तिरितिवाच्यं। मुनिभिर्द्दिरशनं प्रोक्तमित्यादिवचना-द्दिवैकभोजनस्य रात्रावेकभोजनस्य च प्राप्ततया एकभोजनत्वावच्छिन्ना-भावस्यैकस्य विधितो बोधयितुं शक्यत्वात्, अत्रच, दिवाभोजनरात्रि-भोजनयोरेकतरत्वमेवैकवचनार्थ इति। आह्रियते भुज्यते यत् तदिति-व्युत्पत्त्या आहारपदस्यान्नपरत्वमुक्तं तत्रैकवचनार्थो भुक्तेतिधात्वर्थभोजने-ऽन्वितः। न च प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्-पत्तिभङ्ग इति वाच्यं, तत्र प्रकृत्यर्थान्वितत्वस्य साक्षात् परम्परा-

मविशेषिताहारनिवृत्तिपरत्वासम्भवाद्विशेषापेक्षायामेकवचनं नियामकमन्यथानध्यवसायापत्तेः। आह्रियते इत्याहारोऽन्नादिः (१८)।

ततश्च पूर्व्वाह्णे एकाहारं भुक्त्वा पराह्णे प्रातःकाले कृताचमनः सूर्य्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा। पवनोदिक्पतिर्भूमिराकाशं खचरामराः। ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिमित्यनेन सूर्य्यादीन् निवेद्य व्रतं सङ्कल्पयेत्। मैथिलास्तु,

साधारणस्योक्तत्वादन्यथा न कलञ्जं भक्षयेदित्यादावाख्यातार्थकार्य्यस्य नञर्थान्वयेन व्युत्पत्तिभङ्गः स्यादिति। यद्वा, आहारगतमेकत्वं एकभोजनीयत्वं वस्तुत, आहारपदं भोजनपरं तत्रैव मुख्यप्रयोगात् भुक्तेत्यत्र धात्वर्थोऽविवक्षितः, तपस्तप्यत इत्यादिवत् तेनाहारमक्तत्वेत्यर्थलाभः, आनन्तर्य्यं क्त्वार्थः, एकभोजनाभावानन्तर्य्यञ्च एकभोजनाभावाधिकरणदिनानन्तर्य्यं पर्य्यवसितं तेन पूर्व्वदिने एकभोजनाभावलाभ इति, पर्य्यवसितमाह एकाहारमिति, न नियमः किन्तु परिसंख्या, तेन क्वचिदुपवासेऽपि न दोषः, नचाभुक्त्वाप्रातराहारमित्यत्रेव न कलञ्जं भक्षयेदित्यादावपि कलञ्जगतमेकत्वं विवक्षितं स्यादितिवाच्यं वाधकाभावादविशेषेण कलञ्जभक्षणसामान्याभावस्यैव घटोनास्तीत्यादाविव बोधनात्, तत्र तु पूर्व्वदिने हविष्यादिबोधकश्रुतिकलादेकत्वस्य विवक्षणादिति भावः (१८)।

सूर्य्यः सोम इति मन्त्रस्य निवेदने विनियोगो मन्त्रलिङ्गादवसेयः। भावद्वृत्तेरा भावज्ञा, देवता इति सम्बोधनं, 'अश्लीलं म्लेच्छभाषणं सूतीं सूतिकां। प्रायश्चित्तापि कृतप्रायश्चित्तोऽपि यतः सर्व्वस्मात् दुष्कृतामुच्यते इत्यर्थः। अपिना कर्म्मसादगुण्यं दर्शितं प्रायश्चित्तीत्यनेन कर्म्मानर्हताप्रयोजकपापराहित्यं ध्वनितं, गायन्तं त्रायत इति गायत्री, चक्षुः सूर्य्यः चक्षुरधिष्ठातृत्वात् दिवि सूर्य्य इव तदनिर्व्वचनीयं विष्णोः पदं स्वरूपं आततं विश्वं भासयत् स्थितं यस्य भासा सर्व्वमिदं विभा-

अद्य भगवन् सूर्य्य भगवद्योर्देवता एतद्व्रतमहमा-
चरिष्यामीत्यनेन सूर्य्याय देवताभ्यश्च निवेद्य सङ्कल्पं
कुर्य्यात्, अनेकाहसाध्ये तु अद्यारभ्येति विशेष इत्याहुः।
हारीतः, पतितपाषण्डनास्तिकसम्भाषणानृताश्लीला-
दिकमुपवासदिने विवर्ज्जयेत्। कूर्म्मपुराणे, बहि-
र्ग्रामान्त्यजान् सूतीं पतितञ्च रजस्वलां। न स्पृशे-
न्नाभिभाषेत नेक्षेत व्रतवासरे। बौधायन उद्योगपर्व्वणि
च, अष्टौ तान्यव्रतघ्नानि आपोमूलं फलं पयः।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधं। अतएव फला-
हारादावपि तन्न्यूनजलाद्यविरुद्धं। ब्राह्मणकाम्यादिषु
न न्यूनत्वनियमः। धर्म्मार्थारब्धव्रतस्यासमाप्तौ मरणे-
ऽपि तत्फलप्राप्तिमाहाङ्गिराः, यो यदर्थं चरेद्धर्म्मम-
समाप्य मृतो यदि। स तत्पुण्यफलं प्रेत्य प्राप्नुयान्म-
नुरब्रवीत्। प्रेत्य परलोके। प्रायश्चित्तविवेकोऽप्येवं।
वैदिके कर्म्ममात्रे नारायणस्मरणनमस्कारावाह योगि-

तीति श्रुतेः। स्तुतिरिति, अच्छिद्रवाक्यस्य कर्म्मसाङ्गतामात्रफलत्वात्,वृथेति,
वृथेतिमत्वा अनास्थयेति यावत्। ब्राह्मणेत्यादि, तपस्त्रिविधं तथा च भग-
वद्गीतायां देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवं। ब्रह्मचर्य्यमहिंसा च
शारीरं तप उच्यते। अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते। मनःप्रसादः सौम्यत्वं मौन-
मात्मविनिग्रहः। भावसंशुद्धिरित्येतत् तपो मानस उच्यत इति, शौचं
बाह्यं मार्ज्जनादिना, आन्तरं विष्णुस्मरणादिना, आर्ज्जवमकौटिल्यं,
ब्रह्मचर्य्यं पर्व्वादौ स्त्रीवर्ज्जनं, मनःप्रसादो रागादिराहित्यं, सौम्यत्वं
परहितैषित्वं, मौनं मुनेर्भावः, परब्रह्ममननं, आत्मनो मनसो निग्रहः
विषयेभ्यः प्रत्याहारः, भावसंशुद्धिर्व्यवहारे मायाराहित्यं, दानमिति,

याज्ञवल्क्यः, ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्म्मसु। प्रायश्चित्त्यपि सर्व्वस्माद्दुष्कृतान्मुच्यते पुमान्। प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः। तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः। गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै। मन्त्रश्च, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। वामनपुराणे, सर्व्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभं। नारायणं नमस्कृत्य सर्व्वकर्म्माणि कारयेत्। शातातपपराशरौ, अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः। प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समं। क्षितिदेवता विप्राः। अग्निष्टोमफलैरिति स्तुतिः। विष्णुः, ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः। ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित्। यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः कर्म्मभिराचरन्ति। तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः। तदपि ब्राह्मणाय दक्षिणारूपं किञ्चिद्दत्त्वा ग्राह्यं।

---

अभयदानमकार्पण्यं वा, तथाच वृहस्पतिः, स्तोकादपिप्रदातव्यमदीनेनान्तरात्मना। अहन्यहनि यत्किञ्चिदकार्पण्यं हि तत् स्मृतमिति। धर्म्मो नित्यनैमित्तिकरूपः, विद्या शास्त्रोत्थज्ञानं, विज्ञानं ब्रह्मानुभवः, आस्तिक्यं शास्त्रार्थे दृढ़प्रत्ययः, ब्राह्मणलक्षणं ब्रह्मिष्ठब्राह्मणत्वव्यञ्जकं ब्राह्मणपदस्यब्रह्मजानातीतिव्युत्पत्त्या रूढ्या चात्र ब्रह्मिष्ठपरत्वात्, ब्राह्मणलक्षणन्तु यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहलक्षणषट्कर्म्मशालित्वं, अथैते धर्म्माः क्वचित् क्षत्रियादिषु व्यभिचरन्तीति दृश्यते स्मर्य्यते च, तथाचविष्णुः, क्षमा सत्यं दया शौचं दानमिन्द्रियसंयमः। अहिंसा गुरुशुश्रूषा तीर्थानुस्मरणं दया। आर्ज्जवं लोभशून्यत्वं देवब्राह्मणपूजनं।

तथाच गोविन्दमानसोल्लासे नारदीयं, सर्व्वेषामप्य-लाभेषु यथोक्तकरणं विना। विप्रवाक्यं तथा सुभ्रु व्रतस्योद्यापलक्षणं। तथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे। अदत्त्वा दक्षिणां वापि स याति नरकं ध्रुवं। उद्यापः प्रतिष्ठा। ब्राह्मणलक्षणमाह पैठीनसिः। क्षमा दया दमो दानं धर्म्मः सत्यं श्रुतं घृणा। विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणं। श्रुतमर्थाववोधः। अतएव मनुः, चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः। दशलक्षणको धर्म्मः सेवितव्यः प्रयत्नतः। धृतिः क्षमा दयास्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणं। धृतिरिष्टवियोगानिष्टप्राप्तौ चित्तस्य

अनभ्यसूया च तथा धर्म्मः सामान्य उच्यते। सामान्यः सार्व्ववर्णिकः सर्व्वाश्रमिकश्च, तथा च वृहस्पतिः, दया क्षमानसूया च शौचमाया-सवर्ज्जनं। अकार्पण्यमस्पृहत्वं सर्व्वसाधारणानि च। आयासवर्ज्जन-स्वरूपमाह तत्रैव, अत्यन्तं पीड्यते येन सुशुभेनापिकर्म्मणा। अत्यन्तं तन्नकर्त्तव्यमनायासः स उच्यत इति चेत् सर्गादौ सत्त्वगुणेन ब्राह्मणस्य जातत्वात् तत्सन्ततिपरम्पराणामपि प्रायशः सत्त्वगुणप्रभवत्वात् तद्गुणप्रभवानामेतेषां प्रायशो ब्राह्मणेषु दर्शनात्तथोक्तेः, दुरदृष्टवशात् केचित् ब्राह्मणा रजस्तमोऽधिका जायन्ते पुण्यविशेषवशाच्च क्षत्रियादयोऽपि केचित् सत्त्वप्रधाना जायन्ते तदभिप्रायेण साधारण्यमुक्तं। तथाच भगवद्गीतायां, शमो दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजमिति। ब्रह्मकर्म्म विलक्षणब्राह्मणत्व व्यञ्जकं स्वभावजं सत्त्वगुणप्रभवात् तत्स्वभावो ब्राह्मणस्तज्जातं, व्यतिरेके निन्दामाह महाभारते सर्परूपं नहुषं प्रति युधिष्ठिरवाक्यं। सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा। दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः। यत्रैतन्न भवेत् सर्प तं शूद्रमितिनिर्द्दिशेत्। क्षत्रियादिरपि

यथा पूर्व्वमवस्थानं। इन्द्रियनिग्रहोऽप्रतिषिद्धेऽपि विषयेऽनतिप्रसङ्गः। धीर्हिताहितविवेचकशास्त्रार्थज्ञानं (२०)।

विद्या आत्मतत्त्वज्ञानं। सत्ये विशेषमाह गोतमः, नानृतवचने दोषो जीवनञ्चेत्तदधीनं न तु पापीयसां जीवनमिति। काशीखण्डञ्च, सर्पिर्लवण तैलादिक्षये चापि पतिव्रता। पतिं नास्तीति न ब्रूयादायासार्थे नियोजयेत्। क्षयेऽपि घृतं वर्द्धितमित्यादि प्रयोज्यं। शपथेऽपि मनुः, कामिनीषु विवाहेषु गवां भक्षे तथेन्धने। ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकं। इन्धने होमार्थमग्रहते, ब्राह्मणाभ्युपपत्तौ ब्राह्मणरक्षार्थमङ्गीकृतधनादौ, मिथ्याशपथे पापं नास्तीति कुल्लूकभट्टः। यमः, न नर्म्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं न च मैथुनार्थे। प्राणात्यये सर्व्वधनापहारे पञ्चानृतान्याहुरपातकानि। नर्म्म क्रीड़ा परिहास इति यावत्। अतएव मिताक्षरायां स्मृतिः, गुरुणापि समं हास्यं कर्त्तव्यं कुटिलं विना। स्वैरवाक्यं स्वानर्थपरिहारार्थं कपटेनान्योन्याभिलापः। अतएव शङ्खः, यस्य यस्य तु वर्णस्य वृत्तिच्छेदं समाचरेत्। तस्य तस्य वधप्रोक्तं प्रायश्चित्तं

ब्राह्मणसङ्ग. सत्त्वभावत्वात् ब्राह्मणोऽपि शूद्रतुल्यस्तमः प्रधानत्वादिति विवेच्यं। अर्थावबोधो वेदादिशास्त्रस्य (२०)।

कामिनीषु कामिनीधर्म्मादिनिमित्तेषु, कुटिलं कौटिल्यं, मैथुनं मिथुनसाध्यं विवाहादि तदात्मकेऽर्थे, सर्व्वधनापहारे जीवनोचितधनापहारे तद्धनस्य जीवनतुल्यत्वात्, अतएव जीवनधनस्य जीवनतुल्यत्वादेवेत्यर्थः। ब्राह्मणलक्षणसत्त्वादिकमुक्तं लक्षयति सत्यमित्यादि, भूत-

समाचरेत्। वायुपुराणे, यद्येतद्द्विगुणं नाम प्राणास्ते तु वह्निश्वरा:। स तस्य हरते प्राणान् यो यस्य हरते धनं। आदित्यपुराणेऽपि, षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः। आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्। महाभारते, सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः। तपः स्वधर्म्मवर्त्तित्वं शौचं सङ्करवर्ज्जनं। सन्तोषो विषयत्यागो क्लीरकार्य्यनिवर्त्तनं। क्षमा द्वन्द्वसहिष्णुत्वमार्ज्जवं समचित्तता। ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्त प्रशान्तता। दया भूतहितैषित्वं ध्यानं निर्व्विषयं मनः। द्वन्द्व शीतोष्णादि (२१)।

वैदिके कर्म्मणि प्रथमतः, ओम् तत् सदिति निर्द्देशोऽपि, तथाच भगवद्गीता, ओम् तत् सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च

हितं भूतहितकारित्वं, हितञ्च सुखं दुःखाभावश्च, सङ्करवर्ज्जनं परदारत्यागः, भूतहितैषित्वमिति स्वहितानुसन्धानं विनेत्यर्थः, एकादशे च भगवद्वाक्यं, शमो मन्निष्ठतावुद्धिर्दम इन्द्रियसंयमः। तितिक्षा दुःखसंमर्षोजिह्वोपस्थजयोधृतिः। दण्डन्यासः परं दानं फलत्यागस्तपः स्मृतं। स्वभावविजयः शौर्य्यं सत्यञ्च समदर्शनं,। अन्यच्च सुनृता वाणी कविभिः परिकीर्त्तिता। कर्म्मस्वसङ्गमः शौचं त्यागः सन्न्यास उच्यते। दण्डोभूतद्रोहस्तस्य त्यागो दानं, फलत्यागः भोगोपेक्षा, स्वभावो वासना तस्य जयः प्रतिवन्धः, समं ब्रह्म तस्य दर्शनमालोचनं सत्यविषयत्वात्, असङ्गमः अनासक्तिः (२१)।

जगदीश्वरस्य जगज्जन्मस्थितिलयकर्त्तुः, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तत् ब्रह्म जिज्ञासस्वेति तच्छब्दोपीति तदित्येतस्य महतो भूतस्य नामेति तैत्तिरीयश्रुतेः;

विहिताः पुरा। ओम् तत् सदिति त्रिविधो ब्रह्मणो जगदीश्वरस्य निर्द्देशोऽभिधानं। ब्रह्मविद्भिश्चिन्तितं तत्र तावदोमिति ब्रह्मेत्यादि श्रुतिप्रसिद्धेरोमिति ब्रह्मणोनाम। पतञ्जलिरप्याह अस्यैववाचकः प्रणव इति अस्य ब्रह्मणः, ओङ्कारो भगवान् विष्णुरित्यादि तु वाच्यवाचकयोरभेदेन। तथा जगत्कारणत्वेन प्रसिद्धत्वाद विदुषां परोक्षत्वाच्च तच्छब्दोऽपि ब्रह्मणोनाम। एवं परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दोऽपि, अत तेन त्रिविधेन निर्द्देशेन, यद्वा, यस्यायं त्रिविधो निर्द्देशस्तेन परमात्मना ब्राह्मणादयोनिर्म्मिताः। तथा, तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्त्तन्ते विधानोक्ता सततं ब्रह्मवादिनां। यस्मादेवं ब्रह्मणोनिर्द्देशस्तस्मादोमित्युदाहृत्य उच्चार्य्य कृता वेदवादिनां यज्ञाद्याः शास्त्रोक्ताः क्रियाः सततमङ्गवैकल्येऽपि प्रकर्षेण वर्त्तन्ते सगुणा भवन्तीति भगवच्छङ्कराचार्य्यचरणाः। व्यक्तमाह योगियाज्ञवल्क्यः, यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यद यज्ञियं। यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत्। तदोङ्कारप्रयुक्तेन सर्व्वञ्चाविकलं भवेत्। भगवद्गीतायां, तदित्यनभिसन्धाय यज्ञदानतपःक्रियाः। दानक्रियाश्च

परमार्थसत्त्वं अभावाप्रतियोगित्वं सार्व्वकालिकत्वात् सार्व्वदेशिकत्वाच्च तदादिभिः प्रवृत्तिनिमित्तैर्विशिष्टस्य ब्रह्मणोवाचक इत्यर्थः। साधुत्व निरुपाधिहितकारित्वं, प्रशस्तत्वं नित्यानन्दगुणवत्त्वं, निर्द्देशेनेति, विहित आरब्धाः, सद्भाव इत्यस्यार्थमाह विद्यमानजन्मनीति, प्रागविद्यमानस्य जन्मनि सति तत्रेत्यर्थः। साधुभाव इत्यस्यार्थमाह उत्कृष्टचरित

विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ।. तदिति ब्रह्मणोऽभिधानमुदाहृत्येत्यनुषङ्गः । अनभिसन्धाय कर्म्मणः फलमितिशेषः, तस्मात् फलाभिसन्धानं विना मुमुक्षुणा कर्म्मकर्त्तव्यमित्यपि बोध्यं । सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते । प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ युज्यते । यतो विद्यमानजन्मनि उत्कृष्टचरिते च सदित्येतत् प्रयुज्यते, अतो यज्ञादौ कर्म्मणि प्रथमतः सच्छब्दःप्रयोज्य इति (२२) ।

तेनैतादृशेतिकर्त्तव्यताकः सङ्कल्पविषयोव्रतमिति व्रतलक्षणं । सङ्कल्पविषयस्य व्रतत्वं वाचस्पतिमिश्रोऽप्याह यथा, कर्त्तव्यतया सङ्कल्पितं व्रतमिति । अमरसिंहोऽपि उपवासादौ व्रतशब्दसङ्केतमाह, नियमोव्रतमस्त्री तच्चो-

इति, अत्र ब्रह्मनिर्द्देशविधानेन तत्-श्रवणकीर्त्तने दर्शिते मङ्गलार्थत्वात्, मङ्गलस्य प्रतिकूलविघ्नविनाशः, तथा चित्तशुद्ध्यादिद्वारा सर्व्वमीश्वराधीनमिति बुद्ध्या कर्म्मफलानभिसन्धानेन कर्म्माचरणादितो ब्रह्मसंवेदनमिति (२२) ।

व्रतलक्षणमुपसंहरति तेनैतादृशेतिकर्त्तव्यताक इति, एतादृशेतिकर्त्तव्यता, अभुक्त्वा प्रातराहारमित्याद्युक्तनियमः । व्रतं व्रतपदार्थः, पदार्थता च शक्त्या परिभाषया वेति, कर्म्मणि व्युत्पन्न इति, तथाच नियमशब्दः सङ्कल्पविषयपर इति, स्ववाक्याभ्यामिति प्रायश्चित्तविवेकोक्ताभ्यामित्यर्थः । न च नाश्नहीतेति मयेदं कर्त्तव्यमित्यादिसंकल्पपरस्य व्रतपदस्य सङ्कल्पांशे विशेषणीभूतविषयविशेषबोधकताया आवश्यकत्वेन, मरणपरत्वं द्वादशवार्षिकपरत्वञ्चोक्तं मुख्यविशेष्यतया सङ्कल्पवाचित्वमेव व्रतपदस्येति भावः । तथात्वादिति व्रतत्वादित्यर्थः, तथाच निरुक्तन्यायेन तन्मतेऽपि मनुवचनविरोधपरिहारासम्भवेन तन्मतदूषणासङ्गतिः स्यादितिभावः, ननु मास्तु तन्मतदूषणं का क्षतिरित्यत आह विनि-

पवासादि पुण्यकं। तच्चव्रतमुपवासादिलक्षणं पुण्यकं, पुण्यजनकमित्यर्थः। अत्र च नियमशब्दः कर्म्मणि व्युत्पन्नः। यत्तु व्रतपदं नियतसङ्कल्पविशेषवाचकमिति प्रायश्चित्तविवेककृद्भिरुक्तं, तदपि नियतः सङ्कल्पविशेषो यत्र द्वादशवार्षिकव्रतादौ तस्य वाचकमित्येतत्परं; अन्यथा व्रतपदं मरणेऽपि मनुना प्रयुक्तं यैर्यैर्व्रतैरपोहेतेत्युक्त्वा मरणस्यापि तेनोक्तत्वादिति-व्रतपदं द्वादशवार्षिकपरमेवेत्याभ्यां स्ववाक्याभ्यां विरुद्धं स्यात्। न च नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायत इति न्यायात् संकल्पवाचित्वमिति वाच्यं, श्रीदत्तादीनां मतेऽपि स्वकर्त्तव्य-

गमकत्त्विति, व्रतपदस्य सङ्कल्पविषयकर्म्मणि मुख्यविशेष्यतया शक्ति र्नतु कर्म्मविषयकसङ्कल्पे इत्यत्र नियामकत्त्वित्यर्थः। यद्वा ननु नियतसङ्कल्पविशेषस्य वाचकं व्रतपदमित्येव शूलपाणिग्रन्थार्थः, नतु नियतः सङ्कल्पविशेषो यत्रेति बहुव्रीहिणा तदर्थप्रकटनं तत्र यद्यपि सङ्कल्पविषयकर्म्मणामेव व्रतपदवाच्यता तथापि सङ्कल्पविषयत्वविशिष्टकर्म्मणां व्रतपदवाच्यत्वे विशेषणीभूतसङ्कल्पस्यापि व्रतपदवाच्यतेत्यभिप्रायः शूलपाणेरित्याशङ्क्य निराचष्टे न च नागृहीतेति। श्रीदत्तादीनां मतेऽपीति स्वकर्त्तव्यविषयस्येति स्वकर्त्तव्यो यः सङ्कल्पविषयस्तस्येत्यर्थः। तथात्वात् व्रतपदवाच्ये विशेषणत्वात् तथाच तन्मतेऽपि नागृहीतविशेषणेति न्यायेन कर्म्मवाचित्वमप्यस्तीति कर्म्मणि व्रतपदप्रयोगेणानुपपत्ति इति तन्मतदूषणासङ्गतिरिति सङ्कल्पविषयत्वेन कर्म्मणां न व्रतपदवाच्यता, अपितु तत्तत् कर्म्मत्वेनैव व्रतपदवाच्यता। न च तत्र सङ्कल्पस्य विशेषणतेति न निरुक्तन्यायावसर इति, सङ्कल्पविषयत्वन्तु व्रतपदलक्षणमिति भावः। ननु सङ्कल्पविशेषणे कथं व्रतपद शक्तिरित्यत आह विनिगमकत्त्विति। अथवा नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायत इति न्यायेनेति विशेषणेऽनन्वयिनो न विशिष्टेऽन्वय इत्यर्थः। तेन सङ्कल्पविशिष्टे

विषयो नियतसङ्कल्पो व्रतमिति लक्षणे स्वकर्त्तव्य-विषयस्य तथात्वात्। विनिगमकन्तु प्रागुक्तवराह पुराणयाज्ञवल्क्यादिवचनं (२३)।

वस्तुतस्तु वाचनिकेऽर्थे न्यायानवतारात् यथावचनं हि वाचनिकमिति। अतएव केनापि मुनिना संकल्पे व्रतपदं न प्रयुक्तं किन्तूपवासादावेवेति। एवञ्च संकल्पविषयस्य, अनन्तं पूजयेद्धरिमित्यादौ भावत्वं, नेक्षेतोद्यन्तमादित्यमित्यादौ चाभावरूपत्वं। ननु तर्हि

व्रतपदवाच्यत्वे सङ्कल्पस्यापि व्रतपदवाच्यत्वमावश्यकमिति लाघवेन सङ्कल्पवाचित्वं व्रतपदस्येत्यर्थः। श्रीदत्तादीनामित्यस्यादौ व्रतपदस्य सङ्कल्पवाचितावादिनामिति पूरणीयं स्वकर्त्तव्यविषयस्य स्वकर्त्तव्यसंकल्पविषयस्य तथात्वात् सङ्कल्पे विशेषणत्वात् तथाच तादृशन्यायेन स्वकर्त्तव्यकर्म्मणो व्रतपदवाच्यत्वापत्तिरिति न न्यायादर इति भावः। न्यायादरेऽपि तदुभयत्र व्रतपदवाच्यत्वापत्तौ विनिगमकमपि कर्म्मणो व्रतपदवाच्यतायामस्तीत्याह विनिगमकन्त्विति (२३)।

ननु न्यायबलेनोभयार्थकं स्यात् व्रतपदमित्यत आह वचनं हि वाचनिकमिति प्रेक्षावद्भिरादृतमिति शेषः। वचनं व्यवहारः यद्वा वचनं शक्तिः गोपदं गां वक्तीत्यादौ वचधातोः शक्त्यर्थकत्वावगमात् तथाच मुनिवचनान्न्यायो दुर्ब्बल इति भावः। केचित्तु वचनं मुनिवाक्यं वाचनिकं श्रुतिमूलकं हि यतः, अतोबलवदितिशेषः, श्रुतेः कथं बलवत्त्वमिति चेदत्र वेदान्तसूत्रं, श्रुतेस्तु शब्दमूलकत्वादिति। अस्यार्थः श्रुतेस्तु श्रुतेरेव सर्व्वप्रमाणतो बलवत्त्वं शब्दमूलकत्वादिति, अस्य महतो भूतस्य निश्वसितमेतदृग्वेदोऽजायतेत्यादिवैदिकशब्देन परमेश्वरप्रणीतत्वेन स्वतः प्रामाण्यावगमादित्याहुः, अत व्रतपदं निरुक्तेतिकर्त्तव्यताविशिष्टे न शक्तं पूर्व्वदिने एकभक्तत्वस्य सूर्य्यः सोम इत्यादि निवेदनस्य च सङ्कल्पपूर्व्वभावित्वेन व्रतपदार्थघटकत्वासम्भवात्, किन्त्वितिकर्त्तव्यताया व्रताङ्गत्वं ब्रह्मचर्य्यादिनियमस्यापि कुत्रापि चान्द्रायणादिव्रते तदि-

**व्रतस्य क्वचिदप्यभावरूपत्वान्निषेधः कालमात्रक इत्यस्यापि विषयत्वं स्यादिति चेन्न तस्य केवलनिषेधविषयकत्वात्। अस्या तु संकल्पादीतिकर्त्तव्यतायोगित्वेन भावघटितत्वात्तत्र पूज्ये विधेर्वृत्तिरित्यस्यैव विषयत्वमिति (२४)।**

तिकर्त्तव्यतायामश्रवणान्नव्रतपदार्थता व्रतेष्वेतानि चत्वारीत्युक्त्या च व्रताङ्गत्वमेव तेषां नियमानामन्यत्रव्रतविशेषे नियमा उक्ताः, केचित्तु व्रतसामान्ये तथाच व्रतपदस्य नानार्थता-प्रसङ्गःस्यात्, एवं कर्म्ममात्रस्य संकल्पमूलत्वात् संकल्पविषयत्वमप्यव्यावर्त्तकं तथाच कुत्र व्रतपदस्य शक्तिरिति चेत् मयेदं कर्त्तव्यमित्याकारकज्ञानविशेषस्य प्रवृत्तिहेतुतया कर्म्मसामान्यमूलत्वेऽपि मयेदं कर्त्तव्यमित्यवधारणात्मकं विलक्षणं ज्ञानमत्र सङ्कल्पपदेन विवक्षणीयं यदपालनेन प्रत्यवायो भवति, अतएव वृणोति आच्छादयति स्वात्मानं व्रतमिति रायमुकुटेन व्युत्पादितमेतादृश-प्रयोगार्थस्य मयेदं कर्त्तव्यमेवेति लौकिकनियमेऽपि सत्त्वात् पुण्यजनकत्वे सति संकल्पविषयत्वं व्रतपदशक्यतावच्छेदकं वाच्यं, तथाच व्रतपदं योगरूढ़ं तथोक्तममरसिंहेन, नियमोव्रतमस्त्री तच्चोपवासादि पुण्यकमिति। नियम्यते निरुक्तसंकल्पविषयीक्रियते यत् स नियम इत्यर्थः। अथ यज्ञादाविव चान्द्रायणादिव्रते स्वर्गादिफलकत्वश्रवणात् स्वर्गकामस्य ममेदं कर्त्तव्यमिति संकल्पादेव प्रवृत्तिदर्शनात् निरुक्तज्ञानविशेषरूपसंकल्पविषयत्वाभावाच्चान्द्रायणादावव्याप्तिः पापनाशमात्रार्थितया क्रियमाणे व्रते पुण्यजनकत्वाभावादव्याप्तिश्च यैर्यैर्व्रतैरपोहेतेत्यादिना प्रायश्चित्तात्मककृच्छ्रादीनां मनुना व्रतत्वोक्तेः प्रसङ्गादितः क्रियमाणे व्रते संकल्पाविषयत्वादव्याप्तिश्चेतिचेन्न तत्तत्कर्म्मविशेषेषु मन्वादिभिः शास्त्रकृद्भिर्व्रतपदपरिभाषाकल्पनात्, तत्परिभाषाफलन्तु निरुक्तेतिकर्त्तव्यताया ब्रह्मचर्य्यादिनियमस्य संकल्पस्य चाङ्गत्वलाभः व्रतपदेनोल्लेखश्च। वस्तुतो यागत्वादेरिव व्रतत्वं जातिविशेषः व्रतपदशक्यतावच्छेदकः, एकादशीव्रतत्वादिकं तद्व्याप्यजातिर्मरणविशेषेच व्रतपदपरिभाषा एतादृशेतिकर्त्तव्यताकसंकल्पविषयत्वादिकमितरभेदानुमापकं लक्षणमिति, चान्द्रायणादौ च निरुक्तसंकल्पविषयत्वाङ्गीकारान्नाव्याप्तिरितिदिक् (२४)।

जीमूतवाहनेनापि, एकादश्यां भोजने दोषं दर्शयन्नुपवासं नियमयति न चायं निषेध इतिकर्त्तव्यताविधानान्निषेधे चेतिकर्त्तव्यताविरहाद्व्रतपदाप्रयोगाच्चेत्युक्तं। यत्तु निषेधप्रकरणस्थदेवलवचने, न शङ्खेन पिबेत्तोयं न खादेत् कूर्म्मशूकरौ। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि, इत्यत्र नञो निषेधे मुख्यत्वाद्भोजनाभावः प्रतीयते नत्वभोजनसंकल्परूपं व्रतं, लक्षणाप्रसङ्गात्। एकेनैव मत्स्यपुराणकृता, दशम्यां नियताहारो मांसमैथुनवर्ज्जितः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि, इति दशमीनियमपूर्व्वकं व्रतमभिधाय, रटन्तीह पुराणानि भूयोभूयो वरानने। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे, इत्यादि विधेरनन्यगतिकतया निषेधकत्वमवश्यं वाच्यं, तथाच निषिद्धे भोजने दोषश्रवणं निषेधातिक्रमजन्यतयैवोपपद्यमानं न फलश्रुत्या काम्य-

अस्य, निषेधः कालमात्रक इत्यस्य। नियमयति नियममेव स्फुटयति न चायमिति, व्रतपदस्येति तेन नियमघटितत्वं विधेयत्वञ्च लब्धं। निरूढ़स्य प्राप्तस्य न प्रमाणमितीति, न च नियमपूर्व्वको भोजनाभाव एव व्रतत्वेनोक्तस्तदभिधानानन्तरं वीप्सितेन न भोक्तव्यमित्यनेन प्रागुक्तस्य व्रतरूपाभोजनस्य नित्यत्वं ज्ञाप्यत इति युक्तमितिवाच्यं, अन्नमाश्रित्य पापानि तिष्ठन्ति हरिवासर इतिवचनसहकारेण मत्स्यपुराणवचने प्रागुक्तस्य व्रतमभिहितं तदग्रतो भोजनाभावमात्रपरतया न भोक्तव्यमित्युक्तमिति लभ्यते फलश्रवणन्तु व्रत एवेति, भोजनस्य निषिद्धत्वेनैवेतिमततात्पर्य्यात्। न खल्विति, भोजननिषेधकमुत्तरार्द्धमित्यनेनान्वयः। विधिबोधितस्यैव धर्म्मत्वं धर्म्मजनकत्वात् निषेधपरत्वे लिङा इष्टसाधनत्वाबोधनात् न धर्म्मत्वं। ननु न कलञ्जं भक्षयेदेकादश्यां न भुञ्जीत

तया निरूढ़स्य व्रतस्य नित्यत्वे प्रमाणमिति। तच्चिन्त्यं, न खलु, न शङ्खेन पिबेत्तोयमित्यादिभिः संप्रतिपन्न-निषेधभावैः साहचर्य्येणैकादशीभोजननिषेधकमुत्तरार्द्धं, किन्तु, एकादश्यां न भुञ्जीत पक्षयो रुभयोरपि। वनस्थ-यतिधर्म्मोऽयं शुक्लामेव सदा गृही तिगोभिलवचने धर्म्मशब्दसमभिव्याहारेणैकादश्यामुपवसेदित्यनेनैकवाक्य-तया चोपवासविधायकं (२५)।

न हि निषिद्धानां ब्रह्महत्यादीनां त्यागे कश्चिद्धर्म्मो जायते किन्तु भावरूपाङ्गानुगृहीतो निषिद्धो धर्म्मो भवे-दिति। वैधोपवासे च, उपावृत्तस्य पापेभ्यो यस्य वासो-गुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जित

इत्यनयोः कोविशेषो येनैकस्य निषेधत्वमन्यस्य विधित्वमित्यत आह एकादश्यामुपवसेदित्यनेनेति, तथाच नञाऽभावोयत्र वोध्यते तत्र निषेधता यत्र च धातुनाऽभोजनं वोध्यते तत्र विधित्वमेकादश्यां न भुञ्जीते-त्यत्र धर्म्मपदस्वरसात् उपवसेदित्यनेनैकवाक्यतया नञ्पदसमभिव्या-हृतधातुना उपवासो लक्ष्यते तत्र च लिङ्पदस्येष्टसाधनतावोधकतया विधित्वमितिभावः (२५)।

भावरूपाङ्गानुगृहीत इति, एतच्च मुख्यव्रतत्वाभिप्रायेण व्रताद्यशक्तौ केवलाभोजनेनापि उपवासपदार्थस्याहोरात्राभोजनरूपस्य प्रधानस्याङ्गा-भावेपि सिद्धिः, अतएव एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवमित्युक्तं तथा पाण्डित्यकामो जन्मतिथावामिषं परिहरेदित्यादेर्धर्म्मत्वं। प्रण-म्येतिमानसपूजाश्रवणकीर्त्तनादेरुपलक्षकं। व्रतपरत्वे न भ्रतत्वेनाभोजन-मात्रस्योक्तत्वेन, अभोजनशङ्का अभोजनस्य निषेधमात्रपरत्वशङ्का, पूर्व्वं दूषितत्वात्, अभोजनस्याननुष्ठानसाध्यत्वेन कृतिसाध्यत्वाभावादितिभावः। उपवासपरत्वे तु न स्वारसिकलक्षणा, अभोजनसामान्यपरस्य न भुञ्जीत इत्यादेर्गुणविशेषयुक्ताहोरात्राभोजनरूपविशेषपरत्वादित्युक्तं। सामान्य-

इति भविष्यपुराणवचनेन भोगमात्रस्यैव वर्ज्जने प्राप्ते वचनान्तरादहोरात्राभोजनस्यैव पापनिवृत्तिगुणवासयुक्तस्य प्राधान्यमन्यभोगवर्ज्जनस्याङ्गत्वं। तथाच, सूतके मृतके चैव प्रणम्य मनसा हरिं। एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते। आग्नेये, एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवं। अत्रैकादश्यामुपवासमात्रस्य व्रतत्वमुक्तं। एकादश्यां न भुञ्जीतेत्यस्य व्रतपरत्वेन नाभोजनशङ्का, तस्याश्च पूर्व्वं दूषितत्वात्। ततश्च यथैकादश्यां न भुञ्जीतेत्यत्र वचनान्तरादुपवासरूपव्रतपरत्वं तथा न भोक्तव्यमित्यत्रापि। वस्तुतस्तु वराहपुराणे एकादशीव्रतसन्दंशमध्ये न शङ्खेन पिबेत्तोयमिति न भोक्तव्यं न भोक्तव्यमिति वचनद्वयमभिधाय व्रताकरणे प्रत्यवाय उक्तः। न च पौनरुक्तभिया तस्य निषेधकत्वमितिवाच्यं। तथात्वे, एतद्वचन एव न भोक्तव्यमिति पुनरुपादानं व्यर्थं स्यात् किन्तु वीप्सया तस्यैव व्रतस्य नित्यत्वख्यापनमिति ( २६ )।

अन्यथा निषेधः कालमात्रक इत्यनेनैवैकादशीस्वरूप एव भोजननिषेधः स्यात्। न खादेत् कूर्म्मशूकरा

---

शब्दस्य विशेषपरतायां स्फुटतरयुक्तिमाह वस्तुतस्त्विति, प्रत्यवाय उक्त इति, तथाच न भोक्तव्यमित्यनेन प्रागुक्तव्रतमनूद्य तदकरणे प्रत्यवायकथनसङ्गतिर्निषेधकत्वे प्रत्यवायकथनानन्तरं तस्य वक्तव्यता स्यादितिभावः, पौनरुक्तभिया तदनुवादस्य व्यर्थताभिया। वीप्सया न भोक्तव्यमित्यादि वीप्सापदघटितवाक्येन ख्यापनमनुवादः ( २६ )।

अन्यथा निषेधपरत्वे, स्यादिति दशमीविद्धादिस्थलीयभोजनपरवचनविरोधादनिष्टापत्तिरिति भावः। हरिवासरपदादिति एकादश्युः

वितात्र विशेषोबोध्यः, चक्राङ्कितस्तु यः कूर्म्मो रोहितः कनकप्रभः। वराहः श्वेतवर्णस्तु त्रयमेतन्न भक्षयेदिति समुद्रकरधृतकूर्म्मपुराणवचनात्, वाल्यावस्थायां चक्राङ्कितत्वेन तदानीं कूर्म्मस्याभक्ष्यत्वं। भक्षन्तीत्यनुवृत्तौ हारीतः, महारण्यवासिनश्च वराहांश्चतथैवेति। एवञ्च विवदन्ते अग्राम्यशूकरांश्चेति वशिष्ठोक्तं, श्वेताश्वेततया व्यवस्थितं। कल्पतरुस्तु श्राद्धे नियुक्तानियुक्ततयेति। विष्णूपासकस्यतु सर्व्वथा निषेधो यथा वाराहे भगवद्वाक्यं, भुक्त्वा वराहमांसन्तु यस्तु मामुपसर्पति। वराहो दशवर्षाणि भूत्वा वै चरते वने। यदपि हरिवासरपदादहोरात्राभोजनप्रतीतेर्निषेधः कालमात्रक इत्यनेन नैकादशीक्षणमतिवाह्य भोजनमिति। तदपि न किञ्चित्, यतो हरिवासरपदाद्धरितिथिरेकादश्येव प्रतीयते। तथाच स्कन्दपुराणं, प्रतिपत्प्रभृतयः प्रोक्ता उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्ज्जिताः। भविष्योत्तरं, हिताय सर्व्वलोकानां तिथिमेकादशीं स्वयं। निर्म्ममे स्वशरीरात्तु सेयं वै वैष्णवी तिथिः। अथवा हरिवासरो द्वादश्याः प्रथमः पादस्तत्र पारणं न कुर्य्यात्। तथाच विष्णुधर्म्मोत्तरे। द्वादश्याः

पलक्षितदिनबोधकादित्यर्थः। तत्राभोजनबोधनेऽहोरात्राभोजनस्यैव प्राप्तिरित्यभिप्रायेणाहोरात्राभोजन प्रतीतेरिति। भोजनमितीति उक्तमितिशेषः न किञ्चित्, न युक्तमित्यर्थः। प्रतीयते इति, नत्वेकादशीयुक्तदिनं येनाहोरात्राभोजनप्रतीतिः स्यादितिशेषः, तथाचेति हरिवासरपदस्यैकादशीपरत्व प्रमाणञ्चेत्यर्थः। विष्णुतत्परइति एवञ्चेत्तदेक

प्रथमः पादो हरिवासरसंज्ञितः।. तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः। (२७)

अथैकादशीव्रतं नित्यं काम्यञ्च। गोविन्दमानसो-ल्लास-कृतामहार्णवयोर्भविष्योत्तरे, एकादशीव्रतं नाम नित्यं वा काम्यमेव वा। कथं वा क्रियते तत्तु नियमो-वाव कीदृश इत्यादि युधिष्ठिरप्रश्नमभिधाय, अहन्ते कथयिष्यामि शृणु पाण्डुकुलोद्भव। नित्यमेतद्व्रतं नाम कर्त्तव्यं सार्व्ववर्णिकं। वाञ्छद्भिः सर्व्वदा सद्भिः पुरुषार्थ-चतुष्टयं। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे, इति श्रीकृष्ण-प्रतिवचनमभिहितं, अत्र नित्यमिति श्रव-णान्नित्यत्वं पुरुषार्थचतुष्टयमिति श्रवणात् काम्यत्वञ्च। कालमाधवीये ब्रह्मवैवर्त्तः, इति विज्ञाय कुर्व्वीताव-श्यमेकादशीव्रतं। विशेषनियमाशक्तोऽहोरात्रं भुक्तिव-र्जितः। निगृहीतेन्द्रियः शुद्धोऽसहायोविष्णुतत्परः। उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः। शक्तौ तु कात्यायनः, शक्तिमांस्तु नरः कुर्य्यान्नियमं सविशेषकं। कृत्यकल्पलतायां भविष्यपुराणं, युधिष्ठिरउवाच। एका-दशीव्रतं देव नित्यं वा काम्यमेव वा। तन्मे कथय गोविन्द श्रोतुं कौतूहलं मम। श्रीभगवानुवाच। नित्य-

---

वाक्यतया हरिवासरे न भुञ्जीत इत्यस्यापि पारणपरत्वसम्भव इति, एकादशीक्षणमतिवाह्य भोजनमित्यत्र दोषस्तु प्रागुक्त एवेति बोध्यं (२७)।

एकादशीव्रतस्य नित्यत्वे साक्षाद्वचनमभिधातुमाह अथैकादशीव्रत-

मेतद्व्रतं नाम कर्त्तव्यं सार्व्ववर्णिकं। सर्व्वाश्रमाणां सामान्यं सर्व्वधर्म्मेष्वनुत्तमं। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। एवञ्चैकादशीव्रतस्य नित्यत्वेऽपि शक्तेन तदङ्गतया संयम-पारणादिनियमोऽवश्यमनुष्ठेयः (२८)।

अथ वृद्धिश्राद्धस्याविषयः। ननु व्रतस्य वैदिकत्वेन, नानिष्ट्वा तु पितॄन् श्राद्धैः कर्म्म वैदिकमारभेदिति शातातपवचनादारम्भे कथं न वृद्धिश्राद्धं, उच्यते, नेदं श्राद्धविधायकं गौरवात् किन्तु यत्र कर्म्मणि वचनान्तरप्राप्तं श्राद्धं तत्र पौर्व्वापर्य्यमात्रविधायकमिति। अथैवं, नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते। न सोष्यन्तीजातकर्म्मप्रोषितागतकर्म्मसु, इत्यादिना छन्दोगपरिशिष्टोक्तनिषेधस्यानुपपत्तिस्तत्तत्कर्म्मणि श्राद्धविधायकाभावात्। सोष्यन्ती सोष्यन्तीहोमः स च सोष्यन्तीं शूलायन्तीमासन्नप्रसवां ज्ञात्वा होमः, क्षिप्रसव इत्यस्माद्धातोरिति भट्टभाष्यदर्शनाद्धन्त्यादिः। मैवं तेष्वपि गोभिलेन स्वोक्तगृह्यकर्म्मत्वेन श्राद्धविधानादन्यथा,

मिति। नित्यं प्रत्यवायजनकीभूताभावप्रतियोगि, काम्यं फलजनकं, भुक्तिर्भोजनं, विशेषनियमाशक्त इत्यत्र विशेषपदोपादानात् हविष्याशनादेः सत्त्वमाविष्कृतं, अन्यथा वैष्णवव्रतत्वानुपपत्तेः, तेषामशौचेऽपि कर्त्तव्यत्वस्योक्तत्वाच्च, अतएव परवचने विष्णुतत्परइत्युक्तं सर्व्वधर्म्मेष्वनुत्तममिति काम्यत्वञ्च सूचयति। शक्तेनेति, नित्यं कर्म्म यथाशक्तीतिश्रवणात्, अपिकारात् काम्यतया सुतरामवश्यमनुष्ठेयता (२८)।

एकादशीव्रतस्य वैदिकत्वेन वृद्धिश्राद्धप्रसक्तावाह अथेति, गौरवादिति, विधिकल्पने गौरवात् क्लृप्तविषयत्वेन वचनसार्थक्ये विधेरकल्पनादिति भावः। तदेवोपपादयति यत्रेत्यादि, अष्टकासु साग्निकर्त्तव्ययागविशेषेषु

सर्व्वाण्येवान्वाहार्य्यवन्तीति, अस्यार्थः सर्व्वाण्येव वक्ष्यमाणानि कर्म्माण्यन्वाहार्य्यवन्ति, अन्वाहार्य्यं नान्दीमुखश्राद्धं दक्षिणा च तदुभययुक्तानि। तथाच गृह्यान्तरं, यच्छ्राद्धं कर्म्मणामादौ याचान्ते दक्षिणा भवेत्। अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते। अतएवच्छन्दोगपरिशिष्टकृता यानि पर्य्युदस्तानि तानि सर्व्वाणि गोभिलोक्तानि। अत्र जातकर्म्मणि श्राद्धनिषेधात्तत्र तद्विधायकं वचनं शाख्यन्तरीयं। न चैवं सन्ध्यावन्दनादेर्गोभिलोक्तत्वात्तत्र कथं न वृद्धिश्राद्धमिति वाच्यं, यस्मादथातो गृह्यकर्म्माण्युपदेक्ष्याम इत्यादि पुनर्यज्ञविवाहयोः पुनर्यज्ञविवाहयोश्चेत्यन्तसूत्ररूपगृह्याद्भिन्न एव अथातः सन्ध्योपासनविधिं वक्ष्याम इत्याद्यमावास्यायां सर्व्वममावास्यायांसर्व्वमित्यन्तग्रन्थः सन्ध्यास्नानतर्पणश्राद्धविधायकः। उभयत्रैव शेषसूत्रे द्विर्व्वचनं ग्रन्थसमाप्त्यर्थमिति तद्भाष्यव्याख्यानं। एवञ्च गोभिलानुक्तेष्वप्यन्नप्राशनादिषु यद्वृद्धिश्राद्धं तन्मलमासतत्त्वे मत्स्यपुराणादिवचनाद्विवृतं। तर्हि न श्राद्धे श्राद्धमिष्यत इति पर्य्युदासानुपपत्तिरिति चेत् सत्यं गृह्येऽप्यन्वष्टकादिश्राद्धविधानात्। तस्मादेकादश्यादिव्रते गोभिलगृह्यानुक्तत्वाद्विशेषवचनाभावाच्च न वृद्धिश्राद्धमिति (२९)।

---

श्राद्धे अन्वष्टकादिश्राद्धे। अमावस्यां अमावास्या विहितं पिण्डपितृयज्ञः श्राद्धञ्च, तत्र द्वितीयं अमावस्याश्राद्धं। पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते इति छन्दोगपरिशिष्टात्। पर्य्युदासानुपपत्ति रिति अमावस्यादिश्राद्धस्य पुनर्यज्ञविवाहयोरित्यन्तग्रन्थानुक्तत्वात् (२९)।

अथोपवाससमन्वयः। भविष्ये, उपावृत्तस्य पापेभ्योयस्तु वासोगुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः। उपावृत्तस्य निवृत्तस्य पापेभ्यः पापकर्म्मभ्यः। मैथिलास्तु दोषेभ्य इति पठित्वा दोषेभ्योराग-द्वेष-मात्सर्य्यादि-निषिद्धात्मकाधर्म्मेभ्य इत्यर्थमाहुः। गुणानाह गोतमः, दया-सर्व्वभूतेषु-क्षान्ति-रनसूया-शौच-मनायासो-मङ्गल-मकार्पण्य-मस्पृहा चेति कुर्य्यात्। दयादि-लक्षणान्याह बृहस्पतिः। परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आत्मवद्वर्त्तितव्यं हि दयैवैषा प्रकीर्त्तिता। परे उदासीने। आपत्सु रक्षितव्यन्त्विति-कल्पतरौ पाठः। आत्मवदिति व्यक्तमाह दक्षः। यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता। सुखदुःखानि तुल्यानि यथात्मनि तथा परे। बृहस्पतिः, वाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनोहन्ति स्तौति मन्दगुणानपि। नान्य-दोषेषु रमते सानसूया प्रकीर्त्तिता। अभक्ष्यपरि-हारस्तु संसर्गश्चाप्य निन्दितैः। स्वधर्म्मे च व्यवस्थानं

---

उपवास समन्वय उपवासपदयोगार्थः। वासःस्थितिः सत्तेति यावत्, अनेनोपवासस्य भावरूपत्वं, गुणैःसह सामानाधिकरण्यसम्बन्धेन गुणैर्व्विशिष्टः, भोगोभोजनादि तद्वर्ज्जनमहोरात्रावच्छेदेन। आत्मवदिति तुल्यत्वं स्वेहास्पदतया। तुल्यानीति यथा आत्मसुखे इच्छा तथा परसुखे, यथाआत्मदुःखे द्वेषस्तथा परदुःखेऽपीति, आध्यात्मिके अन्तःकरणे। न कुप्यति दुःखोत्पादकाय न वा हन्ति तं दुःखोत्पादकं यथावुद्धा सा

शौचमेतत् प्रकीर्त्तितं। शरीरं पीड्यते येन सुशुभेनापि कर्म्मणा। अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनं। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः। स्तोकादपि च दातव्यमदीनेनैव चात्मना। अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतं। यथोत्पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना। परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्त्तिता। देवीपुराणं। तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकं। उपवासकृतोह्येते गुणाः प्रोक्ता मनीषिभिः। सर्व्वभोग विवर्ज्जितः शास्त्राननुमतनृत्यगीतादिसुखरहितः। अत मैथिलाः, वृद्धशातातपो भोगविशेषान् प्रतिप्रसूते यथा, गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनं, उपवासेन दुष्येत दन्तधावनमञ्जनं। गौड़ीयस्मृतिः, उपवासे तथा श्राद्धे न खादेद्दन्तधावनं। दन्तानां काष्ठसंयोगोदहत्यासप्तमं कुलं, अतयोगीश्वरः दन्तानांकाष्ठसंयोगोनिषिद्धः पर्णादिना दन्तधावनमिति विरोधं परिजाहारेति वदन्तो नञर्थं व्याचक्रुः ( ३० )।

क्षमा इत्यर्थः, यद्वा सा कोपाद्यभावः। हन्ति अपलपति, अन्यदोषेषु अन्यदोषश्रवणादिषु। अत्यन्तमित्यस्य पीड्यते इत्यनेनान्वयः, तन्न कुर्व्वीतेति अत्यन्तशरीरपीड़ाव्यतिरेकेण शुभकरण मनायास इति यावत्। सन्तुष्टिरस्पृहा। तद्ध्यानमित्यादौ तत्पदं यद्देवताकोपवासस्तत्परं। उपवासकृते उपवासनिमित्ताय। शास्त्राननुमतेति तथाच केशवाग्रे नृत्यगीतवाद्यादिकमित्यादि शास्त्रोक्तं कार्य्यमेवेति। नञर्थं व्याचक्रुरिति उपवासे उपवासदिने एतद्गन्धादिकं न दूष्येतेत्यर्थः ( ३० )।

तत्र, वृद्धशातातपेन, मुखे पर्य्युषिते नित्यं भवत्य प्रयतोनरः। तस्मात् सर्व्वप्रयत्नेन भक्षयेद्दन्तधावनमित्यभिधाय तद्वचनाभिधानेन दोष एवोक्तः। अन्यथा पौनरुक्त्यापत्तेः। अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा। पुण्यके चोपवासे च नित्यमेव विवर्जयेत्, इति हरिवंशात्, मिताक्षरायां, गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनं। व्रतस्थो वर्जयेत् सर्व्वं यच्चान्यद्वलरागकृदित्यनेनानुलेपनादिवलरागकृन्निषेधाच्च। अतएव प्रायश्चित्त विवेककृद्भिः स्वयमुक्तमुपवासेन हेतुनेति। जीमुतवाहनेनापि उपवासे चेति पठित्वा चकारादनुक्तादिष्वपीति व्याख्यातं, तस्माद् गन्धेत्यादिवचनं सर्व्वभोगविवर्जित इत्यस्यैव प्रदर्शकं तेन विलासार्थगन्धादि वर्जनं कार्य्यं। देवलः, उपवासः प्रणश्येत दिवास्वापाच्चमैथुनैः। अत्यये चाम्बुपाने च नोपवासः प्रणश्यति। उपवासोऽपि नश्येतेति कल्पतरुपाठे अपिनाऽन्यद्व्रतं समुच्चीयतइति विशेषः। अन्नैर्व्यूतैः। अत्यये नाशे सम्भाव्यमाने। मैथुने विशेषमाह देवलः। उपवासे तथा यौनं हन्ति सप्त कुलानि वै। स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः संकथनादपि। ब्रह्मचर्य्यं विपद्येत न दारेष्वृतुसङ्गमात्। संप्रेक्षणात् संकथनादित्यत्र सरागत्वं संशब्दस्यार्थः साहचर्य्यात् स्पर्शेऽपि तथेति प्रायश्चित्तविवेकः ( ३१ )।

---

अन्यथा उपवासदिने दन्तधावनस्य कर्त्तव्यतापरत्वे, गन्धादिकं न दूष्येत, इति यदुक्तं तत्राह अञ्जनमित्यादि (३१)।

कात्यायनोऽपि रेतःसेकात्मक भोगमृतेऽन्यत्र चयः स्मृतः। तथाच दक्षः; स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं। संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। अनुरागात् कृतञ्चैव ब्रह्मचर्य्यविरोधकं। याज्ञवल्क्यः, षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्। ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रश्च वर्ज्जयेत्। स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः काल ऋतुः स च रजोदर्शनमारभ्य षोड़शाहोरात्रात्मकः, तस्मिन्नृतौ युग्मासु समासु, रात्रिग्रहणाद्दिवसप्रतिषेधः। संविशेत् गच्छेत् पुत्रार्थमेवंगच्छन् ब्रह्मचारी भवति, अतोयत्र ब्रह्मचर्य्यं श्राद्धादिषु चोक्तं तत्र गच्छतोऽपि ब्रह्मचर्य्यस्खलनदोषोनास्ति पर्व्वाण्याद्याश्चतस्रश्च वर्ज्जयेदिति मिताक्षरा। अत्र श्राद्धवासरे यदभिगमनमुक्तं तदयुक्तं कल्पतरुधृतवचनविरोधात्। यथा श्राद्धानन्तरं शङ्खलिखितौ, ऋतुस्नातां तदहोरात्रं परिहरेत् नार्त्तवे दिवा मैथुनं व्रजेत् क्लीवाश्चाल्पवीर्य्याश्च दिवा प्रसूयन्तेऽल्पायुष-श्च-तस्मादेतद्विवर्जयेत् प्रजाकामः पितॄणां नो ह वै तन्तुं विच्छिन्द्यात् प्रयतेताच्छेदाय येनाप्रतिष्ठस्तस्मात् प्रतिष्ठाकामः प्रजया प्रतिष्ठेतेति। नो निषेधे, तन्तुं सन्तानं, अच्छेदाय अविच्छेदाय सन्तानस्य, येन यस्माद-प्रतिष्ठः प्रजा-

• रेतःसेकात्मकं अपत्योत्पादनार्थं ऋत्वभिगमनात्मकं भोगं ऋते·

नुत्पत्त्या अप्रतिष्ठः सन् पतति तस्मात्तदुत्पत्त्यर्थं यतितव्यं ( ३२ )।

विष्णुपुराणं। श्राद्धे नियुक्तोभुक्त्वा वा भोजयित्वा नियोज्य च। व्यवायी रेतसोगर्त्ते मज्जयत्यात्मनः पितॄन्। तेन ऋतौ सकृद्गमनादृतादिषु न दोषः स्यात्। एतञ्च पुत्रोत्पत्तिपर्य्यन्तं, तथाचाचारमाधवीये कूर्म्मपुराणं, ऋतुकालाभिगामी स्याद्यावत् पुत्रोन जायते। ऋणा-

---

भोगं विना [illegible] स्वसुखमात्रतात्पर्य्यके स्त्रीस्पर्शनादौ चयः ब्रह्मचर्य्य-चयः ( ३२ )।

विष्णुपुराणवचने श्राद्धइत्यस्य नियुक्त इत्यादि चतुर्ष्वन्वयः। आत्मनः आत्मानं पितॄंश्चेत्यर्थोवोध्यः। श्राद्धे नियुक्तः प्रतिनिधीभूतः श्राद्धं कृत्वेति पूरणीयं। यद्वा भोजयित्वेत्यनेनानुषङ्गजान्वयः। श्राद्धान्नं भुक्त्वा अत्र यथोक्तब्राह्मणः कर्त्ता, भोजयित्वा पुत्रादिः स्वयमित्यर्थः, नियोज्य प्रति-निधिं श्राद्धे नियोज्य श्राद्धं निर्व्वाह्येति शेषः, इतिवाक्यचतुष्टयं व्यवायीत्यादिवाक्येऽन्वितं प्रतिनिधिकर्त्तृकश्राद्धस्थले मुख्याधिकारिणो-व्यवायनिषेधश्च। ऋतुस्नातां तदहोरात्रं परिहरेदिति, श्राद्धानन्तरशङ्ख-लिखितवचनेन, दुर्म्मतिर्मैथुनं यस्तु कुरुते पितृवासरे। रेतोभोजिन एव स्युः पितरस्तस्य सोऽपि चेति क्रियायोगसारवचनेन च सामान्यतः श्राद्धदिननिषेधेन सूचनात्। न च मुख्यनियुक्तयोरुभयसाधारण्येन जनोभोजयित्वा व्यवायीत्युक्त्यैव सामञ्जस्ये पृथगुपादनं किमर्थमिति वाच्यं तयोर्दोषतारतम्याय पृथगुपादानात् स्वतन्त्रेच्छस्य मुनेः पर्य्यनु-योगानर्हत्वाच्च। श्राद्धं कर्त्तुर्भोक्तुश्च श्राद्धपूर्व्वदिने व्यवायवर्ज्जनं श्राद्धा-ङ्गमिति तद्दिने तयोर्व्यवाये श्राद्धहानिर्व्वैगुण्यं वेति विवेच्यं। यद्वा नियुक्तो निमन्त्रितो भुक्त्वेति वाकारान्निमन्त्रणं विनाश्राद्धोत्तरं तदन्नं भुक्त्वेति नियोज्य भोजयित्वेति व्याख्यान्तरं वाकारात् निमन्त्रणादि कमन्तरेण कुशमयब्राह्मणपक्षलाभात् निमन्त्रणं विना श्राद्धं कृत्वेति वाक्यान्तरं। अथवा नियुक्तोनिमन्त्रितः श्राद्धपूर्व्वं व्यवायीत्यन्वयः,

प्रकरणार्थं हि पुत्रस्योत्पादनश्रुतिः। चतुर्थाहवर्ज्जनं प्रशस्तपुत्रार्थं चतुर्थीप्रभृत्युत्तरोत्तरां प्रजानिःश्रेयसार्थमित्यापस्तम्बवचनात्, तदनर्थिनस्तु महाभारते, स्नातां

नियोजय निमन्त्य श्राद्धपूर्व्वं व्यवायीति चार्थान्तरं निमन्त्रणन्तु वा श्राद्धे आरम्भः स्यादितिश्रुतिरित्यनेन निमन्त्रणस्यारम्भरूपत्वात् तदनन्तरं विशेषतो व्यवायनिषेधः श्राद्धपूर्व्वमिति पूरणात् निमन्त्रणोत्तरं दैवात् श्राद्धासम्पत्तौ तद्दिने व्यवायिनो न दोषः, अत्र कर्त्तृद्वयमभिप्रेत्य चकारद्वयं सुसङ्गतं चकारद्वयेन निमन्त्रणपूर्व्वं तयोर्व्यवाये दोषसूचनं, यद्वा निमन्त्रणपूर्व्वं व्यवायवर्ज्जनस्याङ्गत्वेपि तद्दानावङ्गहानिमात्रं उक्तसमुच्चायकश्चकारः एतन्निन्दार्थवादश्च प्रायश्चित्तावश्यकत्वाय नतु श्राद्धासिद्धिः, परन्तूभयदिने व्यवायवर्ज्जनस्याङ्गत्वात्तदभावे फलवैगुण्यं, प्रतिनिधेश्च कर्त्तुः प्रतिरूपतया नियतव्यवायवर्ज्जनं, तद्दावश्यकं प्रतिनिधिनियोगकर्त्तुर्व्यवायवर्ज्जनादिकं नाङ्गमिति तदभावे चतिविरह इति दिक्। व्यवायः क्रियानिष्पत्तिरूप स्तत्रैव व्यवायपदरूढ़ेः एवञ्चाध्वनीनोभवेदश्वः पुनर्भोजी तु वायसः। द्यूतकृन्नेत्ररोगी स्यात् पाठादायुः प्रहीयते। दानं निष्फलतामेति प्रतिग्राही दरिद्रतां। कर्म्मकृज्जायते दासो मैथुनी शूकरो भवेत्। इति वायुपुराणवचने मैथुनपदं स्त्रीस्मरणादिपरं, एतन्मैथुनमष्टाङ्गमित्यनेन तत्रापि मैथुनपदगौणतास्वीकारात् तत्राष्टाङ्गत्वमष्टविधत्वं तेन तदेकस्यापि ब्रह्मचर्य्यघातकत्वं तत्र स्मरणादिसप्तानामनुरागकृतत्वे दोषत्वं नान्यथा क्रियानिष्पत्तेस्तु सर्व्वथैव दोषत्वं अनुरागत्वञ्च सम्भोगेच्छाविशेषाधीनतत्साधनताज्ञानविशेषत्वं अधीनत्वञ्च साक्षात् परम्परया ग्राह्यं तेन सम्भोगेच्छाविरहदशायामपि तदधीनज्ञानजसंस्कारजमपि ज्ञानमनुरागपदवाच्यं ज्ञेयं न चाष्टाङ्गमैथुन एवानुरागकृतत्वविशेषणं अनुरागकृतस्यैतदित्यनेनोक्तमिति वाच्यं तत्र क्रियानिष्पत्तावनुरागकृतत्वमुक्तकालीनेतरत्रेत्यत्र तात्पर्य्यात् श्राद्धस्थले ऋतुकालीनमपि त्याज्यमित्युक्तं, अत्र मिताक्षरायां श्राद्धदिने ऋत्वभिगमनमुक्तं तन्निरवकाशस्थलपरं अतएव शङ्खलिखितवचने तदहोरात्रं परिहरेदित्युक्तं सम्भावित

चतुर्थदिवसे रात्रौ गच्छेद्विचक्षणः। शङ्खः, शुद्धा भर्त्तुश्चतुर्थेऽह्नीति (३३)। अथैकादशीभोजननिन्दा—

विष्णुधर्म्मोत्तरे, एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। एकादश्यां हि भुञ्जानो विष्णुलोकाच्च्युतो भवेत्। तथा, प्रतिग्रासं स भुङ्क्ते तु किल्विषं श्वानविट्समं। एकादश्यां द्विजश्रेष्ठ यो भुङ्क्तेऽन्नं द्विजोमनाक्। भविष्ये, यानि कानि च पापानि ब्रह्महत्यादिकानिच। अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे। अघं स केवलं भुङ्क्ते यो भुङ्क्ते हरिवासरे। तद्दिने सर्व्वपापानि भवन्त्यान्नाश्रितानि च। सनत्कुमारः, मद्यपानान्मुनिश्रेष्ठ पातेव नरकं व्रजेत्। एकादश्य-

रात्रान्तरगमनस्थलाभिप्रायेणेति बोध्यं। पितृभिः सह मज्जतीति अत्रेदं तत्त्वं (३३)।

यस्तु वासोगुणैः सहेत्यत्र वासपदमहोरात्राभोजनं लक्षयति अन्यथाऽव्यावर्त्तकतापत्तेः, एवञ्चाहोरात्राभोजनमेव मुख्यविशेष्यतयोपवासपदार्थः, दोषवर्ज्जनं गन्धमाल्यादिभोगवर्ज्जनञ्च वैधोपवासेऽङ्गं गन्धमाल्यादेरेव भोगत्वेन विवरणात् अतएव उपवासपदाहोरात्राभोजनपदयोः पर्य्यायतामभिप्रेत्य एकादश्यां न भुञ्जीत इति क्वचिन्निर्दिष्टः क्वचिच्च एकादश्यामुपवसेदिति, स चोपवासः साङ्गश्चेद्व्रतं तत्र च सर्व्वाङ्गोपेतत्वे मुख्यफलकः सर्व्वत्रैकादश्यां भोजननिन्दयाहोरात्राभोजनस्यैव नित्यत्वं बोधयति। फलजनकत्वाच्च न निषेधरूपता विष्णूद्देशमन्तरेण नियममन्तरेण च केवलाहोरात्राभोजने जातेऽपि भोजननिबन्धनं पापं नोत्पद्यते किन्तु व्रताकरणनिबन्धनं पापमुत्पद्यते व्रतस्य नित्यत्वेन बोधनात् पुण्यमपि स्वल्पं जायते प्रधानस्य उपवासस्य कृतत्वात् अतएव सर्व्वत्र भोजनस्यैवातिशयनिन्दाकृतेति स्मर्य्यत इति, दोषश्रुतौ नित्यत्वं वचनलब्धं नातिक्रमेत् न त्यजेत् इत्युभयत्रापि नञा

न्नकामस्तु पितृभिः सह मज्जति। अत्र दोषश्रुतेर्नित्यत्वं अतएव यदकरणे प्रत्यवायस्तन्नित्यमित्युक्तं। तथाच, नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्। उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात्। फलाश्रुतेर्व्वीप्सया च तन्नित्यमिति कीर्त्तितं। इत्यष्टधा नित्यत्वसाधकं। अतएव माधवाचार्य्येणावैवोपवासे सर्व्वमुदाहृतं ग्रन्थगौरवभयान्न लिखितं। यत्तु फलाश्रुतेर्नित्यत्वमभिहितं तत् फलाश्रुतौ विश्वजिन्न्यायात् स्वर्गः कल्प्य इत्यनेन विरुध्येतेति ( ३४ )।

स च न्यायोयथा, विश्वजिता यजेतेत्यादि श्रूयते, अत्राश्रुताधिकारं लिङ्गप्रकरणालब्धाधिकारञ्चोदाहरणं, निषेधे हि सामर्थ्यात् प्रवृत्तक्रियोऽधिकारी लभ्यते

बलवदनिष्टाननुबन्धित्वाभावस्य बोधनाद्वाचनिकं, नित्यादिपदघटिते तु तत्पदवैयर्थ्यभिया नित्यत्वं कल्प्यं फलाश्रवणस्थले च इष्टसाधनताज्ञानं विना प्रवृत्त्यन्यथानुपपत्त्या प्रत्यवायानुत्पत्तिरूपेष्टसाधनत्वकल्पनान्नित्यत्वं (३४)।

अत्र न्याय इति विश्वजिदधिकरणन्याय इत्यर्थः, विश्वजिता यजेतेतीति, एतद्वाक्यमुदाहरणमित्यन्वयः, उदाहरणं अधिकार्य्यध्याहारे दृष्टान्तः, तथाच यद्यदश्रुताधिकारत्वे सति लिङ्गप्रकरणालब्धाधिकारं वाक्यं तदध्याहार्य्याधिकारकं, यथा विश्वजिता यजेत इति श्रुतिवाक्यमित्यर्थः अश्रुताधिकारमित्यादिद्वयं तद्वाक्यविशेषणं अश्रुतोऽधिकारो यत्र तदधिकारबोधकपदाभावात् लिङ्ग्यते व्यज्यतेऽनेनेति लिङ्गं ज्ञापकं तेन प्रकरणेन चालब्धाधिकारञ्च अत्र लिङ्गप्रकरणयोरभावज्ञापनाय, लिङ्गप्रकरणलब्धाधिकारस्थलमाह निषेधे हीति, सामर्थ्यादश्रुताधिकारत्वे सति कालविशेषावच्छिन्नतयानुत्रवैदिकलिङर्थान्वितनञ्पदतात्पर्य्यविषयीभूतत्वादिरूपलिङ्गात् प्रवृत्तिमत्साध्यत्वस्य निषेधे लाभात्। प्रवृत्तक्रियः

अङ्गविधिषु प्रकरणादिति न चिन्त्योऽधिकारी, एवं सतीह सन्देहः किं नियोज्योऽध्याह्रियतां नवेति (३५)।

अत्र च लोके द्वारमित्यादौ क्रियया विना कारकाकाङ्क्षायामन्विताभिधानापर्य्यवसानाद्युक्तोऽध्याहारः। इह तु विषयेण कार्य्यस्यान्विताभिधानपर्य्यवसानादनध्याहारे प्राप्ते, उच्यते अत्राप्यभिधेयापर्य्यवसानं द्वाराभि-

प्रवृत्तयोग्याधिकारी लभ्यते इत्यर्थः, यद्वा सामर्थ्यात् निषिध्यमानक्रियायोग्यत्वरूपलिङ्गात् लभ्यतेऽनुमीयते, न चिन्त्यो प्राप्तः, नियोज्यः विधिनियोज्यः विधिना नियोज्यते प्रवर्त्त्यते विधिजन्यप्रवर्त्तकज्ञानवान्, प्रवर्त्तकज्ञानं अमुकफलकामनावतो ममेदं कार्य्यमितिवोधः, तत्र विधिना कार्य्यत्वं वोधनीयं तदेकदेशशक्तौ फलविशेषकामनाविशिष्टस्यान्वये तदुत्तरकालं आत्मनः कामनावत्त्वं प्रतिसन्धाय कामनावतो ममेदं कार्य्यमिति प्रवर्त्तकज्ञानं भवतीति परम्परया फलकामनावान् विधिनियोज्यः सोऽत्राधिकारी नवेति सन्देहः अध्याक्रियतामिति, सोऽत्राध्याहार्य्योनवेति सन्देहः (३५)।

लोके लौकिके कारकाकाङ्क्षायां कारकपदोत्थापितक्रियान्वितस्वार्थवोधेच्छायां सत्यामिति शेषः, क्रियया विना क्रियोपस्थितिं विना अन्विताभिधानापर्य्यवसानात् आकाङ्क्षितशाब्दवोधानिर्व्वाहात्, अध्याहारः पिधेहीत्यादिक्रियापदाध्याहारः इह तु विश्वजिता यजेतेत्यादौतु, तु भिन्नक्रमे, विषयेण अन्वययोग्येन विश्वजिदादियागरूपेण कार्य्यस्य लिङर्थापूर्व्वस्य अन्विताभिधानपर्य्यवसानात् अन्विताभिधानेनान्वयवोधेन विश्वजिद्यागविषयकं कार्य्यमित्याकारकेण पर्य्यवसानात्, आकाङ्क्षितशाब्दवोधसमाप्तेः अनध्याहारे फलविशेषकामादिरूपनियोज्यस्य तद्वोधकपदस्य वाऽनध्याहारे प्राप्ते पूर्व्वपक्षिते। उच्यते सिद्धान्त इति शेषः। अत्रापीति अभिधेयापर्य्यवसानं आकाङ्क्षितशाब्दवोधानिष्पत्त्या आकाङ्क्षाया अनिवृत्तिः। द्वारेति द्वारमित्यत्र पिधानाद्यध्याहारं विना द्वारस्य अभिधानापर्य्यवसानं आकाङ्क्षाया अनिवृत्तिरिवेति अभिधेयापर्य्यवसानद्वारा अभिधानपर्य्यवसानमिवेति पाठे सुगमं। नियोज्या-

धानापर्य्यवसानमिव, कार्य्यं हि साध्यत्वेन कृतिनिरूप्यं नरव्यापाररूपा च कृतिः सा यथा स्वसाध्यधात्वर्थनिरूप्या एवं स्वाश्रयनरनिरूप्या च तदेव कृतेः कर्त्तापि कार्य्ये कृतिद्वारा स्वसम्बन्धित्वेन निरूपक इति तमन्तर्भाव्यैव नियोगधीः ( ३६ )।

एवञ्च रथोगच्छतीत्यादावाख्यातस्य व्यापारेलक्षणा। तदुक्तं भट्टपादैः, स्त्रीत्वाभावेऽपि शब्दादौ टावादिप्रत्ययोयथा। प्रयुज्यते तथाख्यातं यत्नाभावेऽप्यचेतने। वोढ्रश्वादिगतं यत्नं रथादावुपचर्य्यया। उपपाद्यः प्रयोगोऽत्र मुख्यार्थानुपपत्तितः। न चासाववोद्धात्मनः कार्य्येण सम्बन्धः स्वतस्तेन सम्बध्यते स्वसम्बन्धिकार्य्यबोद्धा च नियोज्य, इति सोऽध्याहार्य्य इति स्थिते चिन्ता

ध्याहारनिवर्त्त्याकाङ्क्षां दर्शयति कार्य्यं हीत्यादि कृतिनिरूप्यं कृतिसाकाङ्क्षं कार्य्ये ज्ञाते किमस्य साधनमित्याकाङ्क्षोदयात् नरव्यापाररूपेति, कृतिश्च नरसमवेत नरकार्य्यत्यर्थः। सा कृतिः स्वसाध्यधात्वर्थनिरूप्या स्वसाध्यत्वरूपसम्बन्धशालिधात्वर्थसाकाङ्क्षा एवं समवेतकार्य्यत्वेन स्वाश्रयनरनिरूप्या स्वाश्रयनर साकाङ्क्षा। कृतेरित्यस्य निरूपक इत्यनेनान्वयः कृतिपदं कार्य्यपरं एवञ्च कार्य्यकृतिकर्त्तॄणां परस्परसम्बन्धिनां परस्पराकाङ्क्षा दर्शिता तं कर्त्तारं नियोगधीः कार्य्यान्वित-कृतिरूपव्यापारानूयबोधः (३६)।

एवञ्च कर्त्तुर्व्यापारद्वारा कार्य्यनिरूपकत्वे च व्यापारलक्षणा अन्यथा कर्तृक्रिययोर्व्यापारसाकाङ्क्षत्वेन व्यापारोपस्थितिं विना शाब्दबोधा पर्य्यवसानात्। स्त्रीत्वाभावेऽपि टावादिप्रत्ययवाच्य योन्यादिमत्त्वरूप स्त्रीत्वाभावेपि शास्त्रीयस्त्रीत्वादौ लक्षणया टावादिप्रत्ययो यथा प्रयुज्यत इत्यर्थः, शास्त्रीय स्त्रीत्वञ्च शास्त्रकारीय स्त्रीपदपरिभाषाविषयत्वं। यत्नाभावेऽपि व्यापारलक्षणया प्रयुज्यत इत्यर्थः। मतान्तरमाह रथादावुपचर्य्यया-स्वसमवायश्रयाश्रयत्वलक्षणपरम्परासम्बन्धान्वितमभिप्रेता, मुख्या-

किं सर्व्वेषामध्याहार उत एकस्येति तत्राविशेषात् सर्व्वेषामिति प्राप्ते, उच्यते, एकेनाकाङ्क्षाशान्तेरेकस्यैवेत्येवं स्थिते विचारः किं यस्य कस्यचिन्नियोज्यस्याध्याहार उत स्वर्गकामस्येति तत्राविशेषादनियमे प्राप्ते (३७)।

उच्यते, स स्वर्गः स्यात् सर्व्वान् प्रत्यविशिष्टत्वा-

र्थानुपपत्तितः मुख्यार्थस्य साक्षात् सम्बन्धेन वाधात् यद्वा तात्पर्य्यविषयबोधानुपपत्तेरिति, ननु भवतु कर्त्राकाङ्क्षया शौचादिमान् अध्याहार्य्य इत्यत आह नचेति नहीत्यर्थः अबोद्धात्मनः प्रवर्त्तकज्ञानरहितस्य स्वतः स्वरूपतः कार्य्येण सम्बन्धः कृतिसाध्यत्वादिरूपस्तेन स्वतः सम्बन्धाभावेन, यद्वा स्वत इत्यनन्तरं अत इति पूरणीयं स्वतःसम्बन्धाभावादिति तदर्थः तेन कार्य्येणेति, स्वसम्बन्धिकार्य्यबोद्धा च स्वसम्बन्धितया स्वकृतिसाध्यतया कार्य्यस्यापूर्व्वस्य यागादेश्च बोद्धा च नियोज्यः फलविशेषकामनावान् सम्बध्यते इत्यनेनास्यान्वयः, सम्बध्यते शाब्दबोधेऽन्वीयते, तथाच फलविशेषकामस्याननुये कार्य्याननुष्ठानप्रसङ्ग इति भावः, स फलविशेषकामनावान्, यद्वा ननु नियोज्यान्वयस्वीकारेऽपि कथं तदध्याहार इत्यत आह नचेति, अबोद्धात्मन आकाङ्क्षितस्यात्मनः कर्त्तुः कार्य्येण सम्बन्धःकृतिसाध्यत्वरूपः स्वसम्बन्धिकार्य्यबोद्धा नियोज्यस्य स्वतः प्रागुपस्थितिं विना तेन कार्य्येण सम्बध्यते इति स नियोज्योऽध्याह्रियत इत्यर्थः। इदमुपलक्षणं फलविशेषकामस्यानध्याहारे फलविशेषस्यानुपस्थितौ लिङर्थतया योग्यतारूपत्वेन वा फलविशेषात्मकेष्टसाधनत्वस्य यागेऽलाभात् प्रेक्षावतां यागे प्रवृत्तिर्न स्यादिति विधेरननुष्ठानलक्षणाप्रामाण्यापत्तिरिति। इति स्थिते इति सिद्धे नियोज्याध्याहारे चिन्ता संशयः सर्व्वेषां सकलफलकामानां एकस्य एकफलकामस्य। विचारः विकल्पः। अविशेषात् विनिगमकाभावात् (३७)।

उच्यते इति, नियोज्यविशेषणतया यत्कल्प्यं फलं स स्वर्गः सर्व्वान् सुखविशेषान् प्रत्यविशिष्टत्वात् सकलसुखविशेषनिरूपितस्य विशिष्टत्वस्य विशेषस्य वैलक्षण्यस्याभावात् यद्वा सर्व्वान् प्रत्यविशिष्टत्वात् सकलसुखनिरूपितसाजात्यादिति। तथाच फलान्तरेषु यादृशं सुखं तत्सजातीय-

द्विति जैमिनिसूत्रात् स्वर्गकामएवाध्याहार्य्यः विशेषोहि न गम्यते पुरुषाणां सुखाभिलाषित्वात् दुःखनिवृत्तेरपि तत्रैवान्तर्भावात् दुःखनिवृत्तिस्तु न सुखाविना भूता सुषुप्तौ सत्यामपि तस्यां सुखजन्मादर्शनात्। अनवच्छिन्नसुखस्य स्वर्गत्वात् तस्य च सर्व्वसुखविशेषान् प्रत्य-

सुखानां स्वर्गे सम्भवादितिसूत्रार्थं विवृणोति विशेषोहीति, स्वर्गकल्पने विनिगमकं हीत्यर्थः। सुखाभिलाषित्वात् अन्येच्छानधीनतया सुखे-षूत्कटेच्छावत्त्वात्, ननु दुःखाभावेऽपि स्वतइच्छा भवतीति तत्र कथं नोत्कटेच्छा इत्यत आह दुःखनिवृत्तेरपीति, तत्रैव सुख एवान्तर्भा-वात् सुखे सत्यपि सत्त्वनियमात् न सुखाविना भूता सुखंविना तिष्ठतीति, ननु तावता स्वर्गे कथमिच्छा तत्राह अनवच्छिन्नेति अनव-च्छिन्नत्वमपि स्वर्गकल्पने विनिगमकं वोध्यं केचित्तु सूत्रार्थमेवमाहुः सर्व्वान् पुरुषान् प्रति अविशिष्टत्वात् स्वतइच्छाविषयत्वेनाविशेषादिति। तदुक्तमिति दुःखानवच्छिन्नसुखस्य स्वर्गत्वमुक्तमित्यर्थः। न दुःखेन सं भिन्नं स्वावच्छेदकशरीरावच्छेदेन स्वसमवायिसमवेतत्वसम्बन्धेन दुःख-वद्भिन्नं न च यत्र क्षितिक्षणावस्थायिखण्डशरीरावच्छेदेन सुखमेवोत्-पन्नं न तु दुःखं तदनन्तरं तच्छरीरविनाशेन तदवयवारब्धशरीराव-च्छेदेन दुःखमुत्पन्नं यस्य तस्य तत्खण्डशरीरावच्छिन्नसुखस्यापि स्वर्ग-त्वापत्तिरिति वाच्यं, स्वावच्छेदकशरीरपदेन स्वावच्छेदकवृत्तिशरीरत्व-व्याप्यजातिमतोविवक्षणात् स्वावच्छेदकशरीरवृत्तिद्रव्यत्वादिकमादाया-सम्भववारणाय शरीरत्वव्याप्यत्वं जातिविशेषणं तादृशी जातिश्चावस्था-भेदेन स्थूलकृशशरीरवृत्तिदेवदत्तत्वादिरूपा, एवञ्च निरुक्तखण्डशरीरस्य तत्पूर्व्वापरकालीनतत्पुरुषीय दुःखावच्छेदकशरीरवृत्तिशरीरत्वव्याप्य-जातिमत्त्वात् न तदवच्छेदेनोत्पन्नसुखेऽतिव्याप्तिः। न च ग्रस्तमनन्तर-मिति अनन्तरं शरीरप्राप्त्यनन्तरं न च ग्रस्तं सुखाभावावच्छेदकशरीराव-च्छिन्नभिन्नं शरीरोत्पत्तिकाले स्वर्गीयशरीरे सुखाभावावच्छेदकत्वेनासम्भव-वारणाय शरीरप्राप्त्यनन्तरमिति स्वाश्रयपुरुषसम्बन्धवैशिष्ट्यावच्छेदेन सुखाभावावच्छेदकशरीरावच्छिन्नं यत्तदन्यदिति पर्य्यवसितं स्वपदं भेद-

विशिष्टत्वात् विशेषे च मानाभावात् स्वर्गएव नियोज्य-विशेषणं स्यादित्युत्तरमीमांसायां कल्पतरुः । तदुक्तं, यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरं । अभिलाषोपनीतं यत्तत् सुखं स्वःपदास्पदमिति । तस्मात् फलाश्रुतिमात्रात् कथं नित्यत्वमिति चेत्, उच्यते, फलाश्रुतौ नित्यप्रकरणे नित्यत्वं काम्यप्रकरणे काम्यत्वमिति । एवञ्चैकादशीव्रतस्य नित्यत्वात् किञ्चिदङ्गवैकल्येऽपि प्रधानोपवासादेराचरणं यावज्जीवाधिकरणन्यायात् (३८) ।

प्रतियोगिपरं एतेन स्वर्गशरीरे सुखायोगव्यवच्छेदलाभः । अभिलाषोपनीतं अभिलाषमात्रेणोपनीतमुत्पन्नं न तु प्रयासेन । न च वनितादिसम्भोगजनितसुखस्य वनिताद्यधीनत्वेन कथमभिलाषमात्रोपनीतत्वं स्वर्गसुखेषु इति वाच्यं, वनितादेरप्ययत्नलभ्यत्वात् स्वर्गजनकादृष्टस्य प्रतिबन्धकत्वादेवतन्नान्तरीयकदुःखादेरनुत्पत्तिरतएव न तत्र पातभीरुत्वशङ्का । दुःखमपीति यद्यप्येतत्त्रितयैकतमस्य स्वर्गपदार्थतावच्छेदकत्वसम्भवस्तथापि कामनाया औत्कव्यप्रयोजकतया मिलितस्य धर्मत्रयस्यैव स्वर्गपदार्थतावच्छेदकत्वात् एवं दुःखासंभिन्नसुखमुद्दिश्य यागादौ कृते विच्छेदेन तादृशसुखोत्पत्त्यापि कामनाविषयसिद्ध्यापत्तिरेवं प्रथमतः सुखं तदव्यवहितक्षणे दुःखं तदव्यवहितक्षणे सुखमितिरीत्या सुखधारासम्पत्त्यापि द्वितीयविशेषणविशिष्टस्य सम्भवस्तथाऽभिलषितसुखानुत्पत्त्या दुःखानवच्छिन्ननिकृष्टसुखधारा स्यादिति विशेषणत्रयोपादानमिति । नित्यप्रकरणे नित्यत्वमिति नित्यप्रकरणीयत्वेन लिङ्गेन नित्यत्वानुमानात् नित्यप्रकरणीयवृत्तित्वरूपसम्बन्धवत्तया ज्ञानानित्यत्वोपस्थित्या विध्यर्थकार्य्येऽन्वया इतिभावः । अत्र शुचितत्कालजीवनादिकं यथायोगमधिकारिविशेषणतया नियोज्यतावच्छेदकं बोध्यं काम्यत्वमिति न च सन्निहितपठितकर्म्मान्तरफलमेवानुषङ्गेण विश्वजिद्यागेऽस्त्वेतु किं स्वर्गं कल्पनयेति वाच्यं तत्फलस्य कर्म्मान्तरेणैव विश्वजिताजमने विश्वजिता यजेतेत्यत्र वाकारकल्पनेन विकल्पार्थतापत्तेरिति (३८) ।

सच न्यायोयथा। यावज्जीवमग्निहोत्रं जुहुयादिति श्रूयते, तत्र किं सर्व्वाङ्गोपसंहारेणैवाधिकार उत यावज्जीवपदेन यावद्भिः शक्तोत्युपसंहर्त्तुं यदा तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्व्वन्नधिकरोतीति संशयः। तत्र सर्व्वाङ्गोपेतस्य प्रधानस्य फलसाधनत्वादङ्गवैकल्ये फलानुदयात् सर्व्वाङ्गोपसंहारइति पूर्व्वपक्षः। अत्र सिद्धान्तः, सायं प्रातर्जुहोतीति श्रुतेः सायंप्रातःकालावच्छिन्नं जीवनमग्निहोत्रस्य निमित्ततया श्रूयते नत्वङ्गानां, सति निमित्ते नैमित्तिकमवश्यंभावि अन्यथा निमित्तत्वासम्भवात्। अतोऽशक्याङ्गपरित्यागेन प्रधानं कर्त्तव्यं तावतैव शास्त्रवशात् फलसिद्धिरिति। अतएव नित्यनैमित्तिकाधिकारे श्रीधरस्वामिधृता श्रुतिः, यथाशक्त्यात्तथा

उपसंहारः समग्रता, अधिकारः फलजनकत्वं, फलञ्च प्रत्यवायानुत्पादादि।

यावज्जीवपदेन यावज्जीवपदसमभिव्याहारेण अन्यथा यावज्जीवकरणेऽङ्गैकस्याप्यवश्यभावित्वेन यावज्जीवं सर्व्वाङ्गसम्पन्नाग्निहोत्रस्याशक्यानुष्ठानत्वात् तत्राप्रवृत्तिप्रसङ्ग इति भावः। अधिकरोति फलभागीकरोति फलसाधनत्वात् फलसाधनत्वेन श्रुतत्वात्। सर्व्वाङ्गोपसंहार इति, नियतकर्त्तव्य इतिशेषः, जुहोतीति, होम एवात्र बोध्यते नत्वङ्गसाकल्यं यावज्जीवमग्निहोत्रं जुहोतीत्युत्पत्तिविध्युत्थापिततिकर्त्तव्यताकाङ्क्षायां प्रथमतः प्रधानतयोपन्यस्ततया सायं प्रातर्जुहोतीति श्रुत्या सायं प्रातःकालावच्छिन्नजीवनसहकृतस्य होमस्य फलं प्रति निमित्ततावगमादितिभावः। नैमित्तिकं फलं। निमित्तत्वासम्भवात् व्यभिचारेण हेतुत्वासम्भवात्, अङ्गविधिस्तु तस्यैव फलप्रकर्षाय अतएव शक्याङ्गमवश्यमनुष्ठीयते। अतएव प्रधानसिद्धौ फलसिद्धेरेव। यथाशक्नुयादिति, एतेन शक्याङ्गस्यावश्यकत्वमुक्तं, यथा कथञ्चिदित्यस्य कार्य्याणीत्यत्रान्वयः,

कुर्य्यादिति। बौधायनोऽपि स्मरति, यथाकथञ्चिन्नित्यानि शक्यवस्तुनिरूपितः। येन केनापि कार्य्याणि नैव नित्यानि लोपयेत्। शक्यं वस्तु निरूपितं येन स तथा। अत्र प्रथमा न लोपयेदित्यपेक्षया, प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशत इति न्यायात्, अतएवाताल्लाशक्तौ गौतमः, मनसा चैव सम्यगाचारमनुपालयेदापत्कल्प इति। तस्मात् सायंप्रातःकालावच्छिन्नजीवन्मात्रेऽग्निहोत्रहोमो विधीयते। योगियाज्ञवल्क्योऽपि, सर्व्वावस्थोऽपि योविप्रः सन्ध्योपासनतत्परः। ब्राह्मण्यात्तु न हीयेत अन्त्यजन्मगतोऽपिवा। सर्व्वावस्थोऽपि निन्दितसेवादिकार इति मिताक्षरा।

येन केनापि प्रतिनिध्यादिनापि शक्यं कर्त्तुमर्हं वस्तु नित्यकर्म्माङ्गीभूतं वस्तु निरूपितं साधितं येन स इत्यर्थः। निरूपितपदस्य विशेषणबोधकत्वेऽपि परनिपात आर्षः। प्रधानशक्त्यभिधान इति, शक्तिः कारकं तस्मात् कर्त्तृरूपं प्रधानेन प्रधानक्रियावाचकधातूत्तराख्यातादिना कर्त्तृकारकाद्यभिधाने गुणशक्तिः गुणीभूतक्रियाकारकं अभिहितवत् प्रकाशते तत्कारकपदोत्तरमनभिहिताधिकारीयतृतीयादिकं विनापि स्वकर्त्तृकत्वादिसम्बन्धेन गुणीभूतक्रियायामन्वेतीतिन्यायार्थः, अत्र च कार्य्याणीति गुणीभूतक्रियायां स्वकर्त्तृकत्वसम्बन्धेन तृतीयां विनापि शक्यवस्तुनिरूपित इत्यस्यान्वयेन सामञ्जस्यमिति भावः। नैव नित्यानि यथा कथञ्चिद्येन केनापि कार्य्याणि न तु नित्यानि लोपयेदित्यन्वये कार्य्याणीतिक्रियाया गुणीभूतत्वाभावात् प्रधानशक्त्यभिधान इत्यादि ग्रन्थासंगतिः, शक्यवस्तुनिरूपितः यथा कथञ्चिद्येन केनापि कार्य्याणि नित्यानि न लोपयेदित्येव व्याख्येयं तथैकस्य नित्यपदस्य वैयर्थ्यमिति चेत् यथा कथञ्चित् कार्य्याणि नित्यानि न लोपयेदित्येकोऽन्वयः। अपरश्च येन केनापि कार्य्याणि नित्यानि न लोपयेदित्यन्वयः एवञ्च

सम्यक् शौचाद्यसमर्थ इति कल्पतरुः। अन्त्यजन्मगतत्वाहेण शूद्रीभवति ब्राह्मणः चौरविक्रयादिति मन्वाद्युक्तः। एवञ्च सम्यगाचमनाद्यसमर्थानामन्ध्रादीनामपि नित्ये कर्म्मणि सन्ध्यादावधिकारः। अतएव केनापि मुनिना न तेषामनधिकार उक्तः। किन्तु क्वचित् काम्ये सर्व्वशक्त्यधिकरणन्यायात्तेषामनधिकारः (३८)।

अतएव तिथिविवेके स्वर्गकामश्रुतेः सामान्यप्रवृत्तायाः समर्थ-नरगोचरोपसंहारेऽप्यादिपदे दर्शपौर्णमासादेर्विधइत्युक्तमित्यनेन काम्य एव दर्शादौ विशेषोऽभिहितः। एवञ्च * नित्ये वाक्यान्तरश्रुतस्य स्वर्गादेर्न भाव्यत्वं सर्व्वदा तस्येष्टत्वासम्भवात्। तथाहि अविवेकिनामेव

सर्व्वत्र नित्ये न प्रतिनिधिविधिरिति सूचितं मन्वदीक्षादौ प्रतिनिधिश्रवणात्। शक्यवस्तुनिरूपित इत्युक्तेः शक्याङ्गानुष्ठानस्यावश्यकत्वं, तथा वस्तुनिरूपणानर्हत्वे प्रतिनिधासम्पत्तौ नित्यकर्म्मणो लोपोऽपीति बोध्यं अन्त्यजन्मगतः अन्ते भवा अन्त्या विप्रस्त्रविप्रामनन्तरभवाः शूद्राः तज्जन्म तज्जातिं तत्तुल्यतामिति यावत्, अन्यथा सन्ध्यादावनधिकारापत्तेः गतः प्राप्तः। सर्व्वशक्त्यधिकरणन्यायादिति, काम्ये सर्व्वशक्तिमानधिकारीति सूत्रं, तदर्थश्च काम्यापूर्व्वं प्रति तत्तदङ्गानां हेतुत्वेन तदेकस्याप्यभावे काम्यापूर्व्वानिष्पत्तेः सर्व्वाङ्गसम्पन्नप्रधानानुष्ठानशक्तोऽधिकारीति (३८)।

स्वर्गकामश्रुतेः स्वर्गकामो यजेतेत्यादिश्रुतेः सामान्यप्रवृत्तायाः समर्थत्वादिविशेषणानुपरागेण नियोज्यबोधिकायाः समर्थनरगोचरोपसंहारे समर्थनरपरतयाऽवधारणप्रकरणे। अतएव शुचितत्कालजीवनवतः कर्त्तव्यत्वादेव, वाक्यान्तरश्रुतस्य स्वोत्पत्तिविधिवाक्यभिन्नवाक्यश्रुतस्य न भाव्यत्वं वाक्यान्तरेण विधिवाक्यस्यैकवाक्यतया न भाव्यत्वेनान्वयः, किन्तु स्वर्गादिकं क्वचिन्नित्ये श्रुतमपि सदानुषङ्गिकफलमिति भावः।

* अतएवेति क्वचित्पाठः।

तदिच्छा विवेकिनां पुनः स्वर्गेऽपि पातभीरुत्वात् क्षयिष्णोर्नास्ति निष्कृतिरिति न्यायाद्धेयबुद्धिः। ततश्च सर्व्वावस्थसाधारणेच्छागोचरतया उपात्तदुरितक्षयएवभाव्यः। यद्यपि विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति। इतियाज्ञवल्क्यवचनादकरणभाव्यनिष्टपरिहारार्थत्वं सम्भवति (४०)।

तथापि तत्तद्विधिवाक्येषु भावनायाएव विधेयत्वात्तस्याः किं केन कथमित्यपेक्षितांशत्रयवत्त्वाद्भाव्यं विना विधिरूपत्वासिद्धेस्तत्कालीनाकरणजन्यप्रत्यवायपरिहारस्य स्वप्रतियोगिनः कदाचिदप्यनुत्पत्त्याऽत्यन्ताभावरूपस्य नियततया भाव्यत्वायोगाद्विधिप्रत्ययेन चेष्टस्यैव भाव्यत्वप्राप्ते-

पातभीरुत्वात् पातभयजन्य दुःखमिश्रितत्वात् क्षयिष्णोरिति पञ्चमी तेन क्षयिणोः सकाशान्न निष्कृतिर्नात्यन्तिकदुःखनिवृत्तिरित्यर्थः। यद्वा क्षयिष्णोर्ज्जनस्य न निष्कृतिरिति। भाव्यः फलत्वेनान्वितः अधिकारिविशेषणकामनाविषयस्यैव भाव्यत्वात् तत्रच स्वर्गादिकामनाया अधिकारिविशेषणत्वे तस्या असार्व्वदिकत्वात् असार्व्वत्रिकत्वाच्च तद्विरहदशायामधिकाराभावेन नित्यकर्म्मणोयावज्जीवकर्त्तव्यतानुपपत्तिरिति पापक्षयः सर्व्वदा सर्व्वजनकामनागोचरतया भाव्य इति भावः (४०)।

अकरण इत्यत्र सप्तम्यर्थः प्रयुक्तत्वं तथाच विहिताकरणप्रयुक्त भाव्यनिष्टपरिहारस्य इष्टत्वं इच्छाविषयत्वेन भाव्यत्वमित्यर्थः, भावनाया भावयतीति व्युत्पत्त्या फलोत्पादिकायाः प्रवृत्तेर्विधेयत्वात् विधिजन्यबोधविषयत्वात्, तस्याश्चेति, किं भाव्यंकेन करणेन कथं केन प्रकारेण इत्यपेक्षितं इत्याकाङ्क्षितं इत्याकारकाकाङ्क्षाविषयीभूतमिति यावत् अंशत्रयं फलकरणेतिकर्त्तव्यतारूपमंशत्रयं तद्वत्त्वं नियमतस्तदन्वयित्वं, भाव्यं विनेति, भाव्यं उद्देश्यफलं। विधिरूपतासिद्धेः विधिजन्यबोधविषयत्वासिद्धेः। ननु प्रत्यवायपरीहार एव भाव्य इतात आह तत्कालीनेति, नित्य

धात्वर्थादेर्भाव्यत्वायोगादश्रुतफलेषु विश्वजिदादिषु दुरित क्षयस्य दुरितानिष्टजनकत्वोपाधिकेच्छाविषयत्वात्तत्त्यागेन निरुपाधिकेच्छाविषयस्वर्गस्यैव भाव्यत्वावधरणेऽपि मात्र तथेति, कर्त्तॄणां कदाचिद्भगवदनुग्रहाद्वैराग्योत्पत्तौ

कर्म्मविहितकालीनेन अकरणेन नित्यकर्म्माकरणेन यः प्रत्यवायः तस्य यः परीहारोऽभावस्तस्य स्वप्रतियोगिनः प्रत्यवायस्य. कदाचिदनुत्पत्त्येति, नित्यत्येत्यादि, ध्वंसप्रागभावरूपत्वासम्भवादितिशेषः, भाव्यत्वायोगादनुपाधत्वासम्भवात्, ननु धात्वर्थ एव भाव्योऽस्तु तत्राह विधीति, विधिप्रत्ययेन लिङादिना इष्टस्यैव स्वतइच्छाविषयस्यैव भाव्यत्वात् भाव्यतया आकाङ्क्षितत्वात् धात्वर्थस्य सन्ध्यावन्दनादेर्भाव्यत्वायोगादिति, इष्टत्वाभावेन भाव्यत्वायोगादित्यर्थ, ननु प्रत्यवायपरीहारस्य नित्यत्वेऽपि तस्योत्तरकालानुवृत्तिरूपनैमिकसाध्यत्वमादाय-भाव्यत्वसम्भवस्तयापि उत्पादनरूपविध्यर्थैकदेशे उत्पत्तावन्वयासम्भवान्नतस्य भाव्यत्वं। उत्पत्तेराद्यक्षणसम्बन्धरूपत्वात् एवं अभावस्य भावोत्पत्तावहेतुत्वात्, नित्यकर्म्माकरणं न पापजनकं किन्तु पापज्ञापकं अकुर्व्वन् विहितं कर्म्मेत्यत्र शतृप्रत्ययोलक्षणार्थे तेन विहितकर्म्माकरणज्ञाप्यं पतनमिति तत्रान्वयबोध इति, पापक्षय एव नित्यकर्म्मफलं न च तत्र प्रायश्चित्तपदशक्यत्वापत्तिः निमित्तनिश्चयाधीनपापक्षयमात्रसाधनस्य प्रायश्चित्तरूपत्वात् निर्निमित्तमुपात्तदुरितक्षयसाधनत्वं नित्यलक्षणमित्यादिकमालोचनीयं। ननु विश्वजिदादौ दुरितक्षय एव कथं भाव्यतया न स्वीक्रियत इत्यत आह अश्रुतफलेष्विति. दुरिते यदनिष्टत्वमनिष्टजनकतया द्वेषस्तदुपाधिका तदधीना या इच्छा तद्विषयत्वात् स्वत इच्छाविषयत्वाभावादित्यर्थः। निरुपाधिकेच्छेति, अन्येच्छानधीनेच्छा इत्यर्थः। मात्र तथेति, अत्र नित्यस्थले न तथा न स्वर्गादेर्भाव्यत्वसम्भवः उक्तश्रुतेरिति भावः। उपसंहरति कर्त्तॄणामिति, भावनायां भावनैकदेशोत्पत्तौ विधाने विधिवाक्ये, अत्र सन्ध्यावन्दनाकरणकदुरितक्षयोत्पादकप्रवृत्तिमान् दुरितक्षयकामो द्विज इत्यन्वयबोधः सन्ध्यामुपासीतेति श्रुतौ जायते तत्र लिङोभावनायां शक्त्या उत्पादकव्यापार आख्यातसामान्य-

स्वर्गेऽपीच्छानिवृत्तेर्यावज्जीवानुष्ठेयकर्म्मसु स्वर्गस्य भाव्यत्वानुपपत्त्या सर्व्वस्य सर्व्वदेच्छागोचर-उपात्तदुरितक्षय-एव भाव्यः कल्प्यते। धात्वर्थरूपाणि भावनायां केनेत्यपेक्षितकरणत्वेनान्वीयन्ते। विधाने चानुवादे च यागः करणमिष्यते, इति न्यायात् करणस्य कर्त्तृव्यापार-लक्षणस्येतिकर्त्तव्यताख्योपकारकव्यापारं विनाऽसम्भवात् कथमित्यपेक्षितश्रुत्यादिसमर्पिताङ्गजातान्येव भाव्यं भावयन्तीति (४१)।

तत्र पूर्व्वजन्मार्जितानामिहापि जन्मनि। पूर्व्वजन्मा-

प्रत्यया प्रवृत्तिश्चार्थः प्रवृत्तौ उत्पादकव्यापारस्याभेदान्वयात् उत्पादकप्रवृत्तिरिति लभ्यते उत्पादकत्वं उत्पत्त्यनुकूलत्वं। दुरितक्षयकाम इतिपदमध्याहार्य्यं तदेकदेशस्य दुरितक्षयस्याकाङ्क्षावैचित्र्यात् उत्पादकैकदेशे उत्पत्तावन्वयः दुरितक्षयतदुत्पत्तौ वा सम्ब्यावच्छिन्नं करणतासम्बन्धेनान्वेतीति भट्टमतं, तन्मते क्रियागतमिष्टसाधनत्वं न विध्यर्थः किन्त्वेवंरीत्या प्रवृत्तिगतमिष्टसाधनत्वं विधितो लभ्यते उत्तरकालं प्रवृत्तेः फलोत्पादकत्वं क्रियाद्वारैवेति प्रतिसन्धानेन क्रियायां फलोत्पादकत्वं गृह्यते फलोत्पादकत्वमेवेष्टसाधनत्वं तज्ज्ञानात् क्रियायां प्रवृत्तिरिति नित्यवाक्यस्य प्रवर्त्तकत्वमिति बोध्यं। कर्त्तृव्यापारलक्षणस्य कर्त्तृव्यापाररूपस्य इतिकर्त्तव्यताख्योपकारकव्यापार-मितिकर्त्तव्यतारूपसहकारिव्यापारं, असम्भवात् फलोत्पादकत्वासम्भवात्। इतिकर्त्तव्यता चाङ्गजातमिति, अपेक्षितेति इत्याकाङ्क्षोत्थापितेत्यर्थः। समर्पितेति, बोधितेत्यर्थः। एवकारोऽप्यर्थे भावयन्तीति, प्रधानविधिसहकार्य्याकाङ्क्षयोत्थापितत्वादङ्गविधिजन्यबोधेषु प्रधानविधिबोधितफलस्यैव भाव्यत्वेनान्वयादिति भावः (४१)।

ननु दुरितक्षयोऽपि न सर्व्वदासर्व्वजनेच्छाविषयः। दुरिते प्रबलद्वेषाभावकाले दुरितक्षयेऽपि नेच्छा अतएव तदा दुरितसाधने कुकर्म्मण्यपि प्रवर्त्तते निश्चितदुरितेऽप्यालस्यादिना तत्क्षयार्थं प्रायश्चित्ते न प्रवर्त्तते

र्जितञ्चैव तथैवापि च जन्मनि। जनपीडश्रवर्षाणां वाल्ये यत्किञ्चिल्विषं कृतं। पश्चाद्धर्म्मप्रवृत्तेन तत् सर्व्वमुप-

काम्यदिति कथं दुरितक्षयोऽपि नित्यकर्म्मणिभाव्यस्तत्कामनाविरह-दशायां तदकरणप्रसङ्गादिति चेत् तथापि नित्याकरणस्याभावतया भावरूपप्रत्यवायाहेतुत्वान्नित्याकरणस्य प्रत्यवायहेतुत्वेमानाभावाच्च न प्रत्यवायानुत्पत्तिः फलं। अकुर्व्वन्नित्यादिवचनस्य लक्षणहेत्वोः क्रियायाः इति पाणिनिसूत्रेण लक्षणार्थे शतृविधानात् पापज्ञापकतापरत्वं। न च ज्ञापकत्वं ज्ञानजनकत्वमित्यायातमभावस्य कारणत्वमिति वाच्यं लक्षणपदस्य ज्ञानजनकज्ञानविषयार्थकत्वात् तदुक्तं वेदान्तसारटीकायां। नित्यानामक्रिया यस्मात्सूचयत्येव मत्वरा। प्रत्यवायक्रियां तस्मात्तल्ल-णार्थे शताभवेदिति। न चायं विहितमकार्षीत् अतःप्रत्यवायीति-लौल्यरोगिष्टेरिति, पापकारी पापीभवति, अथ य इह कुपूया चरणास्ते कुपूयां योनिमापद्येरन्नित्यादिश्रुत्या निन्दितकर्म्माचरणस्यैव पापजनकत्वावगमात्। एवञ्च नित्यकर्म्माकरणे यदन्यच्च निन्दाश्रवणं तदपि प्राक्तनपापसत्त्वज्ञापकं। स्वर्गादेश्च भाव्यत्वे नित्यानां काम्यात्मभाव-प्रसङ्ग इति प्रमाणान्तरसिद्धपापक्षय एव नित्यकर्म्मणोभाव्यः पापभीरुभि-रास्तिकैरवश्यमेव यावज्जीवं पापक्षयार्थं प्रायश्चित्तमिव नित्यकर्म्मानु-ष्ठीयते येन नानुष्ठीयते तस्य पापसत्त्वान्निन्देव। न च प्रायश्चित्तविलम्बे पापवृद्धिश्रवणात् प्रायश्चित्ताकरणस्य पापजनकत्वमिति वाच्यं। तद्वच-नानां कालविलम्बे प्रायश्चित्ताधिक्यपरत्वादिति। नित्यकर्म्मसामान्यस्य पापनाशकत्वे मानमाह तत्रेत्यादि। तत्र नित्यकर्म्मणि कृते सतीति शेषः। यद्वा तत्र तेषु पापक्षयेषु मध्ये पूर्व्वजन्मार्ज्जितानामिति विशे-षतोऽनिश्चितानामित्यर्थः रोगादिना निर्णीते प्रायश्चित्तश्रवणात्। जन-पीड़श्रवर्षाणेति तदूर्द्धं कृतानां पापानां प्रायः प्रायश्चित्तनाश्यतेति। धर्म्म-पदमत्रवेदप्रणिहितो धर्म्म इत्यनेन वेदविहितकर्म्मसामान्यवाचकमपि वेदविहितनित्यकर्म्मपरं, सामान्यशब्दस्य विशेषपरत्वात्तदन्यकर्म्मणि फलविशेषश्रवणाच्च। प्रतिष्ठा पालकः सर्व्वं भोगापवर्गादि प्रतिष्ठितं प्राप्तं भवतीति। यद्वा अतीतत्वाविवक्षया प्रतिष्ठितं प्रतिष्ठाश्रयः संप-द्यत इति यावत्। क्षयं केचिदिति, मतान्तरमाह अनुत्पत्तिमिति,

शाम्यति। इति वचनादिप्राप्तानां दुरितानां क्षयः। तथाच तैत्तिरीयश्रुतिः, धर्म्मो विश्वस्य जगतः प्रतिष्ठा

एतन्मते यथान्वयव्यतिरेकबलाद्भावः कारणं तथा क्वचिदन्वयव्यतिरेकबलादभावोऽपि कारणं बाधकाभावाच्च। एवञ्च नित्यकर्म्माकरणं पापजनकं तत्करणे तत्पापानुत्पत्तिरिति, पापानुत्पत्तिः फलं एतन्मते भावनात्वेन न विधिप्रत्ययवाच्यता कृतिसाध्यत्वमिष्टसाधनत्वञ्च विध्यर्थः अत्र पापानुत्पत्तिरूपेष्टस्य चेमिकसाधनतामादाय विधिप्रत्ययवाच्यतोपपाद्या। एवञ्च सन्ध्यावन्दनं पापानुत्पत्तिकामकृतिसाध्यं पापानुत्पत्तिरूपेष्टसाधनमित्यन्वयबोध इति, पापभीरुणा यावज्जीवमेवानुष्ठीयते। एतन्मते अर्थवादिकब्रह्मलोकावाप्त्यादिफलं न मन्यते अर्थवादस्य स्तुतिमात्रपरत्वात्। नन्वेतन्मते प्रत्यवायानुत्पत्तिकामनारहितस्य सन्ध्यावन्दनाद्यकरणे पापानुत्पत्तिप्रसङ्गस्तस्यानधिकारित्वादिति चेन्न निन्दार्थवादेन सामान्यतः पापजनकत्वावगमादिति। यद्वा कृतिसाध्यत्वमेव विध्यर्थः काम्यस्थले इष्टसाधनत्वं योग्यतया ज्ञातं विधिजन्यबोधेऽपि भासते नित्यस्थले नित्यत्वमेव योग्यता तच्च प्रत्यवायजनकीभूताभावाप्रतियोगित्वरूपं विधिजन्यबोधे भासते। घटेन जलमाहरेदित्यादौ छिद्रेतरत्वमिव एवमन्वये सन्ध्यावन्दनाद्यभावे प्रत्यवायजनकत्वं लभ्यत इत्यर्थतः प्रत्यवायानुत्पत्तिः फलं सन्ध्यावन्दनादेरपीति, तत्कामनया सन्ध्यावन्दनादौ प्रवर्त्तते तत्कामनायाश्च नाधिकारिविशेषणत्वमिति तत्कामनारहितस्य सन्ध्यावन्दनाद्यकरणे न पापानुत्पत्तिप्रसङ्गः शुचितत्कालजीवनस्य द्विजत्वादेश्च श्रुतस्याधिकारस्य तदानीमपि सत्त्वादिति, मतान्तरमाह अनुषङ्गफलमिति। सर्व्वत्र नित्या क्रिया यस्यां तां श्रुतिं प्राप्येति पूरणसम्वलितेनान्वयः। यत्फलकामना न कर्त्तृविशेषणतया विधिजन्यबोधविषया तत्फलं अनुषङ्गफलं नित्यकर्म्मणि इत्यर्थः। एवञ्च नित्यविधौ फलकामपदाध्याहारो नास्ति। पापानुत्पत्तिश्च पापक्षयश्च सकलनित्यकर्म्मणः फल ब्रह्मलोकप्राप्त्यादिकमपि क्वचित् श्रुतं। विधिजन्यबोधे प्रमाणान्तरोपस्थितपापानुत्पत्त्यादिरूपेष्टसाधनत्वं क्रियागततया भासत इति विधेरिष्टसाधनताबोधकत्वेन प्रवर्त्तकत्वं। तत्कामनाया,

लोके धर्म्मिष्ठं प्रजाउपसर्पन्ति धर्म्मेण पापमपनुदन्ति धर्म्मेण सर्व्वं प्रतिष्ठितं तस्माद्धर्म्मं परमं वदन्तीति। जावालभविष्यपुराणयोः, क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते। नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिं। नित्यक्रियां नित्या क्रिया यस्यास्तां प्राप्येति शेषः। फलमिति पाठे छान्दसत्वं (४२)।

ततश्च फलस्य कर्म्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति न्यायेन नित्यकर्म्माणि कृष्यादिषु दृष्टसाधनवत् साधनकर्म्मानुरूपेण किञ्चित् किञ्चित् कृत्वा दुरितानि नाशयन्ति अकरणभावि प्रत्यवायानुत्-

त्फलसिद्धिः। वस्तुतः पापानुत्पत्तिर्मात्रफलत्वेनान्वेति निन्दार्थवादेन नित्याद्यकरण एव पापजनकत्वावगमात्। अर्थतोनित्यकरणस्य पापानुत्पत्तिप्रयोजकत्वावगमेऽप्यनुत्पत्तेरत्यन्ताभावरूपतया नित्यत्वेन तज्जनकत्वाप्रसिद्धेः पापक्षयब्रह्मलोकावाप्त्यादिरूपेष्टस्य जनकत्वरूपमुख्य-साधनत्वमेव विधिप्रत्ययेन वोध्यत इत्येतन्मते पापशङ्कया कामनाया अविकारित्वेन च यावज्जीवानुष्ठेयता नित्यकर्म्मणः सुसम्पन्नैवेति (४२)।

फलस्य फलसामान्यस्य, कर्म्मनिष्पत्तेः कर्म्मतोनिष्पत्तेर्हेतोः, तेषां कर्म्मणां परिमाणतः अङ्गयोगायोगेन फलविशेषः स्यादिति, लोकवल्लौकिकानां कृष्यादीनामिवेत्यर्थः अकरणभावीति, भवन्तीति, एवञ्च फलतारतम्ये कर्म्मसादगुण्यासादगुण्यादिकं नियामकं। प्रत्यवायानुत्पादस्तु यथा कथञ्चित् कर्म्मणि कृत एवेति निर्द्धारितमितिभावः। कर्त्ता साक्षात्कर्त्ता भूयो वाहुल्येन साङ्गोपाङ्गेनेति यावत्। पापक्षयेति, तथाच फलं विनेत्यत्र फलपदं विधिसमभिव्याहृतफलश्रुतिपरं। अन्यथा प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इत्यनेन विरोधः स्यादिति। ननु राजाज्ञादिस्थले यथा राजाज्ञामात्रं प्रवर्त्तयतीति ज्ञानात् प्रव-

पादनाय भवन्ति च । तथाचापस्तम्बः । प्रयोजयिताऽनु-
मन्ता कर्त्ता चेति सर्व्वे स्वर्गनरकफलभोक्तारो, योभूय-
आरभते तस्मिन् फले विशेषश्रुति । एवं फलं विनाप्यनु-
ष्ठानं नित्यानामिष्यते स्फुटमिति, भविष्यपुराणीयं
पापक्षयानुषङ्गिकफलातिरिक्तफलकं । तथाच यमः ।
सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपा-
पास्ते यान्ति ब्रह्मलोकमनामयं । शंसितव्रता दृढ़व्रताः ।

---

मते नेष्टसाधनताज्ञानं तत्रापेक्षते । तथाविधिमात्रं प्रवर्त्तयतीति ज्ञानात् प्रवृत्तिरस्तु किं फलकल्पनेन प्रवर्त्तयतीत्यनेन प्रवृत्त्यनुकूल-व्यापारवत्त्वं विधिपदस्यायाति, स च व्यापारः प्रवर्त्तनापदेनाप्युच्यते । एतन्मते लिङ्पदनिष्ठाभिधा पदार्थान्तरं शब्दभावनाऽपरनाम्नी लिङ्शक्या, प्रवृत्तिश्चाख्यातसामान्यशक्या । तथोक्तं अभिधाभावनामाहुरन्यामेव लिङा-दयः । अर्थात्मभावना त्वन्या सर्व्वाख्यातस्य गोचर इति । अर्थात्म भावना अर्थभावना प्रवृत्तिरित्यर्थः, सन्ध्यामुपासीतेत्यादौ शब्दभावनाया जन्यता-सम्बन्धेन प्रवृत्तावन्वयात् शब्दभावनाजन्यसन्ध्यावन्दनप्रवृत्तिमानित्यन्वयः । यद्वाऽभिधायां मानाभावः वेदस्य परमेश्वरप्रयुक्तत्वात् । स एव प्रव-र्त्तकः तथाच परमेश्वरधर्म्मिकात् सन्ध्यावन्दनादिप्रवृत्तिबोधकविधिवाक्य-प्रयोक्तृत्वज्ञानादेव प्रवृत्तिरस्तु किं फलकल्पनेनेति चेन्न, तेषां मते-ऽपि प्रवृत्तेर्भावनात्वेनैवान्वयात्, भावनायाश्च किं केन कथमित्यंशत्रय-साकाङ्क्षत्वात् भाव्यत्वेन पापक्षयस्य कल्पनमित्युक्तत्वात् । तथोक्तं लिङोऽ-भिधा सैव च शब्दभावना भाव्याच तस्याः पुरुषप्रवृत्तिः । सम्बन्ध-बोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते । सम्बन्धबोधः शक्ति-ग्रहः प्ररोचना प्रवृत्तौ फलोत्पादकत्वज्ञानं । अङ्गतया हेतुतया प्रवृ-त्तावुपयुज्यते इति राजाज्ञादिस्थलेऽपि राजप्रसादादिफलमपेक्ष्यैव प्रव-र्त्तत इति । ननु ब्रह्मलोकावाप्तिश्चेदानुषङ्गिकं फलं तदा मुमुक्षुकृत-सन्ध्यादितस्तत् स्यादानुषङ्गिकफलस्य कामनां विनापि सम्भवात् । न चेष्टापत्तिर्मोक्षविरोधादित्यत आह एतेनेति, पापक्षयस्यैव सर्व्वत्र

एतेनानुषङ्गिकं फलं मुमुक्षूणां मोक्षएव अन्यथा तेषा-मनर्थापत्तेः। अन्येषान्त्वन्यथापि (४३)।

शारीरकभाष्ये आपस्तम्बः, आम्रे फलार्थनिर्म्मिते-च्छायागन्धाद्युत्पद्यते, एवं धर्म्मं चर्य्यमाणमर्थाअप्युत्-पद्यन्तइति। शक्यसम्पादनेष्वपि यदङ्गं विस्मृतं तस्या-प्यशक्यान्तर्भावात्तदभावेऽपि फलं भवत्येव। किन्त्वत्र साङ्गार्थमच्युतस्मरणादिकं विधेयं। यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्योवन्दे तमच्युतमिति स्कन्दपुराणात्। एकादश्युपवासस्य यथाकथञ्चित्कर्त्तव्यत्वेनोपदेशाच्च। यथा तत्त्वसागरः।

---

नित्येभाव्यत्वादन्येषामनियमेनेत्यर्थः। तथा ब्रह्मलोकावाप्त्यादौ मुमुक्षा-विरोधिनीतिभावः। मोक्ष एवेति, तमेतं वेदानुवचनेन ब्राह्मणा विविदि-षन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादिश्रुतेः। कर्म्ममात्र-स्यैव विविदिषाद्वारा मोक्षसम्पादकत्वात्, तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते। ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मण इति वचनाच्च अनर्थापत्तेर्मोक्षविरोधापत्तेः। अन्येषां विषयरागिणां अन्यथा पितृलोकादिरपि, कर्म्मणा पितृलोक इत्यादि श्रुतेः (४३)।

धर्म्मं चर्य्यमाणमनु लक्षीकृत्य अर्था उत्पद्यन्त इत्यर्थः। फलकामना-कृते आम्रादिके यथाऽकामितच्छायादिकमुत्पद्यते। एवं पापानुत्-पत्तिकामनया पापक्षयकामनया वा कृते नित्यकर्म्मणि यथायोग-मनीप्सितमपि फलान्तरं जायते इति भावः। तपोयज्ञक्रियादिषु नित्येषु काम्येषु वा मध्ये यन्न्यूनमङ्गहीनं तत् सम्पूर्णतां यथोक्तफल-जननयोग्यतां यातीत्यर्थः। सद्य इत्यन्यापेक्षां वारयति। एकादश्या-मेकादश्युपवासे मनः कृत्वेति, संकल्पस्यापि सफलत्वं सूचयति। नोदर्श-यति दर्शनविरोधिनी सैकादशीति, एकादशीव्रतमित्यर्थः। यद्यदिच्छ-तीत्यनेन फलस्यानुषङ्गिकत्वं निराकृतं, किन्तु तत्फलकामनया नियोज्य-

प्रसङ्गाद्वाथ दम्भाद्वा लोभाद्वा त्रिदशाधिप। एकादश्यां मनः कृत्वा सर्व्वं दुःखाद्विमुच्यते। नारदीयं, व्याजेनापि कृता राजन् नोदर्शयति सा ऽन्तकं। सा एकादशी अन्तकं यमं। कात्यायनः, संसारसागरोत्तारमिच्छन् विष्णुपरायणः। ऐश्वर्य्यं सन्ततिं स्वर्गं मुक्तिं वा यद् यदिच्छति। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। यत्तु वालोकेन, एकादशी द्वादशी च तत्रोपोष्य क्रतोः फलं। अहोरात्रेण चैकेन ब्रह्महत्यां व्यपोहतीति भविष्यपुराणादिफलमर्थवादमात्रं वर्णितं। तन्न, अधिकारिविशेषणापेक्षया आर्थवादिकफलस्वीकारस्य रात्रिसत्राधिकरणन्यायेन कर्त्तुमुचितत्वात्, ब्रह्महत्यादिव्यपोहनस्यापि फलत्वात्, ब्रह्महा द्वादशीयुक्तैकादश्यामुपवसेदिति

विशेषणतया वोधकश्रुतिकल्पनं सूचितं। वालोकेन वालोकाख्यग्रन्थकारेण। एकादशीद्वादशी चेति यस्मिन् दिने इत्यर्थः। फलमिति, प्राप्नोति इति शेषः। फलान्तरमाह, अहोरात्रेणेति, अहोरात्रोपवासेनेत्यर्थः। अनुवादमात्रं स्तुतिमात्रं नतु प्रामाणिकमिति यावत्। अधिकारिविशेषणापेक्षयेति, एकादश्यामुपवसेदित्यत्राधिकारिविशेषानुपदेशात् कोऽत्राधिकारीत्यधिकारिविशेषणाकाङ्क्षयेत्यर्थः। आर्थवादिकेति। एकादश्युपवासविधायकश्रुत्यनन्तरोक्तश्रुतिविवोधितेत्यर्थः। रहःप्रायश्चित्तं रहस्यकृतस्य पापस्य प्रायश्चित्तं, तत्र लघुप्रायश्चित्तोपदेशादितिभावः। रहःकृतत्वं जनत्रयागोचरत्वं। अमीमांसकवचनं निर्युक्तिकवचनं हेयमितीति, एकादशीव्रतस्य प्रायश्चित्तत्वेन कुत्राप्यलिखनात्, क्वचिदशेषपापनाशकत्वोक्तेस्तद्विवरणरूपत्वात् एतेषां ब्रह्महत्यादिपापनाशकत्ववोधकवाक्यानामितिशेषः। एवं एकादश्युपवासस्य नित्यत्वेन निर्निमित्तमशेषदुरितनाशकत्वमेव, नतु विशेषतस्तत्तत्पापनाशकत्वं नानाविधपापनाशकत्ववोधकवहुतरवचनवलात् कल्प्यते। भावफलन्तु तत्तद्वचनवलात्

विहितं हीनतमब्रह्मवधविषये रहःप्रायश्चित्तं सम्भवतीत्य-मीमांसकवचनं हेयमिति जीमूतवाहनः ( ४४ )।

स च न्यायश्चतुर्थाध्याये चिन्तितोयथा। प्रतितिष्ठन्ति ह्वै यएताराचीरुपयजन्तीति श्रूयते। अत्र रात्रिशब्देन अथैषआयुरथैषज्योतिरित्यादिवाक्य विहितास्तत्तन्नामकाः सोमयागविशेषाउच्यन्ते। किमत्र स्वर्गएवाधिकारिविशेषणमुत प्रतिष्ठेति संशयः। अत्रैवं कामइत्यश्रवणाद्विधिशक्तिलभ्यः स्वर्गएव विशेषणं, सन्देहे हि वाक्यशेषस्वीकारो न निश्चये, निश्चितश्चेह सर्व्वाभिलषितः स्वर्गोविधिसामर्थ्यान्नियोज्यविशेषणं। या तु प्रतिष्ठाविषया श्रुतिः सा तु लक्षणया स्वर्गपरैव कल्प्यते। इहैव जैमिनिसूत्रं। श्रुतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिरिति। यथा प्रयाजाद्यङ्गेषु फलश्रुतिरर्थवादरूपा

---

विशेषत एव कल्प्यते। तत्तत्फलकामपदघटितसंकल्पवाक्यमपि कार्य्यं यदृयदिच्छतीत्युक्तिवलादित्यवधेयं ( ४४ )

तत्तन्नामका आयुर्ज्योतिरादिसंज्ञका। विधिशक्तिलभ्य इति विधेःशक्तिः सामर्थ्यं लिङ्गमिति यावत् तेन लभ्य इत्यर्थः। तथा रात्रौजुहोतीति विधिवाक्यं स्वर्गकामनियोज्यकं स्वर्गातिरिक्तफलकामवोधकपदाघटितत्वे सति काम्यप्रकरणीयविधिवाक्यत्वादित्यनुमानात् स्वर्गस्य नियोज्यविशेषणत्वसिद्धिः। काम्यप्रकरणीयेत्युपादानान्नित्यकर्म्मणि न स्वर्गकल्पनं तत्र पापक्षयस्यैव कल्पनात्। यद्वा स्वर्गोऽश्रूयमानफलकामनियोज्यककाम्यप्रकरणीयविधिनियोज्यविशेषणं सर्व्वाभिलषितत्वादित्यनुमानेन नियोज्यविशेषणतया स्वर्गसिद्धिः। सन्देहे नियोज्यविशेषणतया फलस्य सन्देहे वाक्यशेषकल्पनं विधिवाक्यानन्तरसुक्तार्थवादश्रुतिवोधितफलस्य नियोज्यविशेषणतया स्वीकारः। यथाऽहरह: सन्ध्या-

तथा श्रुतौ रात्रिसत्रादौप्रतिष्ठादिश्रुतिफलमर्थवादमाह कार्ष्णाजिनिरिति, एवंप्राप्ते सिद्धान्तसूत्रं, फलमात्रेयोनिर्देशादश्रुतौ ह्यनुमानं स्यादिति। प्रतिष्ठाफलस्य निर्देशात्तदेवाधिकारिविशेषणं। यत्तु विधिशक्त्या स्वर्गइति तन्न मुख्यार्थस्तुतिवादानुगुण्येन विधिशक्तौ पर्य्यवसितायामानुमानिकस्वर्गकल्पनानवकाशात् सर्व्वथा फलाश्रुतावेव स्वर्गानुमानं। तस्माद्वाक्यशेषस्थमेव फलमित्या-

मुपासीतेत्यादौ नित्यत्वेन सन्ध्यावन्दनं निष्फलं किम्वाऽर्थवादे फलश्रवणात् तत्फलकमिति, सम्भवे श्रुतिवाक्यस्य सार्थकत्वसम्भवे निरर्थकत्वकल्पनस्यान्याय्यत्वादर्थवादोपस्थितफलान्वयेन विधेरुत्कर्षणमिति। प्रतिष्ठाविशया प्रतिष्ठावाचिका प्रतितिष्ठन्तीत्यादिरूपा अर्थवादेश्रूयमाणेतिविशेषः। स्वर्गपरा स्वर्गतात्पर्य्यका। इहैवात्रैव पूर्व्वपक्षे जैमिनिसूत्रमिति प्रमाणमितिशेषः। अर्थवादरूपा स्तुतिमात्रपरा न प्रमाणमिति यावत्, अर्थवादमार्थवादिकं न प्रामाणिकमितियावत्, एवञ्च सूत्रे श्रुतावितिपदं प्रतितिष्ठन्तीति श्रुतिपरं फलानुवादपरं श्रुतफलस्यार्थवादिकत्वपरं अङ्गवदिति, प्रयाजाद्यङ्गेष्विवेत्यर्थकमिति निर्द्देशादर्थवादश्रुत्योपस्थापितत्वात् अर्थात् प्रतिष्ठादिकं फलमधिकारिविशेषणं। अश्रुतौ अर्थवादेन विधिना वा फलाश्रवणेऽनुमानं स्वर्गस्यानुमानं स्यादिति आत्रेयोमुनिराहेति सूत्रार्थः। तत्तात्पर्य्यार्थं विवृत्य तत्त्वकृदाह प्रतिष्ठाफलस्येति। अधिकारिविशेषणमधिकारिविशेषणकामनायां विषयतयान्वितं। विधिशक्तेति अनुमेयमितिशेषः। स्वर्ग इति नियोज्यविशेषणकामनाविषयतयाऽन्वित इति प्राक्तनेन सम्बन्धः। मुख्यार्थस्तुतिवादानुगुण्येन मुख्यार्थे यः स्तुतिवादः मुख्यार्थपरस्तुतिरूपार्थवाद इति यावत्, तदानुगुण्येन तदुपस्थापितफलस्य विधावन्वयेन विधिशक्तौ विध्युत्थापितनियोज्यविशेषणफलाकांक्षायां पर्य्यवसितायां निराकांक्षयेति पूरणीयं स्वर्गकल्पनानवकाशादिति, श्रुति वाक्ये शक्त्या पदार्थोपस्थित्यपेक्षया आनुमानिकस्वर्गाद्युपस्थितेर्विलम्बितत्वादिति कथं

र्व्वे योमुनिराह। ततश्च प्रतिष्ठाकामश्चायुषा यजेत प्रति-ष्ठाकामोज्योतिषा यजेतेत्यादिविषय: कल्पान्ते (४५)।

महाभारते। सायमाद्यन्तयोरह्नो: सायं प्रातश्च मध्यमे। उपवासफलं प्रेप्सोर्व्वर्ज्ज्यं भक्तचतुष्टयं। अत्र सायमित्यविवक्षितं हविरुभयत्ववद्भक्तचतुष्टयवर्ज्जनस्यैव-विवक्षितत्वात्। अतएव वाराहे सायमित्यनुक्तं यथा। अह्नोराद्यन्तयोर्भक्तमेकैकं मध्यतोद्वयं। चातुर्भक्तनिषेधोऽय-मुपवासविधि: स्मृत:। पाश्चात्यनिर्णयामृते स्मृति:।

---

स्वर्गफलकत्वानुमानेन प्रतिष्ठादिवाचकपदस्य लक्षणया स्वर्गादिपरत्वकल्पनं मुख्यार्थवाध एव लक्षणा स्वीकारादितिभाव: (४५)।

हविरुभयत्ववदिति। यस्योभयं हविरार्त्तिमृच्छेत् स ऐन्द्रं पञ्चशराव चरुं निर्व्वपेदिति अनेकहविर्नाशे किं कार्य्यमित्याकांक्षाया अनिष्ट-त्वेहविरुभयत्वस्याविवक्षा अत्रापि येन नक्तव्रतमारब्धं तेनैकादश्या-दुपवासप्राप्तौ किमाद्यन्तदिनयो: सायं भोजननिवृत्त्या दिनत्रये भोजनवर्ज्जनं कार्य्यं नक्तव्रतिनो दिवाभोजनाभावात्। किंवा परदिने पारणस्यावश्यकत्वात् नक्तव्रतिनोदिवाभोजनाभावाद्रात्रौपारणं कुर्य्यात् रात्रिपारणनिषेधस्य च दिवाभोजनसत्त्वएव, न रात्रौ पारणं कुर्य्यादृते वै रोहिणीव्रतादितत्र व्रतपदस्य नक्तव्रतोपवासोपलक्षकत्वात्। तत्रोपवासस्य भोजनचतुष्टयनिवृत्तिरूपता च नस्यादित्याशङ्कानिरासाय सायमित्या-स्याविवक्षा युक्ता। एतेन वराहपुराणवचने सायंपदानुक्तावपि महा-भारतीयवचने सायंपदश्रवणात्, तत्समानार्थकत्वाय भक्तमेकैकमित्यत्र भक्तपदं रात्रिभोजनपरमिति प्रत्युक्तं सायंपदस्य विवक्षितत्वे दिवस एव पूर्व्वापरयोर्भोजनद्वये कृतेऽप्युपवाससिद्धिप्रसङ्गादेकस्मिन् दिवसे भोजनद्वयस्याविहितत्वे निषिद्धत्वेऽपि च यादृच्छिकतत्सम्भवात् एवञ्चाव्यव-हितपूर्व्व दिनावच्छेदेन भोजनद्वयाभावत्वे सत्यव्यवहितोत्तरदिनावच्छेदेन भोजनद्वयाभावत्वे च सति मध्यदिनावच्छेदेन भोजनसामान्याभावो मुख्योपवासपदार्थ इति। एकस्मिन् भोजने कृतेऽपि भोजनद्वयाभाव-

नाद्याद्भक्तद्वयं नित्ये काम्ये भक्तचतुष्टयं। भक्तद्वयवर्ज्जनमशक्तस्य शक्तस्य तु नित्येऽपि भक्तचतुष्टयवर्जनं। शक्तिमांस्तु प्रकुर्व्वीत नियमं सविशेषणमित्यत्र नित्यत्वकाम्यत्वेन विधानभेदात्। पूर्णैकादशीव्यवस्थायां। पूर्णामुपवसेत् कामी निष्कामस्तूत्तरां सदा। इत्यादिवचनेन विधानभेदात् कालभेदाच्च। नित्यत्वकाम्यत्वप्रतिपादकतत्तद्वचनैरेकादश्युपवासस्य नित्यत्वं काम्यत्वञ्च। अत्र कालाभेदस्थले काम्यकरणे नित्यसिद्धिरित्युक्तं (४६)।

ननु काम्यत्वमनित्यत्वं असति कामे परित्यक्तुं शक्यत्वात् तथा सत्येकस्य कर्म्मणोनित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्यसंयोगविरोधः। मैवं संयोग-

सत्त्वाल्लक्षणसङ्गतिः एकघटवत्यपि घटद्वयं नास्तीति प्रतीतेः दिनपदमहोरात्रावच्छिन्नकालपरं। शक्तिमांस्त्वित्यनेन नित्यव्रतपरत्वं वचनस्य सूचितं काम्यव्रते सर्व्वशक्त्यधिकरणन्यायेन सर्व्वाङ्गोपेतस्यावश्यकत्वात्। शक्त्यशक्तिभेदाभावात्। कालाभेदस्थल इति, नित्यविधौ एकादश्युपवासत्वेनैव विधानात् कामनया कृतेऽपि तत्सिद्धिः काम्ये कामनाया अङ्गत्वात् निष्कामतया नित्यकर्म्मणिकृते न काम्यसिद्धिरितिभावः। कालभेदेतु उपवासद्वयं नित्यकाम्यभेदादितिवोध्यं (४६)।

काम्यत्वं कामनाविषयत्वं कामनावत्कर्त्तव्यत्वमिति यावत्। अनित्यत्वं नित्यत्वविरोधि नित्यत्वाभावनियतमिति यावत्। परित्यक्तुमिति परित्यागोनिवृत्तिस्तुमोनिमित्तत्वमर्थः, शक्यत्वं योग्यत्वं प्रत्यवायाजनकीभूताभावप्रतियोगित्वमिति यावत्, निवृत्तिप्रयोजकप्रत्यवायजनकीभूताभावप्रतियोगित्वादिति समुदितार्थः। तथा सति काम्यत्वस्य नित्यत्वविरोधित्वे सति नित्यत्वकाम्यत्वाभ्यामित्यभेदे तृतीया तथाच नित्यत्व काम्यत्वरूपं यद्द्वैरूप्यं धर्म्मद्वयं तत्स्वीकार इत्यर्थः। नित्यानित्यसंयोगविरोध इति वाधक इति शेषः। संयोगः सम्बन्धस्तादात्म्यमिति

पृथक्त्वन्यायात्। स च न्यायोयथा। खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्व्वीतेति श्रूयते, अत्र संशयः, किं काम्यस्यैव खादिरता नित्येऽपि स्यात् उत नेति। तत्र फलार्थत्वेनानित्यतया नित्यप्रयोगाङ्गता न युक्ता, यत्तु नित्येऽपि खादिरत्वश्रवणं तत्काम्य-

यावत्। तथाच नित्यत्वस्य काम्यत्वव्यापकीभूतानित्यत्वस्य च यः परस्परविरोधः सहानवस्थानं स एव बाधकः व्यापकस्यानित्यत्वस्यासत्त्वे काम्यत्वस्यासम्भवादिति पर्य्यवसितार्थः। काम्यस्य कामनाविषयफलस्य षष्ठ्यर्थः प्रयोजकत्वरूपसम्बन्धः तस्य खादिरतायामन्वयः नित्ये नित्यफले प्रत्यवायानुत्पत्तौ पापक्षये वा, स्यात् प्रयोजिका स्यात्, तथाच खादिरयूपकरणं नित्याङ्गं नवेति संशयः, अत्रेति, संशय इत्यर्थः। न युक्तेति, नित्यत्वकाम्यत्वयो र्विरोधादिति शेषः। नित्ये नित्यप्रकरणे खादिरत्वश्रवणं खादिरे पशुं बध्नातीति श्रुतिः, तत्खादिरत्वश्रवणं काम्यस्यैवेति, खादिरत्वस्येति शेषः। तथाच तस्य यूपरूपाश्रयस्य पशुबन्धनार्थकत्वज्ञानायेत्यर्थः, खादिरमिति श्रुत्या तदलाभादिति भावः। खादिरतेति, अङ्गमिति शेषः। यद्वा काम्यस्यैवेति खादिरयूपस्येति शेषः पशुबन्धनाय यूपरूपाश्रयज्ञानार्थं। तथाच खादिरयूपस्य काम्यतया कृतत्वेऽपि तत्रैव पशुबन्धनं कार्य्यं वीर्य्यकामनाविरहे खादिरान्ययूपे पशुबन्धनं कार्य्यमिति खादिरता न नित्याङ्गं खादिरे पशुं बध्नातीत्यत्र खादिरत्वस्याविवक्षितत्वादिति भावः। सम्बन्धमात्रं संयुज्यते सम्बध्यते इति व्युत्पत्त्या धर्म्ममात्रं क्रत्वर्थत्वं क्रतोरर्थः फलं यस्मात्तत्त्वं तथाच नित्यक्रतोः फलं प्रत्यवायानुत्पत्तिः पापक्षयो वा तत्र प्रयोजकस्याभावे प्रत्यवायानुत्पत्तेरभावः प्रत्यवायोत्पत्तिश्च पापक्षयस्याभावः पापसत्त्वं वेति प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वं पापज्ञापकीभूताभावप्रतियोगित्वरूपं वा नित्यत्वं पर्य्यवसितं। पुरुषार्थत्वं काम्यत्वमेतद्रूपमुभयं स्वरूपभूतधर्म्मौ यस्य तद्बोधकतया तद्गतधर्म्मे व्यवहाररूपे संयोगपृथक्त्वमविरुद्धधर्म्मद्वयप्रयोजकमिति सूत्रार्थः। तादृशधर्म्मद्वये प्रमाणं पूरयति वाक्यद्वयेनेति श्रुतिद्वयेनेत्यर्थः। क्रतुशेषत्वं क्रतूपकार-

सैव पशुबन्धनाय यूपाश्रयज्ञानार्थं अतोन नित्या खादिर-
तेति प्राप्तेराह्वान्ताय चतुर्थाध्यायसूत्रं। एकस्य तूभयत्वे
संयोगपृथक्त्वमिति। अत्र संयोगः सम्बन्धमात्रं पृथक्त्वं
भेदः। एकस्य खादिरस्य क्रत्वर्थपुरुषार्थत्वरूपोभयात्म-
कत्वे वाक्यद्वयेन च क्रतुशेषत्वफलशेषत्वलक्षणसंयोगभेदा-
वगमान्न नित्यानित्यसंयोगविरोधः। नचाश्रयज्ञानार्थं
नित्यवाक्यं सन्निधानादेवाश्रयलाभात् अत उभयार्थो
खादिरतेति। एवं दध्ना जुहोति दध्ने न्द्रियकामस्येत्या-

कत्वं नित्यत्वपर्य्यवसितं फलशेषत्वं फलजनकत्वरूपं काम्यत्वं तदा-
त्मकाविरुद्धधर्म्मद्वयावगमादित्यर्थः। न नित्यानित्यसंयोग विरोध इति
तदुभयात्मकत्वे बाधक इतिशेषः, नित्यकाम्यत्वस्य नित्यत्वाविरोधित्वा-
दितिभावः। उपसंहरति अत उभयार्थोखादिरतेति, एकेन वाक्येनैकस्य
कर्म्मणो नित्यत्वं काम्यत्वञ्च द्वयं बोधयितुमशक्यं तथाहि स्वर्गकाम
एकादश्यामुपवसेदित्यादि श्रुतौ स्वर्गकामनाविशिष्टस्य कृतिसाध्यत्वान्वयः
उपवासे बोधनीयः। वेदस्थले विशिष्टान्वयस्यौत्सर्गिकत्वात्। स्वर्ग-
कामनाविशिष्टस्य कृतिसाध्यत्वैकदेशकृतावन्वये तत्र कामनाया अपि
प्रयोज्यतासम्बन्धेनान्वयोवाच्यः विशेष्यान्वयिनान्वयित्वं विशेषणत्वमिति-
लक्षणात् कृतौकामनाया अनन्वये विशेषणत्वासम्भवात्। ततश्च काम-
नारहितकृतिसाध्यत्वेनानेन विधिना अबोधनात्। अकुर्व्वन् विहितं
कर्म्म इत्यादि वचनाविषयत्वेनाकरणे प्रत्यवायाबोधनात्। कामनाविशि-
ष्टस्य कृतिसाध्यत्वेन विहितत्वेऽपि नित्यं सदा यावदायुरित्यादिना कामना-
विशिष्टेतरकृतिसाध्यत्वेन विहितस्यैव नित्यत्वावगमात् कामनाविशिष्ट-
कर्त्तव्यत्वेन विहितस्याकुर्व्वन्विहितमित्यादिना अबोधनात्र तदकरणे
प्रत्यवायः। साक्षात् फलश्रवणे प्रत्यवायानुत्पत्तेः पापक्षयस्य बाधिका-
विशेषणत्वेनाकल्पनाच्च। कामनावत् कर्त्तव्यकर्म्माकरणे तत्कामनाविषय-
फलसिद्धिरकरणे तत्फलाभावमात्रं नतु प्रत्यवायोऽपीति। कामनारहित-
कर्त्तव्यत्वेनाविहितकर्म्मनिष्ठकाम्यफलजनकत्वस्य नित्यत्वविरोधितया तद-

द्वावुभयार्थतैव दधित्वस्य द्वधाश्रवणात्। ननु विषमो दृष्टान्तः नित्यः खादिरः क्रत्वर्थः काम्यस्तु पुरुषार्थः उपवासस्तु नित्योऽपि पुरुषार्थः नहि स क्रत्वर्थः क्रत्वङ्गत्वे प्रमाणाभावात्। सत्यं, प्रमाणद्वयस्य द्वैरूप्यप्रयोजकस्य केवलपुरुषार्थोपवासेऽपि सत्त्वाद्वैषम्यं (४७)।

यदि च वुद्ध्यारोहसदृशोदृष्टान्तोऽपेक्षितस्तदाग्निहोत्रादिर्दृष्टान्तः न हि स क्रत्वर्थः किन्तु स्वयमेव क्रतुः पुरुषार्थोऽपि। तथाच यावज्जीवमग्निहोत्रं जुहोतीति

भिप्रायेण नित्यानित्यविरोधः इत्याशङ्कितं द्वेधाश्रवणात् नित्यत्वकाम्यत्वाभ्यां विधिद्वयात्, क्रत्वर्थः क्रत्वङ्गं न साक्षात् पापनाशादिरूपफलजनकः। पुरुषार्थः साक्षात् पुरुषनिष्ठफलजनकः। एवञ्च क्रत्वङ्गतयानित्यत्वं प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वरूपनित्यत्वं। पुरुषार्थतयाऽनित्यत्वञ्च प्रत्यवायाजनकीभूताभावप्रतियोगित्वमितिवैषम्य। प्रमाणद्वयस्येति, एकादश्यव्रतकामस्तु पितृभिः सहमज्जतीत्यादिवाक्यकल्पितयावज्जीवैकादशीव्रतविधायकस्य यावज्जीवमेकादश्यामुपवसेदित्यादिवाक्यस्य यदुयदिच्छतीत्यादिवाक्यकल्पितस्वर्गकाम एकादश्यामुपवसेदित्यादिविधिवाक्यस्य चेत्यर्थः। द्वैरूप्यं नित्यत्वकाम्यत्वरूपविरुद्धधर्मद्वयं। अवैषम्यदृष्टान्तता तथाच नित्यत्ववैलक्षण्येऽपि काम्यत्वविरोधितया तुल्यतेतिभावः (४७)।

वुद्ध्यारोहः सन्देहाविषयस्तत्सदृशस्तत्सदृशविषयकः सन्देहाविषयतावच्छेदकरूपेण तथाच सन्देहाविषयतावच्छेदकावच्छिन्न प्रकारकनिश्चयविशेष्यीभूतधर्म्मिप्रदर्शनरूपोदृष्टान्तः अपेक्षितइतिभावः एकादश्युपवासे सन्देहविषयतावच्छेदकं प्रत्यवायजनकीभूताभावप्रतियोगित्वमिति। द्वेधाश्रवणाभावादिति, यस्य पर्णमयीजुहुर्भवति न स पापश्लोकं शृणोतीति श्रुत्या काम्यत्वं क्रत्वङ्गतासिद्धिस्तुपर्णमयजुह्वाभवति। काम्यकरणान्नित्यसिद्धिरितिन्यायात् क्रत्वङ्गतयानित्यत्वं तस्या नाङ्गीक्रियते क्रत्वङ्गत्वेनावश्यकतावोधकश्रुत्यन्तराभावात्। तेन कामनाविरहे तत्र पर्णमय-

नित्यत्वबोधकं, अग्निहोत्रं जुहुयात् स्वर्गकाम इति काम्यत्वबोधकं। यस्य पर्णमयी जुहुरित्यत्र नोभयार्थत्वं द्वेधाश्रवणाभावात्। अतएव नारायणोपाध्यायेन दधि-खादिरन्यायेन शिखाबन्धोपवीतधारणयोरुभयार्थत्वमुक्तं। कल्पतरुकृतापि ब्रह्मचारिकाण्डे, पञ्चमादिषु वर्षेषु ये नित्योपबन्धाः कामनोपबन्धाश्च श्रूयन्ते ते संयोगपृथक्-त्वन्यायेन नित्याः काम्याश्च। यथा पैठीनसिः, गर्भ-पञ्चमेऽब्दे ब्राह्मणमुपनयेत्। उपनयेदित्यनुवृत्तौ आप-स्तम्बोऽपि, अथ काम्यानि अर्थकामं सप्तमे पञ्चमे ब्रह्मवर्चसकामं अष्टमे आयुष्कामं दशमे अन्नादिकामं एकादश इन्द्रियकामं द्वादशे पशुकाममिति। मनुः,

भिन्न जुहुरपि कर्त्तव्येतिभावः। अतएवेति, एकरूपवैरूप्यसन्देहे वैरूप्या-न्तरस्य दृष्टान्ततयोपन्यासस्य तात्त्विकव्यवहारसिद्धत्वादेवेत्यर्थः। सदो-पवीतिना भाव्यं सदा बद्धशिखेनत्वित्यनेन प्रधानत्वं विशिखोव्युपवीतिश्च यत्करोति न तत्कृतमित्यनेनाङ्गत्वं एतदुभयात्मकत्वं दधिन्यायेन खदि-रन्यायेन च दर्शितमिति। अत्राङ्गत्वं मुख्यफलाजनकत्वेसति प्रधाना-पूर्व्वफलजनकत्वं प्रधानत्वञ्च मुख्यफलजनकत्वमिति तयोर्विरोधमाशङ्क्य तत्फलाजनकत्वेसति तत्फलजनकापूर्व्वजनकत्वमङ्गत्वमपूर्व्वभिन्नश्रौत-फलजनकत्वं प्रधानत्वमित्यभिप्रायेण समाहितं। तत्र मीमांसकनये-ऽपूर्व्वस्यापि विध्यर्थतया श्रौतफलत्वात् तज्जनकतामादायाङ्गेऽतिव्याप्ति-वारणायापूर्व्वभिन्नत्वविशेषणं व्यापारभिन्नत्वपर्य्यवसितं तेन कारीरीयागे-नापूर्व्वमजनयित्वैवावग्रहनिवृत्तिद्वारा वृष्टिरूपफलजनकतामते तामा-दायतदङ्गेनातिव्याप्तिः। न च खादिरयूपाद्यङ्गेऽपि वीर्य्यादिफलस्य श्रौतत्वात्तज्जनकतामादाय तत्रातिव्याप्तिरिति वाच्यं यत्राङ्गे फलश्रुति-स्तत्र फलप्रयोजकत्वस्यैवाङ्गे बोधनात् तच्च प्रयोजकत्वं प्रधानापूर्व्वद्वा-रैवेति प्रधानापूर्व्वस्यैव तत्फलजनकत्वमङ्गस्य तज्जनकत्वेऽङ्गकृतं दैवात्।

ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमइति। ब्रह्मवर्च्चसं वेदाध्ययनतदर्थज्ञानप्रकर्षकृतं तेजः। येषान्तु, राज्ञोवलार्थिनः षष्ठ इत्यादीनां कामनोपवन्धेनैव स्मरणं तेषां काम्यत्वं किन्तु पुरुषार्थस्वरूपसिद्धेस्तस्मादेवोपनयनस्वरूपः संस्कारोनित्यः सिद्धः (४८)।

गोदोहेन प्रणयनसिद्धेर्यथा न क्रतूपकारार्थं चमसेन

प्रधानाकरणे तत्फलं स्यात्। अतएवोक्तं फलवत्सन्निधावफलं तदङ्गमिति। अङ्गस्य फलजनकत्वाङ्गीकारेतु कलिकापूर्व्वद्वारीकृत्य श्रौतफलजनकत्वं प्रधानत्वं कलिकापूर्व्वत्वञ्चापूर्व्वजनकापूर्व्वत्वमिति खादिराद्यङ्गे नातिव्याप्तिः। नित्योपवन्धः कामनानुपरक्तकर्त्तृकोपनयनं। कामनोप्रवन्धः कामनोपवन्धकर्त्तृकोपनयनं तेन पञ्चमवर्षादिकाला उपनयने नित्याः काम्याश्चेत्यर्थः। नित्यकाम्ययोरङ्गत्वादितिभावः। यद्वा ते पञ्चमवर्षादिकृतोपवन्धा इति। यथेति नित्योपवन्धश्रुतिः काम्योपवन्धश्रुतिश्चेत्यर्थः। कामनोपवन्धेनैवेति काममोपरागेणैवेत्यर्थः। षष्ठादिवर्षेषु क्षत्रियादीनां नित्योपवन्धश्रुतेरभावादेवकारसङ्गतिः। स्वरूपसिद्धेरुपनयनस्वरूपसिद्धेरुपनयनरूप उपनयनेन रूप्यते जन्यते इत्युपनयनजन्य इत्यर्थः (४८)।

गोदोहेति गौर्दुह्यते अत्रेति व्युत्पत्त्या गोदोहः पात्रविशेषस्तेनापः प्रणयनं विशेषविधिप्राप्तं सामान्यप्राप्तचमसकरणकापःप्रणयनस्य वाधकं। अपःप्रणयनस्यैव यज्ञाङ्गत्वात् तत्र पात्राकाङ्क्षायां सामान्यविधिना चमसस्य विशेषविधिना गोदोहस्य विधानाच्चमसेनापः प्रणयेत् गोदोहेन पशुकामस्येति श्रुतेः पात्रस्याङ्गत्वं तत्रैकेनापःप्रणयने प्रधानसिद्धौ न पुनरङ्गस्य यज्ञकाष्ठनिर्म्मितपात्रविशेषरूपचमसस्यानुरोधेन प्रधानावृत्तिरितिभावः। नापि त्रिवर्जस्येति विशेषोल्लेखेन कालविशेषविहितानुष्ठानसापेक्षस्योपनयनस्यासत्त्वात् अविहितत्वात्। शरावादिनेति तस्यापःप्रणयने क्वाप्यश्रुतत्वात् संस्कारस्य नित्यत्वं असंस्कर्त्ता पिता वालश्चा भवति यथासमयं तदकरणे चामवत्या यजेत ततः संस्कारं करोतीति-

पुनः प्रणयनं। नापि त्रिवर्षस्योपनयनमाशङ्कनीयं तत्र विशेषोल्लेखिनानुष्ठानाक्षेपस्यासत्त्वात् शरावादिना यथा न प्रणयनमित्युक्तं (४८)।

अथैवमाभ्युदयिकश्राद्धं नित्यं काम्यञ्च। देवीपुराणं, अष्टकामाव्यभ्युदयास्तीर्थपात्रोपपत्तयः। पितॄणामतिरेकोऽयं मासिकान्नाद्ध्रुवः स्मृतः। मासिकान्नादमावास्या-

श्रुतेः सुतस्य च फलवत्त्वमेवमेनः शमं याति बीजगर्भसमुद्भवमित्याद्युक्ताप्रायत्यनिरासेन वैदिककर्म्मार्हताप्रयोजकत्वेन च तत्र चोपनयत्वं न संस्कारविशेषजनकतावच्छेदकक्रियागतवैलक्षण्यं तच्च जातिविशेषोऽखण्डोपाधिर्वा तदवच्छिन्नस्य कः कालइत्याकाङ्क्षायां पैठीनसिना पञ्चवर्षात्मक उक्तः मनुना गर्भाष्टमेऽष्टमेवाब्दे ब्राह्मणस्योपनयनमित्युक्तं तेन गर्भपञ्चमाष्टमवर्षात्मकोमुख्यः शक्तस्यावश्यकस्तत्राकरणे संस्कारस्यन्यूनत्वपातात् स्वकालादुत्तरोगौण इत्यादिगौणत्वोक्तेः, गौणकालावधिश्च पञ्चदशवर्षपर्य्यन्तः गर्भपञ्चमप्राक्कालः पर्य्युदस्तः ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे इति मनुनोक्तोपनयनस्य निरुक्तोपनयनत्वव्याप्यवैजात्य ब्रह्मवर्च्चसरूपफलजनकतावच्छेदकं वाच्यं तेन व्याप्यसामग्र्या व्यापकसामग्र्योनियतत्वेन काम्यकरणान्नित्यत्वसिद्धिरिति, क्षत्रियस्य षड्वर्षकृतोपनयनं बलरूपफलसाधनत्वेन काम्यं केनापि उपनयनसामान्यकालाकाङ्क्ष्यानुक्तत्वान्ननित्यं कामनारहितस्य षष्ठवर्षस्यानावश्यकत्वं परन्तूपनयनत्वव्याप्य वैजात्यस्य बलरूपफल जनकतावच्छेदकस्य प्रयोजकतया षष्ठवर्षस्योक्तत्वात् व्यापकनित्योपनयनस्यापि विहितकालत्वं तस्य वाच्यं व्यापकस्यासिद्धौ व्याप्यस्यासिद्ध्यापत्तेः क्षत्रियस्य मुख्योपनयनकालस्त्वेकादशवर्षरूपः तदन्येगौणकालाः गर्भषष्ठप्राक्कालस्तु पर्य्युदस्तः केनाप्यनुक्तत्वादिति विवेच्यं (४८)।

तीर्थस्य पात्रस्य च उपपत्तयः प्राप्तिकालाः काम्यत्वमाह तदानन्त्यायेति, आभ्युदयिकश्राद्धस्याङ्गत्वेऽपि तद्विना विवाहादिकरणे प्रत्यवायोत्पत्तेर्नित्यत्वं आनुषङ्गिकफलविशेषजनकतया काम्यत्वमितिभावः। स्वपि-

श्राद्धादयमतिरेकोऽष्टकादिश्राद्धकालोऽत्र आवश्यकः। विष्णुः, आदित्यसंक्रमणं विषुवद्दयं विशेषेणायनद्वयं व्यतीपातोजन्मर्क्षमभ्युदयश्च। एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः। श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते। अभ्युदयोविवाहादिः। तत्र विवाहान्तसंस्काराङ्गनान्दीमुखश्राद्धे पितुरधिकारमाह छन्दोगपरिशिष्टं, स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु। पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमात्। सुतसंस्कारकर्म्मसु सुतसंस्कारजनककर्म्मसु। संस्कारग्रहणात् पुत्रस्य विवाहान्तरे पित्रानाभ्युदयिकं कार्य्यं आद्येन संस्कारसिद्धौ द्वितीयादेस्तदजनकत्वात्। तथाच आत्म-

त्वभ्य इति संस्कार्य्यमातामहादिव्यावर्त्तनाय स्वेति, अभिविधावाङिति, अभिविधिर्व्याप्तिस्तेनोद्वाहमभिव्याप्येत्यर्थः। कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः नामकर्म्मणि वालानां चूडाकर्म्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृहीत्यनेनैकवाक्यत्वादितिभावः। तुशब्दस्यासार्थकतां विवृणोति पुनरन्य इति तत्क्रमादित्यत्र तत्पदस्य प्रक्रान्तसुतपरताभिप्रायेणाह तस्य संस्कार्य्यस्येति, तस्य सुतस्येत्यनुक्त्वा संस्कार्य्यस्येति यदुक्तं तत्संस्काराश्रयत्वेन प्राधान्यद्योतनाय क्रमादित्यस्य संप्रदानक्रममाश्रित्येत्यर्थः। पितरमादाय इत्यर्थ इत्यपि केचित्। तेषामित्यस्यार्थमाह पितॄणामिति श्राद्धं कुर्य्यादितीति पर्य्यवसितमिति शेषः। न च तत्पदस्य बुद्धिस्थवाचकतया संस्कार्य्यमातामहादीनां प्रागबुद्धिस्थत्वाभावेन कथं लाभ इतिवाच्यं तत्पदेन संस्कार्य्य पितामहप्रपितामहयोरुपादानात्, इत्यादिवहुवचनान्ता गणस्य संसूचका इति न्यायेन पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमिति वचनेन च वहुवचनात् संस्कार्य्यपितृमातामहगणलाभादेतादृशतात्पर्य्यार्थमेव व्याचकार ततश्चेत्यादिना, न च तेषामित्यनेन संस्कार्य्य

लायनगृह्यपरिशिष्टं, सीमन्तोन्नयनं प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कारइति श्रुतिरिति। गर्भपात्रयोरयं गार्भपात्रः गर्भस्य उदरस्थस्य पात्रस्य तदाधारस्य स्त्रियाइति कल्पतरुः। हारीतोऽपि। सकृत्तु कृतसंस्काराः सीमन्तेन कुलस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतोभवेत्। अत्र सकृत्संस्कृतपात्रजातानां सर्वेषां संस्काराभिधानेन प्रत्येककृतजातकर्म्मादिसंस्काराणां सुतरां सकृत्त्वं, सकृत् कृते कृतः शास्त्रार्थ इति न्यायाच्च। पिण्डानिति श्राद्धपरं कन्यापुत्त्रविवाहेष्विति श्राद्धविधायकविष्णुपुराणैकवाक्यत्वात्, तदेकवाक्यतया च सुतपदं कन्यापुत्त्रपरं। श्रोद्वहनादित्यत्राभिविधावाङ्। तदभावेऽपि संस्कार्य्यक्रमबाधकस्य पितुरभावेऽपि पुनरन्यः संस्कार्य्यः सपिण्डादिभ्यो तत्क्रमात्, चित्रं कर्म्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि

पितृप्रपितामहस्य तन्मातामहादीनाञ्च प्रागुक्तानां कथं न ग्रहणमिति वाच्यं तत्क्रमादित्यनेन तेषां व्यावर्त्तनात् न हि सर्व्वत्र तत्पदेन यावन्त एव बुद्धिस्था गृह्यन्ते किन्तु तात्पर्य्यवशात् केचनेति। यद्वा तदादिपदानां बुद्धिस्थत्वेन बुद्धिस्थे न शक्तिः बुद्धिस्थतावच्छेदकरूपेण बोधनप्रसङ्गात् बुद्धिस्थतावच्छेदकत्वोपलक्षित धर्म्मावच्छिन्ने तदादिपदशक्तिर्बुद्धिस्थता च बुद्धिविषयता उपलक्षणनिवेशात् शाब्दबोधे बुद्धिस्थतावच्छेदकत्वस्य न भानं, किन्तु वस्तुगत्या बुद्धिविषयतावच्छेदको योधर्म्मस्तेनरूपेण तदादिपदात् शाब्दबोधः चैत्रोऽस्ति तमानय इत्युक्ते चैत्रत्वरूपेण तत्पदाच्छाब्दबोधात् एवञ्च प्रकृते स्वपितृभ्य इति पितृपदेन पितृत्वं प्राग्बुद्धिविषयतावच्छेदकं स्वपदेन संस्कार्य्यपितृसम्बन्धलाभात् पूर्व्वसंस्कार्य्यपितृपितृगणलाभः बहुवचनस्य गणवाचकत्वात् तेषामित्यत्र

तद्वत् स्यात् संस्कारैर्व्विधिपूर्व्वकैरित्यङ्गिरसोक्तफलभागितया प्रधानस्य तस्य संस्कार्य्यस्य क्रमात्तेषां पितॄणां दद्यात्। ततश्च संस्कार्य्यपित्रादित्रयमातामहादित्रयेभ्यः श्राद्धं कुर्य्यात्। न च संस्कार्य्यस्य पितरमादाय तेषां पितुः सम्प्रदानभूतानां पितुःप्रवेशात् पितुःप्रपितामहेतरपञ्चानामिति नारायणोपाध्यायमतं युक्तमिति वाच्यं। पित्रनुप्रवेशेन संस्कार्य्यस्य पितृपितामहप्रपितामहानां श्राद्धे तन्मातामहपक्षस्यैव, पितरो यत्र पूज्यन्ते तत्र मातामहाध्रुवं, इत्यनेन युक्तत्वात् (५०)।

नवा तेषां संस्कर्त्तृपितॄणां संस्कार्य्यपितुः पितृगणमातामहगणानां वा ग्रहणं तत्क्रमादित्यन्वयानुपपत्तेः। आद्ये

---

तत्पदेन प्राग्बुद्धिविषयतावच्छेदकपितृत्वेन पितृगणमात्रलाभः तत् क्रमादित्यनेन सम्बन्धात् संस्कार्य्य पितृगणस्य विशेषस्य च लाभः तदादिपदेन क्वचित् समभिव्याहार विशेषवशात् बुद्धिविषयतावच्छेदकरूपेण बुद्ध्यविषयस्यापि बोधात् अतएव यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजन इत्यादि प्रयोगः। अत्राचरणीययोर्यत्तत्पदवाच्ययोर्भेदेऽपि यत्पदाधीनबुद्धिविषयतावच्छेदकरूपेण बुद्ध्यविषयस्यैव तत्पदेन बोधनात्। दशम्येकादशीविद्धा गान्धारी तामुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेदिति प्रयोगः गान्धार्य्युपोषितायाः एवात्र दशमीविद्धैकादश्या बुद्धिस्थता तदन्यस्या अपीदानीं तदन्याविद्धैकादश्यास्तस्मात्तां परिवर्ज्जयेदित्यत्र तत्पदेन ग्रहणादिति दिक् (५०)।

अन्येषां मतद्वयं दूषयितुमुपन्यस्यति नवेति। तेषामित्यस्य संस्कर्त्तृपितॄणामित्येकः पक्ष, स्तेषामित्यस्य संस्कार्य्य पितृपितॄणामित्यपरः पक्षः। अत्र पितॄणामित्यस्य विवरणं पितृगणमातामहगणानामिति। तत्क्रमादितान्वयानुपपत्तेरिति। तच्छब्देन संस्कार्य्यग्रहणे तत्क्रमस्य बाधादितिभावः। ननु तेषामितत्स्य पितॄणामितत्र्थः। तत्र तत्-

संस्कर्त्तुरनुपात्तत्वात्तच्छब्देनानुपस्थितेः, द्वितीये तेषामित्यनेनैव तेषां प्राप्तेस्तत्क्रमादित्यनुवादकतापत्तेरिति । एवञ्चाभ्युदयमात्रस्य नित्यत्वाद्द्वितीयविवाहेऽपीतराङ्गवत्तद्धेत्वाभ्युदयिकश्राद्धमावश्यकं । सर्व्वाण्येवान्वाधानीयमत्वर्थीयेनाविशेषादङ्गत्वप्राप्तेः । न च असकृद्यानि कर्म्माणि क्रियेरन् कर्म्मकारिणा । प्रतिप्रयोगं नैतस्युर्मातरः श्राद्धमेव च, इति छन्दोगपरिशिष्टान्न तत्र वृद्धिश्राद्धमिति वाच्यं । तस्यासकृत्त्वेनैव येषां नियतकारणमुक्तं तत्परत्वात् । नत्वनियतपुनःकारणकर्म्मपरं । अतएव यानि कर्म्माणि पुनःपुनः प्रतिदिनं प्रतिमासं प्रतिवत्सरं क्रियन्ते वैश्वदेवबलिकर्म्मदर्शपौर्णमासश्रावण्याग्रहायण्यादीनि तेषु प्रथमप्रयोग एव श्राद्धं मातृपूजा चेति परिशिष्टप्रकाशप्रभृतिभिर्नियतपुनःपुनःकरणकर्म्मस्वेव विषयो दर्शितः । विष्णुपुराणेऽपि, नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा, इत्यत्र बालानामिति बहुत्वेन निर्द्दिष्टं । अतएव ब्रह्मपुराणं विवाहस्य शुद्धत्वे तच्छ्राद्धं हेतुरित्याह यथा ।

---

क्रमादितस्य संस्कर्त्तृक्रमादितरार्थे संस्कार्य्यपितृक्रमादितरार्थे वाऽनन्वयानुपपत्तिरित्यत आह आद्य इति, अनुपात्तत्वात् प्राक्शब्देनानुपस्थानात् तच्छब्देनानुपस्थितेस्तत्परामर्शकत्वासम्भवात् । तु शब्देन कथञ्चित् प्रक्रान्तत्वेऽपि प्रधानस्य संस्कार्य्यस्य पितृगणं विहायान्येषां पितृगणपूजायाः स्फुटतरप्रमाणं विनानुचितत्वाच्चेति । द्वितीय इति अत्र कल्पे तु शब्दोऽप्यर्थे तेषामिति तत्पदेन बुद्धिस्थानां संस्कार्य्यपितृगणानां ग्रहणस्य स्वरसतएवसम्भवेन तत्क्रमादितरार्थकं स्यादितिभावः । अन्वाधार्थमाभ्युदयिकश्राद्धं तदर्त्थं तदङ्गकत्वमविशेषात् प्रक्रान्तविवाहसामान्यपरेण सर्व्वाण्येव इत्यनेनाद्यविवाहत्वेनाबोधनात् । मातर इति

नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्य्यमृद्धये। ततो-
विवाहः कर्त्तव्यः शुद्धः शुभसुतप्रदः। अतएव मुखदर्श-
नावृत्तौ श्राद्धावृत्तिप्रसङ्गः स्याद्विवाहवदिति श्राद्धविवेकः।
एतेन पुत्रविवाहादौ वृद्धिश्राद्धं नैमित्तिकमित्युक्तमिति
निरस्तं। स्वपितुः पितृकृत्येषु अधिकारो न विद्यत
इति छन्दोगपरिशिष्टेन जीवत्पितृकस्यावश्यकश्राद्धनिषे-
धेऽपि अङ्गत्वादेव च निषेकादौ जीवत्पितृकेणापि जीव-
त्समतिदद्यादित्यनेन पितामहादीनां वृद्धिश्राद्धमवश्यं
क्रियते। जीवत्पितृकादिना क्रियमाणे श्राद्धे पित्रादि-
स्थाने पितामहाद्यूहमाह विष्णुधर्म्मोत्तरं। येषां श्राद्धं

---

गौर्य्यादयोमातरः पूज्या इति शेषः। श्रावणी श्रावणपौर्णमास्यां साग्नि-
कर्त्तव्यमुपाकर्म्म आग्रहायणं नवशस्येष्टिः विषयोऽत्रसम्बन्धोऽसकृद्यानि
कर्म्माणीतिवचनस्य। निर्द्दिष्टमिति नामकरणादिभेदेन श्राद्धकरणं
निर्द्दिष्टमित्यर्थः। शुद्धत्वं विलक्षणसुतोत्पत्तिप्रयोजकधर्म्मविशेषजनकत्वं।
मुखदर्शनावृत्ताविति विष्णुपुराणे पुत्रादिमुखदर्शनादिके श्राद्धमभिहितं
तत्रपुत्रादीत्यत्रादिपदं आद्यपरं तेन प्राथमिकपुत्रमुखदर्शनत्वेन श्राद्धं
प्रति निमित्तता पुत्रादिमुखदर्शनस्य क्षणिकत्वेपि स्वजन्यसंस्कारद्वारा
श्राद्धं प्रति निमित्ततोपपद्यते इतिस्वमतं पुत्रादीत्यादिपदेन पौत्रप्रपौ-
त्रयोरुपसंग्रह इति हलायुधव्याख्याने पुत्रपौत्रप्रपौत्रान्यतममुखदर्शन-
त्वेन निमित्तता लभ्यत इति तन्मते दूषणं श्राद्धावृत्तिप्रसङ्ग इति निमित्त-
भेदेन पुनःपुनर्नैमित्तिकाचरणादितिभावः। विवाहवदिति विवाहभेदेन
श्राद्धावृत्तिवदित्यर्थः तेन विवाहमात्रे श्राद्धस्याङ्गत्वं शूलपाणेरप्यभिमत-
मितिभावः। न च पुत्रमुखदर्शनत्वेन निमित्ततामतेऽपि असकृद्यानि
कर्म्माणि क्रियेरन्निति वचनात् मुखदर्शनावृत्तौ श्राद्धावृत्तिरितिवाच्यं तद्व-
चनस्य असकृद्यानि कर्म्माणीत्यस्य उत्पत्तिविधिना वीप्सितपदादिघटि-
तेन पुनःपुनः कर्त्तव्यतया विहितानि यानि कर्म्माणीत्यर्थ मालोच्य तादृश-
कर्म्मपरत्वस्य परिशिष्टप्रकाशकारादिभिरुक्तत्वात्। अन्यथा मत्प्रति-

पिता दद्यात्तेषामेव स कारयेत्। मन्त्रोद्देशेन च कर्त्तव्यं तेन श्राद्धं नराधिप। स जीवत्पितृकः। प्रतिनिधिना तु अमुकस्य पितुरित्याद्यभिलापे प्रयोज्यं। मन्त्रे तु न तथेति वक्ष्यते। एवञ्च वृद्धिश्राद्धं यदर्थं कृतं तत्कर्म्म चेत्तद्दिने विघ्नान्न क्रियते तदा दिनान्तरे तत्कर्म्मणि क्रियमाणे तदङ्गत्वेन पुनर्वृद्धिश्राद्धकरणं। प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्नैच तत्क्रिया, इति छन्दोगपरिशिष्टेन साङ्गकरणाभिधानात्। नान्दीमुखे छन्दोगैर्योषितां श्राद्धं न कर्त्तव्यं (५१)।

---

ह्वादौ श्राद्धावृत्तिर्नस्यादितिभावः, एतेनेति निरस्तमित्यनेनास्यान्वयः। एतेन श्राद्धस्य विवाहाद्यङ्गत्वेन विवाहादिगतशुद्धिहेतुत्वेन च इत्यर्थः। उक्तमिति शूलपाणिभिरित्यर्थः। यद्यप्यभ्युदयस्य निमित्ततयाऽस्य श्राद्धस्याभ्युदयिकत्वमुक्तं स्वयमपि श्राद्धतत्त्वे न च विवाहादेः परभावितया प्राग्भावि श्राद्धे कथं निमित्तता नियतपूर्व्ववर्त्तिन एव निमित्तत्वादितिवाच्यं प्रवेशे नववेश्मन इत्युक्त नवगृहप्रवेशस्य क्षणिकतया श्राद्धपर्य्यन्तस्थायित्वाभावेऽपि तदुद्देः श्राद्धकालस्थायित्वेन निमित्ततया नवगृहप्रवेशनिमित्तकत्ववत् परभाविनोऽपि विवाहादेर्निश्चयस्य श्राद्धनिमित्ततासम्भवेन विवाहादिनिमित्तकत्वस्यापि श्राद्धे सम्भवादिति, तथापि नैमित्तिकत्वेन पारिभाषिकत्वरूपं नैमित्तिकत्वमिह निराकृतं प्रधानकर्म्मण एव शास्त्रे नैमित्तिकत्वेन गणनात्तदङ्गस्य, अतएव मार्कण्डेयपुराणे पुत्रजन्मादिनिमित्तक एव नैमित्तिकत्वमुक्तं यथा नैमित्तिकमथोवक्ष्ये श्राद्धमभ्युदयात्मकं। पुत्रजन्मनि तत्कार्य्यं जातकर्म्मसमं नरैरिति आवश्यकश्राद्धनिषेधेऽपि आवश्यकप्रधानश्राद्धनिषेधेऽपि। अङ्गत्वादेवेति प्रधानाधिकारिणो अङ्गाधिकारनियमादितिभावः एवञ्च स्वपितुः पितृकृत्येषु अधिकारोऽस्ति न इति वचनं प्रधानश्राद्धादिपरं जीवन्तमतिदद्यादित्यादिवचनमङ्गीभूतश्राद्धपरमिति वाचनिकोऽप्यधिकारः (५१)।

न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते। स्वभर्त्तृ-पिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता, इति छन्दोगपरि-शिष्टनिषेधात्। नचात्र योषिद्भ्योऽपृथगद्द्यादिति वाच्यं तथात्वे अवसानदिनादृतेत्युक्तिव्यर्थं स्यात्। तथाहि

न योषिद्भ्य इति। नचात्रेति, अत्रमान्दीश्राद्धादौ अपृथगदद्यादिति, तथाच भर्त्रा सह मिलितानां मातॄणां देवतात्वज्ञाभिनोभयोद्देशेन श्राद्ध मितिभावः नचोभयोद्देशेन पिण्डदाने योषितामपि तत्पिण्डभागि-त्वात् स्वभर्त्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृतेत्यनेन विरोध इति वाच्यं स्वञ्च भर्त्ता च तयोः पिण्डं तन्मात्राभ्यस्तदंशेभ्य इति व्याख्या-नात् अमावस्यादाविति न चामावस्यादौ तदप्राप्तावपि वृद्धादौ मातृ-श्राद्धस्य प्राप्तत्वात् तत्रैवापृथक्त्वविधायकमिदमिति, तत्रावसानदिने-ऽपि योषितां श्राद्धस्य प्राप्तत्वात्तत्रापृथकत्ववारणायावसानदिनादृते इत्युक्तमितिवाच्यं अमावस्यादौ मातृश्राद्धाभावे तत्र मातॄणां कथं तृप्तिरित्याकाङ्क्षानिवृत्तये स्वभर्त्तृ पिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृतेत्य-मावस्यादावप्यन्वयस्य वक्तव्यत्वात् योषितां मिलितदेवतात्वे पुंसामपि मिलितदेवतात्वमिति योषित्पदवैयर्थ्यापत्तेश्च न च योषित् पदमनु-वादः सर्व्वेषामेवापृथक् श्राद्धमितिवाच्यं स्वभर्त्तृपिण्डमात्राभ्यः इति हेतु-वन्निगदविरोधात् एतेनामावास्यायां पितृभ्यो दद्यादित्यत्रपितृपदं प्राप्त-पितृलोकपरमिति तत्रामावस्याश्राद्धस्यापि प्राप्तत्वात् तदनुवादेनापृथक्-त्वविधानसम्भव इति परास्तं असावेतत्ते यजमानस्य पित्रे इत्यादि श्रुत्यैकवाक्यतया पितृभ्यो दद्यादित्यत्र पितृपदस्य पित्रादिपुरुषत्रयपर-त्वाच्च न च मातुर्जीवने पितुः पृथक्श्राद्धार्थं योषित् पदसार्थक्यं असावेतत्ते यजमानस्य पित्रे इत्यादि श्रुतिस्तु मातुर्जीवनपक्षे मातृ-निरपेक्षपितृपरा, तत्र पुरुषत्रयपिण्डादिदाने प्रयोगविधानादितरपुरुष-व्यावृत्तिरर्थवशसम्पन्नेति वाच्यं सपिण्डीकरणादूर्द्ध्वं यत् पितृभ्यः प्रदी-यते। सर्व्वेष्वंशहरा माता इति धर्म्मेषु निश्चय इति शातातपवचने पित्रादिपिण्डभागहारित्वेन मात्रादीनां बोधनात् पितृभ्य इत्यत्र पितृ-पदस्य पित्रादिपरत्वावधारणादेकवाक्यतालाभाय च स्वभर्त्तृपिण्ड-

परिप्राप्ते योषितां श्राद्धेऽपृथक्त्वं विधीयते किंवाऽपृथक्-श्राद्धं विशिष्टं विधीयते। नाद्यः अमावास्यादौ योषिद्दानाप्राप्तौ कथं तदनूद्यापृथक्त्वमात्रविधानं। नान्त्यः तथापि अवसानदिनाहृतइत्यस्य वैयर्थ्यापत्तेः अवसानदिने तु। स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतं मृताहनि यथान्यायं नृणां यद्‌यदिष्टोदितं, इति मार्कण्डेयपुराणीयेन श्राद्धप्राप्ते विशिष्टविधित्वानुपपत्तेः। तस्माद-

---

मावाभ्य इत्यस्य स्वीयभर्त्तृमात्रोद्देश्यकदत्तपिण्डभागपरत्वं नतूभयुत्पत्त्या उभयोद्देश्यकपिण्डभागपरतेति तद्विरोधेनापृथक्दानस्य पूर्व्वार्द्धबोधनासम्भवाच्च। नान्त्य इति, विशिष्टविधित्वानुपपत्तेरिति, अवसानदिने पृथक्योषित्श्राद्धस्य प्राप्तत्वात् सामान्यविशेषन्यायेन योषिद्भ्योऽपृथग्दद्यादिति सामान्यविधेरवसानदिनेतरश्राद्धपरत्वलाभे किमवसानदिनाहृते इति वचनेनेति भावः। यद्यपि अमावस्यायां पितृभ्यो दद्यादिति पृथक्पितृश्राद्धप्राप्तावप्यपृथङ्मातृश्राद्धस्य विधेयता सामान्यविधिवलात् पृथक्श्राद्धापृथक्श्राद्धयोरविरोधात् न चैकश्राद्धेन द्वयसिद्धौ श्राद्धान्तरकरणमनर्थकं इति वाच्यं, मातृजीवने पितॄणां पृथक्श्राद्धं तदुपरमेऽपृथक्श्राद्धमिति विकल्पद्वये विधिद्वयविकल्पनात्। तथाऽवसानदिने पितृजीवने पृथङ्मातृश्राद्धं तदजीवनेऽपृथङ्मातृश्राद्धमिति विकल्पापत्त्या अवसानदिनाहृते इत्यस्य सार्थक्यसम्भव इति तथापि अवसानदिनभिन्नकालेऽपृथग्योषिद्भ्योदद्यादितिविधौ कालविशेषालाभात् सामान्यविध्यसम्भवः किन्तु यत्र वृद्ध्यादौ मातृश्राद्धं सामान्यतोविहितं तत्रैव छन्दोगानामपृथक्श्राद्धविधायकमिदमिति छन्दोगोद्वहावष्टकायाञ्चापृथङ्मातृभ्योदद्यादिति विशेषतो विधिकल्पने अवसानदिनाहृते इत्यस्य वैयर्थ्यं इदमुपलक्षणं भिन्नभिन्न विधिकल्पनगौरवञ्चेति अनुवादः उक्तार्थबोधकशब्दः तथाच पृथक् पदस्यार्थो न विवक्षितः किन्तु उद्धृततया नञः पर्य्युदासत्वे तात्पर्य्य-ग्राहक इतिभावः। वैपरीत्यं अवसानदिनाहृते इतिवाक्यमनुवादः

वसानदिनादितत्रति वाक्यस्य सार्थकत्वाय पृथक्पदमेवानुवादः। न च वैपरीत्यं तथात्वे वाक्यानुवादः स्यात्। अव्ययपदानुवादे तु विभक्तेर्नानुवादकतेति। एवमेवेशानन्यायाचार्य्यः। तस्मात्। मातृश्राद्धन्तु पूर्व्वं स्यात् पितॄणां तदनन्तरं। ततोमातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतं, इति शातातपवचनात्। अन्वष्टकास्वष्टकावदग्नौ हुत्वा दैवपूर्व्वं मात्रे पितामह्यै प्रपितामह्यै पूर्व्ववच्छ्राद्ध-

पृथक्पदं नञर्थान्वयितया सार्थकं। वाक्यानुवादः स्यादिति एकस्य पदस्यानुवादकतया सामञ्जस्ये एकवाक्यानुवादकताकल्पनानौचित्यात्। ननु विभक्तेरपि शक्तिमत्त्वेन पदत्वात् पृथक्पदानुवादेऽपि वाक्यस्यानुवादकतास्यादित्यत आह विभक्तेर्नानुवादकतेति, विभक्तेर्लुप्तत्वादितिभावः। शातातपवचनादित्यादिपञ्चमीत्रयस्य जन्यज्ञानविषयत्वमर्थस्तस्य श्राद्धेऽन्वयस्तथा च शातातपादिवचनजन्यज्ञानविषयेषु वृद्ध्यादिनिमित्तकश्राद्धेष्वित्यर्थः विषयत्वान्तस्य वृद्ध्यादि निमित्तकत्वस्य च वाक्यार्थे न प्रवेशः, किन्तु योषिदितरत्वस्य स्वार्थकार्थं मातृश्राद्धस्यावसानदिनभिन्ने प्राप्ते तज्ज्ञापनाय, तेन छन्दोगोऽवसानदिनभिन्ने योषिदितरेभ्यः पितृभ्योदद्यादिति वाक्यार्थः योषिदितरेभ्य इतिविशेषणसार्थकत्वायेत्युक्त्या पितृभ्य इतिविशेष्यपदपूरणं सूचितं नञोऽनुयोगिवाचकपदसाकाङ्क्षत्वात् स्त्रीणामशौचान्तद्वितीयदिनादिश्राद्धेषु पर्य्युदासापत्तेश्च अतएव शातातपेन सपिण्डीकरणादूर्द्ध्वमित्युक्तं तत्र पितृपदं प्राप्तपितृलोकपरं अन्यथा योषिदितरत्वस्याव्यावर्त्तकतापत्तेः तथाच वृद्ध्यादिनिमित्तकश्राद्धं अवसानदिनभिन्नकालीन प्राप्तपितृलोकश्राद्धत्वेनामावास्यादिनिमित्तकश्राद्धसाधारणरूपेणानूद्य योषिदितरत्वं विधीयते येन रूपेण प्राप्तं तेनैव रूपेणानुवादः क्रियत इति नियमाभावात् न चावसानदिनेतरस्मिन् छन्दोगोयोषिद्भ्यो न दद्यादिति नञः प्रतिषेधपरतास्तु किं पर्य्युदासेनेति वाच्यं छन्दोगानां मातृश्राद्धस्य प्रत्यवायजनकत्वाश्रवणात् तृप्तिरूपफलस्य भर्त्तृपिण्डभागि-

णान् भोजयित्वा, इति विष्णुसूत्रात्। मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तरा क्रिया, इति विष्णुपुराणात् वृद्ध्यन्वष्टकावसानदिननिमित्तकश्राद्धेषु छन्दोगोऽवसानदिनव्यतिरेकेण योषिदितरेभ्योदद्यात् (५२)।

ततश्च योषिदितरेभ्यइति विशेषणसार्थकत्वाय तासां दानाभावे तत्र तस्या योषितां कथं तृप्तिरितिचेत् अमावस्यादिसामान्यनिमित्तात् प्राप्ताभ्यः स्वभर्त्तृपिण्डमात्राभ्यः। तत्रापि कथं तत्प्राप्तिरिति चेत्। सपिण्डीकरणादूर्द्धं यत् पितृभ्यः प्रदीयते। सर्व्वेष्वंशहरा माता इति धर्म्मेषु निश्चयः, इति शातातपवचनात्। न च छन्दोगेतरोद्देश्यादौ योषिद्भ्यः पृथक् श्राद्धं दद्यादिति वाच्यं विधेयप्रागर्थापोषकत्वेन स्वभर्त्तृपिण्डमात्राभ्योयतस्तृप्तिरित्यस्या-

---

तया सिद्धिप्रदर्शनेन स्वतन्त्रतयामातृश्राद्धस्य निष्फलत्वावगतेः पर्य्युदासस्वीकारात् नञोऽन्योन्याभावे लाघवेन शक्ततया निषेधपरतया लक्षणापत्तेश्च न च योषिदितरश्राद्धविधानेऽपि कथं योषितां श्राद्धनिवृत्तिः मात्रे पितामह्यै प्रपितामह्यै दद्यात् इति सर्व्वशाखिसाधारणविधिना मातृश्राद्धस्यापि प्राप्तेरिति वाच्यं सामान्यतः प्राप्तस्य पुनर्व्विशेषविधानमनर्थकमित्यनुपपत्तिमुखेनापरविशेषनिवृत्तिरवसीयते व्रात्यमयाचितं भुञ्जीत इत्यादौ याचितभोजननिवृत्तिवदिति (५२)।

ननु योषिदितरत्वविशेषणं किमर्थमित्यत आह ततश्चेति, नन्वेकामुद्दिश्य दत्तेन पिण्डेनान्यस्य तृप्तावतिप्रसङ्ग इत्यभिप्रेत्याह तत्रापीति, सर्व्वेष्वंशहरेति, पतिमुद्दिश्यदत्ते धने पत्नीस्वत्ववत् एकत्वं सागतायस्मात्सहमन्त्र इतिव्रतैरित्यादिवचनादिति, छन्दोगस्य प्रक्रान्तत्वेनोपस्थित्या तत्र नञर्थभेदान्वयेन छन्दोगेतर इत्यस्य लाभः, विधेयश्छन्दोगेतरकर्त्तृकयोषित्सम्प्रदानकपिण्डदानरूपः, प्रागर्थः पूर्व्वार्द्धस्यार्थस्तदपोषकत्वेन तदनुपयोगित्वेनेति। ननु न योषिद्भ्य इति वचनं यदि निरुक्त-

न्वयानुपपत्तेः। किन्तु न योषिद्भ्य इत्यस्य योषिदितरेभ्य इत्यर्थकत्वे वृद्ध्यादौ योषित्सम्प्रदानकश्राद्धविधीनां छन्दोगेतरकर्त्तृकत्वं प्रतीयते, यजमानेच्छितं हविर्जुहोतीत्यस्यार्थानुरोधेन स्वर्गकामपदस्याऽन्येतरपरत्ववत्। अथवा न योषिद्भ्य इत्यस्य छन्दोगेतरो वृद्ध्यादौ योषिद्भ्यः पृथक्श्राद्धं दद्यादित्येवार्थः। ततश्च वृद्ध्यादौ छन्दोगयोषितां कथं तृप्तिरित्याकाङ्क्षामुत्थाप्य उत्तरार्द्धान्वय इति। अन्वष्टकायान्तु साग्नीनामेवाधिकारः। विष्णु वचने होमत्वादेवाग्निप्राप्तेरग्निग्रहणं तन्नियमार्थं। अत्रानग्नीनामग्नौकरणहोमे विप्रपाण्यादेर्विधानादत्रापि तथैतिवाच्यं। प्रकृतीभूतश्राद्धविध्युक्तस्याधारस्य विकृती-

व्याख्यानेन छन्दोगयोषित्सम्प्रदानकपिण्डदाननिषेधतात्पर्य्यकं तदा वृद्ध्यादौ मातृश्राद्धपरवचनस्य तत्रबाधाद्विरोध इत्यत आह किञ्चित्यादि। अभ्यस्ताविकारित्वे तस्येच्छणासम्भवाद्यजमानेच्छितत्वबाधेन तत्तत् श्रुतिविरोधः स्यादिति स्वर्गकामपदस्यान्येतरस्वर्गकामपरत्ववदित्यर्थः। ननु न योषिद्भ्य इति वचनस्य योषिदितरत्वरूपसम्प्रदानविशेषणविधायकत्वमफलं। स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु, इत्यादि छन्दोगपरिशिष्टादि वचनेन योषिदितरेषां पित्रादीनां श्राद्धस्य प्राप्तत्वात्। छन्दोगयोषितां श्राद्धस्याप्राप्तत्वाच्च न तासां श्राद्धकरणप्रसङ्गः। मातृश्राद्धन्तु पूर्व्वं स्यादित्यादि वचनस्य छन्दोगेतरपरत्वलाभाय तत्समानार्थकतामभिप्रेत्य न योषिद्भ्य इति वचनव्याख्यानमाह अथवेति। अत्र पृथक्पदमपि सार्थकं तस्य मात्रादिक्रमेण श्राद्धतात्पर्य्यकत्वात्। उक्तार्द्धस्य प्रागर्थापोषकत्वेऽपि सार्थक्यायाह ततश्चेति अत्र केचिद् जीवत् पतिकानां मृतानां छन्दोगयोषितां वृद्ध्यादौतृप्त्यभावप्रसङ्गः पितृश्राद्धाभावादिति, न योषिद्भ्य इति वृद्ध्यादौ विहितमातृश्राद्धमवसानदिनभिन्नकालीनयोषित्श्राद्धत्वेनानूद्य तत्रापृथक्त्वं विधीयते अत हेतु-

भूतश्राद्धविशेषविहिताधारेण बाधात्, शरमयवर्हिष कुशमयवर्हिर्बाधवत्। न वा लौकिकाग्नौ होमः न पैत्रयज्ञीयोहोमोलौकिकाग्नौ विधीयते, इति मनुना निषेधात्। वाचस्पतिमिश्रोऽप्येवं। (५३)।

अथैकादश्युपवासव्रताधिकारिणः। यावन्नोपवसेज्जन्तु पद्मनाभदिनं शुभमिताञ्च जन्तुपदश्रवणात्। अष्टा

श्छन्दोगयोषितां उभयोद्देश्यकदत्तपिण्डभागादेव तृप्तिजननादिति शेषात् न च तावता कथं जीवत्पतिकाया योषितस्तृप्तिरुभयोद्देश्यकपिण्ड भावादितिवाच्यं। न योषिन्न इत्यत्र प्राप्तपितृलोकपतिकाभ्य इति विशेषणं पूरणीयं। आसामित्यस्यापि प्राप्तपितृलोकपतिकच्छन्दोग योषितामित्यर्थः। पृथक्पदं भर्त्तृसाहित्याभावविशिष्टपरं तत्र भर्त्तृ योगे भर्त्तृसहिताभ्य इत्यर्थोलभ्यते, एवञ्च जीवत्पतिकाभ्यः पृथग्दान विष्णुसूत्रादिसामान्यवचनात्। सपिण्डीकरणादूर्द्धमिति शातातप वचनं सर्व्वशाखिसाधारणममावस्यादौ मातृश्राद्धाभावेऽपि तासां तृप्ति बोधकमित्याहुः। तच्चिन्त्यं नान्दीमुखाः पितरः प्रीयन्तामिति दैवं वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः माता महेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यश्च प्रीयन्तां। न स्वधाम् प्रयुञ्जीतेति गोभिलसूत्रे पित्रादिषट्पुरुषाणामेव विशेषतोनिर्द्देशादिति होमत्वाद्भवेति हुत्वेति पदलभ्यादित्यर्थः, तन्नियमार्थं प्रकृतीभूतमष्टका श्राद्धं आधारान्तरं विप्रपाण्यादि, विकृतीभूतमन्वष्टकाश्राद्धं तत्र विशेष विहितोऽग्निरूपाधारस्तेन बाधादित्यर्थः प्रकृतीभूताग्निहोमयागं कुशमयवर्हिर्विहितं तद्विकृतीभूतयागे शरमयवर्हिर्विधानात् कुशमय वर्हिर्बाधवदित्यर्थः न वा लौकिकाग्नौ होम इति तावतापि अग्निःनिय मस्य साग्निकर्त्तव्यतायाश्च सम्भव इति भावः (५३)।

अथैकादश्युपवासाधिकारिण इति वैष्णवावैष्णवगृहस्थयत्यादि-भेदे नाधिकारिविशेषभेदाय बहुवचनं। अधिकारो विधिनियोज्यतया करणाकरणयोः पुण्यपापभागिता। मर्त्त्यपदवैयर्थ्यापत्तेरिति तथाच




ष्टादधिकोमर्त्त्योह्यपूर्णाशीतिवत्सरः। भुङ्क्ते यो मानवोमोहादेकादश्यां स पापकृदिति कालमाधवीयधृतनारदवचने मर्त्त्यमानवपदयोः श्रवणात् मनुष्यमात्रस्याधिकारो न जात्याश्रमविचारः। एवञ्च नित्योपवासी योमर्त्त्यः सायं प्रातर्भुजिक्रियां। संत्यजेन्मतिमान् विप्रः संप्राप्ते हरिवासरे। इति कात्यायनवचने मर्त्त्य इत्यभिधानानन्तरं विप्र इतिपदं तस्याधिकद्दोषार्थं। अन्यथा मर्त्त्यपदवैयर्थ्यापत्तेः। नच, अनड्वान् ब्रह्मचारीच आहिताग्निश्च ते त्रयः। अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नतां। इति स्मरणात् साग्निब्रह्मचारिणोरत्रानधिकार इति वाच्यं। हेमाद्रिधृताग्निपुराणवचनेन तयोरप्यधिकारावगमात्। यथा। गृहस्थोब्रह्मचारी च

विप्रस्य मर्त्त्यत्वकीर्त्तनं मर्त्त्यत्वेनोपवासाधिकारं सूचयति। विहिताकरणनिषिद्धाचरणयोरधिकदोषताप्रयोजकविप्रत्वमतिमत्त्वाभ्यामुपादानञ्च भोजनेऽधिकदोषं दर्शयति न तु विप्रत्वमतिमत्त्वाभ्यामधिकारमिति भावः। परन्तु वचनमिदं भोजनचतुष्टयमित्यात्मकोपवासासमर्थे भोजनद्वयनिवृत्तिरावश्यकीति प्रदर्शयन्नित्योपवासलक्षणपरमिति बोध्यं। अनड्वान् वृषः अयञ्च दृष्टान्तार्थः ब्रह्मचारी अकृतसमावर्त्तनः। सिध्यन्ति स्वकार्य्यक्षमा भवन्ति वृषस्य कार्य्यं भारवहनादि, ब्रह्मचारिणः कार्य्यमध्ययनगुरुशुश्रूषादि, आहिताग्निकार्य्यं होमतदर्थकाष्ठवहनादि। नैषां सिद्धिरिति न सिद्धिः न स्वकार्य्यकरणसामर्थ्यं। तथाच ब्रह्मचारिणः स्वाध्ययनाद्यनुरोधात् साग्निकस्य होमाद्यनुरोधात् उपवासानधिकारः प्रदर्शितः। अधिकारावगमादिति। तथाऽनड्वानिति वचनं काम्योपवासप्रतिषेधकं वस्तुतस्तु काम्यमपि स्वाध्ययनाद्यविरोधे ब्रह्मचार्य्याहिताग्निभ्यां प्रकार्य्यं सामान्यनित्यञ्च स्वाध्यायाद्यनुरोधे प्रतिनिधिना संपाद्यं एकादश्यादिविशेषोपवासस्तु स्वयं कर्त्तव्यः न तु स्वाध्यायाद्यनु-

आहिताग्निस्तथैव च। एकादश्यां न भुञ्जीत पक्षयो-रुभयोरपि। सभर्तृकाया व्रतोपवासादिः पृथङ्निषिद्धो मनुना, यथा। नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं। पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते। विष्णुनाऽपि भर्त्तुः समानव्रतचारित्वमित्युक्तं। समानव्रतचारित्वं भर्तृव्रताचरणे तदानुकूल्यकारित्वं। यत्र तु सावित्रीव्रतादौ विशेषविधिस्तत्र भर्त्रनुज्ञया पृथगपीति। यथा शङ्खः। कामं भर्त्रनुज्ञातव्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्म्म इति। यत्तु, पत्यौ जीवति या नारीउपोष्य व्रतमाचरेत्। आयुः संहरते पत्युः सा नारी नरकं व्रजेत्। इति विष्णूक्तं तदननुज्ञातविषयं। कात्यायनः, विधवा या भवेन्नारी भुञ्जीतैकादशीदिने। तस्यास्तु सुकृतं नश्येद् भ्रूणहत्या दिने दिने। जीमूतवाहनः, एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही। इति गोभिलवचनाद्गृहिणः शुक्लैकादश्यामेवाधिकारः। न च गृहीतरपरत्वे कृष्णैकादश्याः, कथं, दशम्यां नियताहारोमांसमैथुनवर्ज्जितः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। इति विष्णुधर्म्मोत्तरमत्स्य-

---

रोधात् प्रतिनिधिना सम्पाद्यंतयोरपि विशेषोपदेशादितिभावः। तदानुकूल्यकारित्वमिति पतिकृतकर्म्मणैव स्त्रीणां तत्फलभागहारित्वादितिभावः। पत्नीसहभाविन क्रियमाणे कर्म्मणि यदुपवासादिकमङ्गं तत् पत्न्या कार्य्यमिति बोध्यं। भ्रूणहत्या भ्रूणहत्यापापं दिने दिने प्रत्येकादशि, अवसितं सूतं तत्सम्बन्धीति यावत्, अपयित्वा पक्षा यतीनां मांस-

पुराणवचने उभयपक्षीयदशम्यां मांसमैथुनवर्ज्जनविधान-मिति वाच्यं। वानप्रस्थस्यापि ऋतौ मैथुनसंभवात्। अतएव पुराणे ऋषिकुमाराः श्रूयन्ते। पुत्रेषु भार्य्यां निःक्षिप्य वनं गच्छेत् सहैव वा। इति मनुवचनाच्च तस्य मांसभोजनमप्याह वौधायनः। अथ वानप्रस्थ-द्वैविध्यं पचमानका अपचमानकाश्चेत्युपक्रम्य। कियद्दूरे स्वतोऽवसितमाममांसं व्याघ्रकश्येनहतमित्येवमादिभिर-न्यैर्व्वा हतमानीय श्रपयित्वा सायं प्रातरग्निहोत्रं कृत्वा अथ यतिथिव्रतिभ्यश्च दत्त्वा अथैतच्छेषभक्ष्या इति। मधुमांसवर्ज्जनन्तु वनस्थानाममांसभक्षीनामित्यादि। तस्मात् कथं दशम्यां नियताहार इत्यादि वचनवलाद-पुत्रस्य गृहिणोऽप्युभयैकादश्युपवासव्रतमिति। तथा इन्दु-क्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे। उपवासं न कुर्व्वीत पुत्रवन्धुधनक्षयात्। इति वायुपुराणवचने वन्धु पदश्रवणाच्च। न हि वन्धुशून्यः कश्चिद्गृही पितृभ्रात्रा दिषु वन्धुपदप्रयोगात्। वन्धुपदस्थाने दारेति क्वचित् पाठस्तत्रापि तथैवेति। यच्च न कुर्य्यात् पुत्रवान् गृही-त्यत्र पुत्रवानितिपदं तत्पुत्रवतां वानप्रस्थादीनामपि। निषेधार्थमित्याह। हेमाद्रिरपि, शुक्लामेव सदा गृही-

भोजननिषेधादयतीति। इतरवत् गृहस्थ इव। अमांसभक्षीनां त्यक्त-मांसभोजनानां स्त्रीविरहिणां तेषां निवृत्तिधर्म्मत्वात्। न च श्रौतेन पशुना इमां यजेत वनाश्रमीत्येकादशस्कन्धवचनमप्येतत्परं। वन्धु-पदश्रवणाच्चेति वन्धुपदं गृहिमात्रस्य निषेधाधिकारं सूचयति;तत्र वीज-माह न हीत्यादि। तथैवेति तथाच दारपदमपि गृहिमात्रमधिका-

तिवचनपर्य्यालोचनया सकलकृष्णैकादशीषूपवासाभाव-प्राप्तौ। शयनीबोधनीमध्ये या कृष्णैकादशी भवेत्। सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन। इति ब्रह्मवैवर्त्तवचने शयनबोधनमध्यवर्त्तिकृष्णैकादशीषूपवास-विधानात्तास्वेव गृहिणोऽधिकारः, नान्यत्र प्राप्त्यभावात्। सामान्यविशेषयोर्विकल्पासम्भवात् पर्य्युदास एव। तेन शयनबोधनमध्यवर्त्तिकृष्णैकादशीष्वपि पुत्रवतोगृह-स्थस्य नाधिकार इत्याहु (५४)।

अत्रोच्यते। गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। इति हलायुधहेमाद्रिधृताग्निपुराणवचने गृहस्थमात्रस्य कृष्णै-

रितया सूचयति तद्वचने कर्त्तृविशेषाश्रवणादितिभावः। अपुत्रस्येति शुक्लामेव सदा गृह्णीति वचने गृहिपदस्य पुत्रवद्गृहिपरत्वादितिभावः। इन्दुक्षयेऽमावास्यायां। यानप्रस्थादीनामपीति, तथाच गृहिणां पुत्र-वतान्न निषेधः न तु पुत्रवत्त्वं गृहिविशेषणं पुत्रवन्धुधनक्षयादित्यविशेष-श्रवणात्। पुत्रवतो गृहस्थस्य नाधिकार इति गृहस्थसामान्यनिषेधे पुनः पुत्रवद्गृहस्थस्य निषेधोविशेषनिषेधार्थेति भावः (५४)।

मतद्वयं दूषयति, अत्रोच्यत इति, अप्रयोजकमिति, तथाच पुत्रादि-क्षयरूपानिष्टसूचनाय पुत्रवत्पदं न तु कर्त्तृविशेषणतया विवक्षित-मितिभावः। दोषकथनञ्च दोषविशेषज्ञापनाय योऽनुवादः कृष्णैका-दश्यां कथं गृही नोपवसेदित्याकाङ्क्षोत्थापितं वाक्यं तद्विषयं तेन बोधितमित्यर्थः न च कर्त्तृविशेषणार्थमिति न तु कर्त्तृविशेषणतया बोधितमिति, वस्तुसत्त्वेऽप्युपवास इति भावः। कर्त्तृविशेषणतया बोधितं पुत्रवत्त्वमित्यर्थः। अतएव क्वचिदर्थवादस्य प्रामाण्यानुरोधा-देव। अप्रामाण्यमितीति। व्यवहारात् पदानां शक्तिग्रहस्तथाहि केनचिद्वृद्धेन घटमानय इत्युक्ते तत् श्रुत्वाऽपरेण वृद्धेन घट आनीतः

कादश्युपवासप्राप्तौ शुक्लामेव सदा गृह्णीति पुत्रवद्गृहि-विषयं तस्यैव कृष्णायां निषेधश्रुतेः। तथाचोपवास-मधिकृत्य ब्रह्मपुराणं। एकादशीषु कृष्णासु रविसं-क्रमणे तथा। चन्द्रसूर्य्योपरागे च न कुर्य्यात् पुत्र-वान् गृहीति। न च वसुमत्त्ववत् पुत्रवत्त्वमप्यप्रयो-जकं। वसुपदं दोषकथमार्थवादमात्रं नतु कर्त्तृविशे-षणार्थं न कुर्य्यात् पुत्रवान् गृहीति विधिवाक्ये पुत्र-वानिति कर्त्तृविशेषणमिति विशेषः। अतएव मीमां-

ततः पार्श्वस्थो बालो घटानयनरूपं कार्य्यं घटमानयेति शब्दप्रयोज्य-मित्यवधारयति ततश्च घटमानय गामानय इत्यादि-वाक्यादावापोद्वापाभ्यां कार्य्यान्वितघटादौ शक्तिं गृह्णाति, इत्थञ्च भूतले घट इत्यादिशब्दान्न शाब्दबोधः घटादिपदानां कार्य्यान्वितघटादिबोध एव सामर्थ्यावधारणात् कार्य्यतावोधं प्रति च लिङादीनां सामर्थ्यावधारणादिति लिङ्पदाघ-टितवाक्यान्न शाब्दबोध इति मीमांसकैकदेशिमतं तदभिप्रायेणेदं। सिद्धान्तसूत्राभ्यामिति, वेदसामान्यस्य प्रामाण्यसाधकसूत्राभ्यामित्यर्थः प्रामाण्यमुक्तमित्यनेनास्यान्वयः। विधिशक्तिर्विधिसामर्थ्यं अवसीदन्तौ अफलत्वेनाघ्राते बहुवित्तव्ययायाससाध्ये द्वेषोदयेन प्रवृत्तिमजनयन्तौ स्तुत्यादिभिः फलसाधनत्वाद्युपस्थापकवाक्यैरुत्तभ्यते फलसाधनतावोध-द्वारा द्वेषविघटनेन प्रवृत्तिजननोन्मुखो-क्रियते यथा रात्रीर्जुहोतीति विधिना प्रतितिष्ठन्ति हवै य एता रात्रीरुपयजन्तीत्यादिस्तुतिवादक-स्यैकवाक्यतया प्रामाण्यं तत्र प्रतितिष्ठन्तीति समुदितवाक्यात्लक्षणया प्रतिष्ठाकामस्योपस्थित्या रात्रिसत्करणं प्रतिष्ठाकामकार्य्यमिति वाक्याभ्यां वोधः। न च वाक्यस्य पदसमुदायात्मकस्य शक्त्यभावात् कथं वाक्यसम्बन्धरूपलक्षणेतिवाच्यं पदार्थस्येव विशिष्टपदार्थरूपवाक्यार्थस्यापि शक्त्या प्रतिपादितत्वात् तत् सम्बन्धस्यैव वाक्यलक्षणापदार्थत्वात् एकेन पदेन लक्षणयाप्रतिष्ठाकामादेरुपस्थापने पदान्तरवैयर्थ्यं स्यादिति। एवमन्यत्र यथायोगं विवेच्यं सिद्धार्थानामिति स्तुतिभिन्नानामर्थवादा-

साय‍ं आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति सूत्रेण आम्नायस्य वेदस्य क्रियार्थत्वात् कार्य्यार्थत्वात् अतदर्थानां कार्य्याप्रतिपादकानामानर्थक्यमप्रामाण्यमिति पूर्व्वं रचयित्वा सिद्धान्तसूत्राभ्यां विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युरिति क्वचिद्भूतार्थानाञ्च क्रियार्थेन समाम्नायादित्येताभ्यां क्वचिद्विधिशक्तिरेवावसीदन्ती स्तुत्यादिभिरुत्तभ्यत इति न्यायात् क्वचिद्भूतार्थानां सिद्धार्थानां क्रियार्थेन सहैकवाक्यत्वाच्च प्रामाण्यमप्युक्तं। अतो न कुर्य्यात् पुत्रवान् गृहीति निषेधविधौ पुत्रवत्त्वेनैवाधिकारित्वं (५५)।

अत्रैव पुत्रवन्धुधनक्षयार्थवादः। अतः पुत्रवतएव गृहस्थस्य कृष्णायामनधिकारः। अत्रैव शयनवोधनमध्ये प्रतिप्रसवः। जीमूतवाहनस्तु। यदीच्छेद्विष्णुना

नामित्यर्थः यथा यो ब्रह्माणं विदधाति पूर्व्वमित्याद्यर्थवादानामीश्वरमुपासीतेत्यादिवाक्यैरेकवाक्यतया प्रामाण्यमिति वेदमात्रस्यैव साक्षात् परम्परया क्रियाकार्य्यतापरतया प्रामाण्यमितिभावः। क्वचिच्च विधिवाक्ययोरप्यङ्गाङ्गिभावलाभायैकवाक्यता यथा दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम इत्यादिवाक्यानां समिधोयजतीत्यादिवाक्यैरेकवाक्यता। यथोक्तं भट्टपादैः स्वार्थवोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत इति। एतन्न्यायस्य प्रकृतोपयोगमाह निषेध-विधाविति, अत्र सप्तम्यर्थोवोध्यत्वं तस्याधिकारित्वमित्यनेनान्वयः पुत्रवत्त्वेनैवाधिकारित्वमिति गृहस्थस्येति शेषः। एवञ्च यत्र वाक्ये केवलगृहस्थपदं तत्र गृहस्थपदं पुत्रवद्गृहस्थपरमितिभावः (५५)।

अत्रैवेति एतन्निषेधवाक्ये एवेत्यर्थः पुत्रवन्धुधनक्षयार्थवादः पुत्रवन्धुधनार्थवोधकार्थवादैकवाक्यता एवञ्च पुत्रवन्धुधनक्षयादित्यत्र क्षयपदं कृष्णैकादश्युपवासनिष्ठक्षयसाधनतापरं प्रयोज्यता च पञ्चम्यर्थः तस्याश्चा-

वासं पुत्त्रसम्पदमात्मनः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि, इति गृहिणो न निषिद्धं काम्यत्वात्। अत्र पुत्त्रार्थिनः सकृद्विधानं विष्णुना सहवासार्थिनस्तु यावज्जीवाचरणं। काम्ये रव्यादिदोषोनास्ति नित्ये स इत्याह। हेमाद्रिरपि। केचित्तु। वैष्णवस्य गृहिणः पुत्त्रिणोरुक्माङ्गदादेः कृष्णैकादश्युपवासश्रवणात् सर्व्वे-षामुभयैकादश्यां नित्यव्रतोपवासेऽधिकारः कृष्णानिषे-

ख्यातार्थसाध्यत्वेऽन्वयः प्रतियोगिनिर्द्दिष्टसाधनत्वस्याभावेसाध्यताप्रयो-जकत्वात् तथाच कृष्णैकादश्युपवासकरणाभावः कृष्णैकादश्युपवास-करणनिष्ठपुत्त्रादिचयसाधनताप्रयोज्यपुत्त्रवद्गृहस्थसाध्यतावानिति पर्य्य-वसितोबोधः। साध्यता च चैत्रिकी। उपसंहरति अतइति, अत्रैव पुत्त्रवद्गृहस्थस्य कृष्णैकादश्युपवासनिषेध एव प्रतिप्रसवः वाधकं पुन-र्विधानं। वहवस्तु प्रामाणिकाः प्रथमतः कार्य्यान्वितघटादौ शक्त्यव-धारणेऽपि पश्चात्तस्य त्यागस्यौचित्यात् गर्भिणी ते कन्या पुत्त्रस्ते जात इत्यादौ मुखप्रसादमालिन्याभ्यां सुखदुःखेऽनुमाय तत्कारणत्वेन परिशेषाच्छब्दवोधं निश्चित्य तद्धेतुतया तच्छब्दस्यावधारणेन व्यभि-चाराच्च न कार्य्यान्विते शक्तिरित्यर्थवादानां विध्येकवाक्यतां विनापि प्रामाण्यमिति प्राहुः। सकृद्विधानमिति, कालविशेषानियमात् सकृद्वि-धानेनैव पुत्त्रादिसम्पादकादृष्टसिद्धौ च पुनरिच्छानुत्पत्तेः पुत्रोत्पत्तौ च पुत्त्रवत्त्वेन निषेधविषयत्वाच्च। विष्णुना सह वासस्तु पारलौकिकतया तत्कालवाहुल्याय तदर्थं यावज्जीवमाचरणस्य युक्तत्वादिति भावः। एवञ्च गृहस्थस्य कृष्णैकादश्यां न नित्योपवासाधिकारः शयनी वोधनी मध्येऽधिकारोऽस्ति तत्रापि पुत्रवतां गृहस्थादीनां नाधि-कारः। पुत्त्रवतामपि सर्व्वेषां विष्णुसहवासकामानां यावज्जीव-मधिकार इति जीमूतवाहनमतं। न नित्य इति एवञ्च रुक्माङ्गदादीनां यत् कृष्णैकादश्यां व्रताचरणं तत्काम्यतयेति भावः। हेमाद्रिमत-निष्कर्षश्चायं पक्षद्वये काम्ये मानवमात्रस्याधिकारः नित्यव्रते शुक्लायां

धस्तु गृहिविषयः काम्य एवेत्याहुः। तन्न। पुत्रवां-श्चैव भार्य्यावान् धर्म्मयुक्तस्तथैवच। उभयोः पक्षयोः काम्यं कुर्य्याच्च वैष्णवं व्रतमिति वचनेन काम्य एवाधिकारो न नित्यइत्याह ( ५६ )।

वस्तुतस्तु वैष्णवानां सपुत्राणां गृहस्थानामपि सर्व्वाः कृष्णानित्या हलायुधहेमाद्रिधृततत्त्वसागरवचनात्। तद्यथा। यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा। तुल्ये ते मन्यते यस्तु स वै वैष्णव उच्यते। कालमाधवीये

नरमात्रस्याधिकारः कृष्णायां शयनीबोधनीमध्यव्यतिरिक्तायां गृहस्थस्य नाधिकारः शयनीबोधनीमध्ये कृष्णायां गृहस्थस्याधिकारस्तत्रापि पुत्रवतोगृहस्थस्य नाधिकार इति। अत्र केचित् नित्ये व्रते उभयपक्ष एव नरमात्रस्याधिकारः नित्योपवासीति वचने संप्राप्ते हरिवासरे इति सामान्यत एवोक्तेः, इन्दुक्षये इति वचनस्य तत्साहचर्य्यात् काम्यव्रत-परत्वात् काम्यव्रते च कृष्णैकादश्यां पुत्रवतोगृहस्थस्य नाधिकारः न तु गृहस्थमात्रस्य गृहस्थोब्रह्मचारी चेति वचनविरोधात् न कुर्य्यात् पुत्रवान् गृहीति वचनैकवाक्यत्वाच्च शयनीबोधनीमध्ये तस्याधिकारः पुत्रवांश्च सभार्य्यश्चेति वचनं यदीच्छेदिति वचनञ्च पचमानवानप्रस्थ-परं। न च वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृहीतिवचने सदापद-श्रवणान्नित्यव्रत एव निषेध इति वाच्यं तत्र सदापदस्य फलाभिसन्धि-दशायां तदभावदशायाञ्च इत्यर्थकत्वादित्याहुः (५६)।

मतद्वयं दूषयित्वा स्वमतमाह वस्तुतस्त्विति स वैष्णव उच्यत इति। अत्रेदमवधेयं गृहीतविष्णुमन्त्रत्वेनाधिकारितावोधकं नेदं वचनं किन्तु उभयपक्षीयैकादशीव्रतस्य वैष्णवव्रतत्वेन सर्व्वैरेव तत्कर्त्तव्यमन्यथा वैष्णव-त्वहान्या विष्णुभक्तिरतो दैव आसुरस्तद्विपर्य्यय इत्युक्तमहाननर्थः स्यादिति वोधयति, पुत्रवद्गृहस्थस्य निषेधस्तु कामनान्तरं व्यावर्त्तयति, वनस्थय-तीनां निष्कामतया संसारनिवर्त्तकविष्णुभक्तिकामतया चासाधारणाधि-कारित्वं सूचयति। वनस्थयतिधर्म्मोऽयमिति। य इच्छेद्विष्णुना वासं

नारदः। नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः। पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणं। अत्र विष्णुपरायणानां पक्षे पक्षे चेति वीप्सया यावत्पक्षैकादश्युपवासस्य नित्यता प्रतीतेः। श्रीपतिव्यवहारनिर्णये। शुक्ले वा यदि वा कृष्णे विष्णुपूजनतत्परः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि, इति वचनात्। नित्यं भक्तिसमायुक्तैरित्यनन्तरं सपुत्त्रश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतः। एकादश्यामुपवसेत् पक्षयोरुभयोरपि। स ब्रह्महा सुरापश्च कृतघ्नोगुरुतल्पगः। विवेचयति योमोहादेकादश्यौ सितेतरे। गृहस्थोब्रह्मचारी च आहिताग्निर्यतिस्तथा। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि, इत्येतैर्बलायु-

पुत्त्रसम्पदमात्मन इति वचने यत् पुत्त्रसम्पदोऽभिधानं तदानुषङ्गिकफलत्वेन मुख्यफलन्तु विष्णुना सहेत्युक्तविष्णुसालोक्यं तदपिमुक्त्यन्तरोपलक्षकं, यच्चोक्तं उभयोः पक्षयोः काम्यमिति, तदपि मुक्तिसाधनत्वेनाभिलषितज्ञापकं एवमुत्तरत्रापि विवेच्यमिति। समात्मा समदर्शी भगवदधिष्ठानत्वेन निजाचारान्निजवर्णाश्रमधर्म्मात् विष्णौ समर्पितोऽखिलाचारो येन सः। आचर्य्यते यत् इतिव्युत्पत्त्या लौकिकवैदिककर्म्म, तदर्पणं भगवत्प्रेरणया प्रवर्त्तितोऽहं त्वत्प्रीत्यर्थमेव करोमि नतु स्वफलार्थमित्यादि निवेदनरूपं कृतकर्म्मणः समर्पणन्तु त्वत् प्रेरितेन कृतमिदं त्वत् प्रीतये भवतु न तु ममफलान्तरायेत्यादिज्ञापनरूपं यथा स्वामिनि भृत्यो निवेदयति मयेदं कृतमिति, यथैकादशे, श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्म्मणः। जन्मकर्म्मगुणानाञ्च तदर्थोऽखिलचेष्टितं। इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियं। दारान् सुतान् गृहान् प्राणान् यत्परस्मै निवेदनमिति। दारादेरपि भगवदर्थत्वेन विभावनमेव समर्पणमिति। प्राणः प्राणमयकोषः क्रियाशक्तिमान्। बुद्धिर्विज्ञानमयकोषः ज्ञानशक्तिमान् मनोमयकोषस्याप्युपलक्षणं देहः स्थूल-

धेन तथाव्यवस्थापितत्वात्। वैष्णवानां तथा व्यवहाराच्च। मुमुक्षुत्वेन सुतरामेव तथा, तथाच भविष्ये, शुक्ला गृहस्थैः कर्त्तव्या भोगसन्तानवर्द्धिनी। मुमुक्षुभिस्तथा कृष्णा तेन तेनोपदर्शिता। वाराहेऽपि, यथा शुक्ला तथा कृष्णा उपोष्या च प्रयत्नतः। शुक्ला भुक्तिप्रदा नित्यं कृष्णा मुक्तिं प्रयच्छति। द्विजन्मनोविशेषतोऽपि, यथा गोविन्दमानसोल्लासकृत्यमहार्णवयोर्भविष्योत्तरीयं, उभयोः पक्षयो राजन्नेकादश्यां द्विजन्मवान्। योभुङ्क्ते नीरुजः सोऽपि प्रेत्य चाण्डालतां व्रजेत्। एतद्वचनं भविष्यपुराणीयमिति कृत्यकल्पलता। सोऽपीत्यच सोऽर्थेति विशेषः। अत्र कश्चित्। आदित्येऽहनि संक्रान्त्यामसितैकादशीदिने। व्यतीपाते कृते श्राद्धे पुत्त्री नोपवसेद्गृही, इति ब्रह्मपुराणवचनादेकादश्यां रवि-वारादावुपवासनिषेधमाह। उपवासनिषेधे तु किञ्चि-द्भक्ष्यं प्रकल्पयेत्। उपवासान्न दुष्येत उपवासफलं

---

देहः तेषां धर्म्मः स्वभावः अधिकारोनित्यनैमित्तिककर्म्मज्ञानशास्त्र प्राप्ता-धिकारः तस्मादित्यर्थः एतेन लौकिकवैदिकयोः संग्रहः। सुषुप्तिदशा-यामपि प्राणसञ्चारोऽस्ति ततश्च श्वासप्रश्वासाभ्यां मक्षिकादेरुदरप्रवेशम-रणादिना पापमुत्पद्यते गङ्गाजलसंयुक्तवायुप्रवेशादिना पुण्यमप्युक्तं वाचा वागिन्द्रियेण ब्रह्मार्पणं ब्रह्मार्पितं ब्रह्मणि निवेदितमित्तियावत्। स्वमात्मानं जुहोमि त्वयि गमयामीति स्वाहापदार्थः भगवत्याविष्टोभ-वामीति पर्य्यवसितोऽर्थः। पौराणिकस्त्विति समर्पणमन्त्रइतिशेषः। विष्णुपरायणैः सद्भिरित्यर्थः। विवेचयतीतिपुत्त्रवतोगृहस्थस्य मम कृष्णैकादशीव्रतेऽधिकारोनास्ति किन्तु शुक्लैकादशीव्रते इत्यादिकं यो विवेचयति स ब्रह्महादितुल्यो भवतीत्यर्थः सर्व्वत्र पश्चम्यन्तः वैष्णवपुत्त्रवद्

लभेदिति वराहपुराणादनोदनादिकमप्याह। तन्न। विष्णुधर्म्मोत्तरे। एकादश्यां यदा राम आदित्यस्य दिनं भवेत्। उपोष्या सा महापुण्या पुत्रपौत्रप्रवर्द्धिनी। भृगुभानुदिनोपेता सूर्य्यसंक्रान्तिसंयुता। एकादशी सदोपोष्या सर्व्वसम्पत्करी तिथिरित्यादिवचनेषु एकादश्यां रविवारादौ प्रत्युतानुषङ्गिकफलश्रुतेः। न च नित्ये निषेधः काम्ये फलमिति जीमूतवाहनोक्तं युक्तमिति वाच्यं सदापदश्रुतेः कामित्वाकामित्वरूपविशेषाभावात् (५७)।

किन्तु संक्रान्त्यादिषु उपवासनिषेधस्तु तन्निमित्तोपवासपरः। तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।

---

गृहस्थानां कृष्णैकादश्यामधिकारे हेतु र्वोध्यः मुमुक्षुत्वे सर्व्वेषामेव कृष्णैकादश्यामुपवासाधिकार इत्यभिप्रायेणाह मुमुक्षुत्वेनेति शुक्लायां भोगसन्तानफलकत्वोक्त्या कृष्णायां तत्फलकामनिषेध आयातीति, मुमुक्षुभिरिति कर्त्तव्येत्यनेनान्वयः। तथा मुक्तिफलिका कृष्णा कृष्णापि तेन तेन वेदव्यासादिमुनिना। भुक्त्युपलक्षणं तेन मुक्तिप्रदापीत्यर्थः। द्विजन्मनोऽपि द्विजमात्रस्यापि। कश्चिदिति आहेतिपदद्वयेनास्यान्वयः। व्यतीपातमाह ब्रह्मनुः। श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके। यद्यमारविवारेण व्यतीपातः स उच्यते इति। उपवासादित्यस्य नञर्थेऽन्वयः तथाच उपवासहेतुको यो दोषाभावस्तद्वानित्यर्थः। यद्वा उपवासादिति रविवाराद्युपवासहेतुको यो दोषस्तदभाववान् पञ्चम्यर्थस्य दुषधात्वर्थेऽन्वयादित्यर्थः (५७)।

तन्निमित्तकोपवासपर इति, रविवारनिमित्तकोऽमावस्यादौ अमावस्यादिनिमित्तको रविवारादौयथासम्भवस्त्याज्यः एकादशीनिमित्तकस्य नित्यतया न कुत्रापि त्याज्यता व्यतीपातनिमित्तस्तु श्राद्धदिने संक्रान्तौ च निषिद्धः इत्येवं विवेच्यं वस्तुतस्तु तत्तन्निमित्तकोपवासपर इति, संक्रान्ति

नानुषङ्गकृतोग्राह्योयतोनित्यमुपोषणमिति जैमिनिस्मृतेः। संक्रान्त्यादिनिमित्तकोपवासः सम्बर्त्तेनोक्तः। अमावस्या द्वादशी च संक्रान्तिश्च विशेषतः। एताः प्रशस्तास्तिथयोभानुवारस्तथैव च। अत्र स्नानं जपोहोमोदेवतानाञ्च पूजनं। उपवासस्तथा दानमेकैकं पावनं स्मृतं। तथा। उपवासञ्च ये कुर्य्युरादित्यस्य दिने तथा। जपन्ति च महाश्वेतां ते लभन्ते यथेप्सितं।

---

निमित्तक-रविवार-निमित्तक-व्यतीपातनिमित्तकोपवासाः पुत्त्रवता गृहस्थेन न कार्य्या इत्यर्थः। काम्ये रविवारादिनिमित्तककाम्योपवासेनिषेधकमितिशेषः। नित्ये तु नित्योपवासे तु श्राद्धसामानाधिकरण्यप्रदर्शनेन तद्बाधकत्वाभावबोधकाइति पूरणीयं कात्यायनाप्तपदार्थेनाऽस्यान्वयः। स्पष्टमुक्तं स्कान्दे। यस्मिन्दिने पितुःश्राद्धं मातुश्चापि भवेद्गुरु। तस्मिन्नेव दिने तात भवेदेकादशी व्रतं। तदाकृत्वा तु वै श्राद्धं भुक्तशेषन्तु यद्भवेत्। तत् सर्व्वं दक्षिणे पाणौ गृहीत्वान्नं शिखिध्वज। अवजिघ्रेदनेनैव तेन श्राद्धं शिखिध्वज। पितृणां तृप्तिदं जातं व्रतभङ्गो न विद्यते इति। प्रागुक्तेति, सप्तवारानुपोष्येतिवचनोक्तेत्यर्थः। एतत्पारणस्यैव संक्रान्त्यां निषेधः, संक्रान्त्यां प्राप्तमितीति, अस्यैव च रविवारे निषेधः नतु एकादश्युपवासपारणस्य रविवारे रविसंक्रान्तौ च निषेध इति भावः। वस्तुतस्तु प्रागुक्तेति, तथाच शनिवारनिमित्तकोपवासपारणं रविवारे पुत्त्रवतोगृहस्थस्य निषिद्धमित्यर्थः संक्रान्त्यां प्राप्तमितीति एतत् संक्रान्त्यां पारणं पुत्त्रवतोगृहस्थस्य निषिद्धमित्यर्थः। एतेन शनिवारे संक्रान्तिपूर्व्वदिने च गृहस्थपुत्त्रवतोनोपवासः परदिनेपारणस्यौत्सर्गिकस्यनिषेधादिति। यच्च सम्वर्त्तवचने अमावस्याद्वादशीचेत्यनेन द्वादश्युपवासउक्तः सोऽपिनित्यः यथा हरिभक्तिविलासे। यथा चैकादशी राजन् द्वादशी च तथा नृणां। समाना तत्फलःप्रोक्ता व्रतेऽस्मिन् चक्रपाणिनः। परन्तु क्वचिदेकादश्युपवासेन द्वादश्युपवाससिद्धिः क्वचिच्च द्वादश्युपवासेन एकादश्युपवाससिद्धिः क्वचिच्चोभययो-

महाश्वेतामन्त्रस्त्वागमे। ह्रामित्युक्त्वा ततोह्रीन्तु सकारश्च विसर्गवान्। महाश्वेताख्यमन्त्रोऽयं भानोस्त्र्यक्षरईरितः। संवत्सरप्रदीपे। सप्त वारानुपोष्यैव सप्तधा संयतेन्द्रियः। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति। कृते श्राद्ध इति काम्ये, नित्ये तु वराहपुराणविष्णुधर्म्मोत्तरकात्यायनाः। "उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्य्यादाघ्राय पितृसेवितं। यत्तु।

गेन तन्त्रेणोभयसिद्धिः। एकादशीमुपवसेद्द्वादशीमथवा पुनः। विमिश्रां वापिकुर्व्वीत न दशम्यायुतां क्वचित् इतिवचनात्। तथा पाद्मे। एकादशी द्वादशी च तत्र सन्निहितोहरिः। उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति। रात्रावपि द्वादशीयोग एव द्वादश्यपवाससिद्धिर्यथा ब्रह्मवैवर्त्तः। ये कारयन्ति कुर्व्वन्ति द्वादशीं दशमीयुतां। शुद्धये तन्मुखं वीक्ष्य सूर्य्यदर्शनमाचरेत्। नमो नारायणायेति जपेद्वा द्वादशाक्षरमिति अत्र वेधरहितत्वे कर्त्तव्यतासूचनं। द्वादशामुपवासभेदमाह हरिभक्तिविलासे पद्मपुराणं। उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी जया च विजया चैव जयन्ती पापनाशिनी। न करिष्यन्ति ये लोका द्वादशाष्टौ ममाज्ञया। तेषां यमपुरे वासोयावदाहूतसंप्लवं। ब्रह्मवैवर्त्तः। द्वादश्योऽष्टौ समाख्याता या पुराणे विचक्षणैः। तासामेकापि च हता हतं पुण्यं पुराकृतं। तथा तत्रैव। एकादशीतु संपूर्णा वर्द्धते पुनरेव सा। द्वादशी न च वर्द्धेत कथितोन्मीलनीतु सा। वर्द्धते परदिनगा सा एकादशी, द्वादशी अहोरात्रव्यापिनी सती नच वर्द्धेत न परदिनगा तदा सा द्वादशी उन्मिलनी द्वादश्या अहोरात्रव्यापित्वाभावे त्रिस्पृशात्वेन नोन्मीलनीति वोध्यं। संपूर्णालक्षणमनुपदं वक्तव्यं तथाच तत्रैव। द्वादशीव विवर्द्धेत नचैवैकादशी यदा। वञ्जुलीति भृगुश्रेष्ठ कथिता पापनाशिनी। पाद्मे च संपूर्णैकादशी यत्र द्वादशी च यदा भवेत्। त्रयोदश्यां मुहूर्तार्द्धं वञ्जुली सा हरेः प्रिया। अत्र संपूर्णैकादशी न परदिनगा तथाविधद्वादशी

रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे। पारणञ्चोपवासञ्च न कुर्य्यात् पुत्त्रवान् गृहीति पारणानिषेधो-रविवारसंक्रान्तिप्राप्तोपवासनिषेधवत् रविवारसंक्रान्ति-मात्रप्राप्तपारणपरः। तयोरेव पारणन्तु प्रागुक्तशनि-वारोपवासानन्तरं रविवारे। नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः। चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु। अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपं। यः करोति

च परदिनगा तदा वञ्जुलीत्यर्थः। शुक्लपक्षे तथा कृष्णे यदा भवति वञ्जुली। एकादशीदिने भुक्त्वा द्वादश्यां कारयेद्व्रतमिति। अत्र यदि द्वादश्यपि न वर्द्धते तदा शुद्धैकादश्यामुपवासः एकादशीमुप-वसेदित्युक्तेः पारणञ्च द्वादश्या आद्यपादमुत्तीर्य्येति। त्रिस्पृशा प्रसिद्धा। ब्रह्मवैवर्त्ते। कुहूराके यदा वृद्धिं प्रयाति पक्षवर्द्धिनी। विहायैकादशीं तत्र द्वादशीं समुपोषयेत्। पाद्मे। अमा वा यदि संपूर्णा सम्पूर्णा जायते यदा। भूत्वा च षष्टिघटिका दृश्यते प्रतिपद्दिने। अश्वमेधा-युतैस्तुल्या सा भवेत् पक्षवर्द्धिनी इयमप्येकादश्याः संपूर्णत्वे ज्ञेया तदसम्पूर्णत्वे एकादशीद्वादश्योर्मिश्रतया तत्रैव व्रतमिति बोध्यं। अन्ये तु एकादशीद्वादश्योर्द्वयोर्वृद्धौ पक्षवर्द्धिनी भवति पक्षपदस्य एकादशीद्वादश्यु-भयपरत्वात् द्वितयं वर्द्धते यदीत्येकवाक्यत्वाच्च कुहूराके इत्यादिकवचनं मतान्तरमितिप्राहुः। ब्रह्मवैवर्त्ते। पुष्य-श्रवण-पुष्याद्य-रोहिणीसंयुतास्तु ताः। उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक्। तत्र पुष्ययुता पाप-नाशिनी गोविन्दद्वादशीति विख्याता श्रवणयुता विजया वामनद्वादशी। पुष्याद्यः पुनर्वसुस्तद्युता जया-रोहिणीयुता जयन्ती। तथाच ब्रह्मपुराणे वशिष्ठसंवादे। यदा तु शुक्लद्वादश्यां पुष्यं भवति कर्हिचित्। तदा सा तु महापुण्या कथिता पापनाशिनी। यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणम्भवेत्। विजया सा तिथिः प्रोक्ता तिथीनामुत्तमा तिथिः। द्वादश्यान्तु सिते पक्षे ऋक्षं यदि पुनर्वसुः। नाम्ना सा तु जया ख्याता तिथीनामुत्तमा तिथिः। यदा तु शुक्लद्वादश्यां प्राजापत्यं प्रजायते।

प्रसन्नात्मा तस्य स्यादक्षयन्तु तदिति ब्रह्मपुराणोक्तसंक्रान्ति-पूर्व्वदिनोपवासविधानेन संक्रान्त्यां प्राप्तमिति (५८)।

अथ पूर्णातिथिलक्षणं। स्कन्दपुराणे। प्रतिपत्-प्रभृतयः सर्व्वा उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्ज्जिताः। हरिवासरएकादशी। अतएव सौरधर्म्मे, आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता। सैकादशीति संपूर्णा विद्धान्या परिकीर्त्तिता। अत्र च जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिरिति। तत्र व्यवस्था स्कान्दे। द्वादशी च प्रकर्त्तव्या एकादश्यायुता विभो। सदा कार्य्या च विद्वद्भि र्विष्णुभक्तैश्च मानवैरिति (५८)।

उदयात् सूर्य्योदयक्षणमारभ्य उदयात् अपरसूर्य्योदयपर्य्यन्तं रवे-रित्यस्य उभयत्रान्वयात्। सीमार्थे आङ्शब्दस्तेन पूर्व्वसूर्य्योदय-मारभ्यापरसूर्य्योदयाव्यवहितप्राक्क्षणस्थायिनीत्यर्थः। तेन परदिनसूर्य्यो-दयस्पर्शे तदस्पर्शे च सम्पूर्णाभवतीति तात्पर्य्यार्थः। हरिवासर-वर्ज्जिताः हरिवासरभिन्ना हरिवासरशब्दस्य क्वचिद्द्वादश्यामपि प्रवृत्तेराह हरिवासर एकादशीति। अतएव हरिवासरवर्जनादेव। अत्र च प्रति-पत्प्रभृतयइतिवचने च। तत्तिथेरेकोदयमारभ्यापरोदयपर्य्यन्तस्थायिहरि-वासरभिन्नतिथिः। उदयानन्तरावस्थितावपि परदिनगतत्वेऽपि। उदयात् प्राक् परदिनसीयोदयात् प्राक् इदं तूदयादित्यस्य विवरणं। सम्पूर्णत्व-कीर्त्तनं समाप्तत्वकीर्त्तनं। सत्त्वेऽपीति, तत्तत्तिथिखण्डस्येतिशेषः। अशुद्ध-त्वेन तत्तत्तिथिमलरूपत्वेन। असत्त्वख्यापनाय असत्तुल्यताख्यापनाय-कीर्त्तनमित्यनेनास्यान्वयः, तथाचेति परदिवसीयतिथिखण्डस्याशुद्धत्व-ज्ञापकञ्चेत्यर्थः। तिथिस्त्विति तुरवधारणे सेत्यनेनास्य सम्बन्धः। तथाच याएवम्भूतातिथिः सैव हि निश्चितशुद्धा न परदिनसम्बन्धिनी तिथिमल-रूपाऽशुद्धेत्यर्थः। सार्वतिथ्य इति, एकादशीव्यतिरिक्तसर्व्वतिथिविषयक इत्यर्थः। षष्टिनाड्योहीति, हि यतस्तिथिः षष्टिनाड्यात्मकः तदधिकस्य परदिनगतस्य न तिथित्वं किन्तु तिथिमलत्वमितिभावः। परे परदिने

तत्तिथेरुदयानन्तरावस्थितावपि यदुदयात् प्राक् संपूर्णत्व-कीर्त्तनं तदुदयानन्तरं तत्तिथेः सत्त्वेऽपि अशुद्धत्वेन कर्म्मा-नर्हत्वादसत्त्वख्यापनाय, तथाच कालमाधवीये नारदीयं, आदित्योदयवेलाया आरभ्य षष्टिनाड़िका । तिथिस्तु सा हि शुद्धा स्यात् सार्व्वतिथ्योह्ययं विधिः । सूर्य्यसिद्धा-न्तोऽपि, सर्व्वाह्येतस्य तिथय उदयादोदयस्थिताः । शुद्धाइति विनिश्चेयाः षष्टिर्नाड्योऽह्नि वै तिथिः । एतस्य रवेः । कालविवेके, षष्टिदण्डात्मिकायाश्च तिथेर्नि-ष्क्रमणे परे । अकर्म्मण्यं तिथिमलं विद्यादेकादशीं विना । अथ पूर्णैकादश्युपवासः । प्रचेताः, पूर्णाऽ-

तिथिमलमिति, तत् निष्क्रमिततिथिखण्डमित्यर्थः । एकादशीं विनेति, निष्क्रमितैकादशीतिथिखण्डं विनेत्यर्थः, एवञ्च सूर्य्योदयमारभ्य षष्टि-दण्डात्मिकाया प्रतिपदादितिथेस्तु पूर्णत्वकथनात् सौरधर्म्मवचने सैका-दशीतिवचने तत्पदेन सूर्य्योदयमारभ्य षष्टिदण्डात्मिकेत्यर्थोबुध्यते तत्-फलन्तु पूर्णाप्येकादशी त्याज्या द्वितयं वर्द्धते यदि । द्वादश्यां पारणा-लाभे पूर्णैव परिगृह्यते । इत्यादौ पूर्णापदेन पूर्व्वदिनसम्बन्धितिथि ग्रहणं अन्यथा दिनद्वय एव सूर्य्योदय-प्राङ्मुहूर्त्तद्वयान्विततया तदन-ध्यवसायः स्यात् प्राङ्मुहूर्त्तद्वयान्वितत्वविशेषणफलञ्चारुणोदये दशमी-योगे विद्धात्वेन तद्व्यावर्त्तनं । तथाक्तं विद्धान्या परिकीर्त्तितेति अन्या-प्राङ्मुहूर्त्तद्वयान्वितान्या विद्धा दशमीविद्धात्वेन त्याज्याइति यावत् । अतएव हरिभक्तिविलासे ब्रह्मवैवर्त्तवचनं । अरुणोदयवेलायां यास्तो-कापि तिथिर्भवेत् । पूर्णा सेत्यवगन्तव्या प्रभूता नोदयं विना । अत्र हरिभक्तिविलासीयटीका तिथिरेकादशी अरुणोदयञ्च विना न प्रभूता सम्पूर्णा एकारुणोदयमारभ्यापरारुणोदयं यावद्व्यापिन्येव सती संपूर्णा स्यादितार्थइति । तथा गारुड़े । आदित्योदयवेलाया-मारभ्य षष्टिनाड़िका । संपूर्णैकादशीनाम त्याज्या धर्म्मफलेप्सुभिः । शिव-

प्येकादशी त्याज्या वर्द्धते द्वितयं यदि। द्वादश्यां पारणालाभे पूर्व्वैव परिगृह्यते। द्वितयमेकादशीद्वादश्यौ। भृगुः, संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या द्वितीया तु परतोद्वादशी यदि। विष्णुधर्म्मोत्तरे वृहद्वशिष्ठसंहितायाञ्च। संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः। एवमेव गारुड़े, किन्तु मध्यार्द्धमेवं, त्रयोदशी उषःकाले उपोष्या तत्र का भवेदिति। अत्र द्वैतनिर्णयः। एकादशीद्वादश्योरुभयत्र सर्व्वेषामुपवासविधानं तत्सङ्गगुरु-

रहसाञ्च। उदयात् प्राग्यदा विप्र मुहूर्त्तद्वयसंयुता। संपूर्णैकादशीनाम तत्रैवोपवसेद्गृहीति। अत्र तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेद् गृहीतिवचनस्वरसात् परदिवसीयतिथिखण्डव्यावर्त्तनाय पूर्व्वदिवसीयाहोरात्रव्यापितिथेः पूर्णत्वमाख्यातमितिबोध्यं। एवञ्च वञ्जुल्यादिलक्षणे यदेकादश्याः पूर्णत्वमुक्तं तदरुणोदयमारभ्यापरारुणोदयपर्य्यन्तस्थायित्वं बोध्यं। केचित्तु अरुणोदयकालस्य त्रियामां रजनीमितिवचनेन परदिवसीयत्वकथनात् तदारभ्य षष्टिदण्डात्मिकैकादशी संपूर्णत्याहुः। द्वादश्यां पारणालाभे खण्डापरदिने पारणयोग्यद्वादश्यलाभे। अत्र केचिदिदमपि द्वादश्या अहोरात्रव्यापित्व एव, अन्यथा रात्रिशेषे त्रयोदशीलाभेन त्रिस्पृशात्वेन सर्व्वैः खण्डोपोष्येति धैर्य्यमित्याहुः। हरिभक्तिविलासे भविष्यपुराणं। एकादशी समायुक्ता यदि द्रष्टा परा तिथिः। अथवैकादशी नास्ति दशम्या वाथ संयुता। द्वादशी तु कला काष्ठा यदि स्यादपरेऽहनि। द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणमिति काष्ठया अन्यूनत्वे बोधयति, काष्ठा अष्टादशनिमिषाः, अष्टादश निमिषास्तु काष्ठास्त्रिंशत्तुताः कलाइत्यमरात्। पूर्व्वैव परिगृह्यत इतिगृहिपरं तत्रैवोपवसेद्गृहीति वचनात् पूर्व्वामुपवसेद् गृहीतिवचनाच्च। द्वादशी-

अश्रद्धानाजड़जनविषयं एकेनैवोपवासेन फलसिद्धावपर-
वैयर्थ्यादिति। तन्न। एकेनैवोपवासेनेत्यादिश्लोकोक्तहेतोरे-
कैकपुरुषस्य उभयत्राकाङ्क्षाविरहादयुक्तोविकल्पः (५९)।

तथाच भविष्ये। स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षा-
पूरणे सति। एतेन साकाङ्क्षएव स्मृतीनां परस्परान्वयः

मिश्रिताग्राह्या सर्व्वत्रैकादशीतिथिः। द्वादशी च त्रयोदश्यां विद्यते यदि वा न वेति वचनं गृहिभिन्नपरं, लुप्यते नश्यति तस्मिन् दिने प्रभाते इयमुन्मीलनी। उषः काले रात्रिशेषे इयं त्रिस्पृशा। सङ्कशकोऽस्थिरः सन्देहयुतइतियावत् सन्देहहेतुश्चोभयदिने दशमी-वेधरहितैकादशीत्वं। द्वे तिथी तिथिखण्डे एकादशीयुक्तद्वादशी दिनद्वय इति यावत्। इतरवैयर्थ्यादिति, एकविधिप्राप्तस्यासकृदनु-ष्ठानानुपपत्तेरित्यर्थः तयाचेच्छाविकल्पएवेति द्वैतनिर्णयतात्पर्य्यं मत-मिदं दूषयति तन्नेति .विकल्प इत्युक्तं द्वैतनिर्णयमतानुवादः। आकाङ्क्षाविरहात् एकादश्यामुपवासेनैव विहितफलनसिद्धेरन्यत्राकाङ्क्षा-विरहात् उपवासविधौ एकादश्यास्तिथेरन्वयेनैव कालविशेषाकाङ्क्षा-निवृत्तेस्तिथ्यन्तरान्वयानुपपत्तेरिति वा (५९)।

आकाङ्क्षापूरणे उभयोरेकतरेणाकाङ्क्षानिवृत्तौ। परस्परान्वयोवाक्य-द्वयैकवाक्यतया युगपत् पर्य्यायेण वोभयोः कर्त्तव्यतापरता। तत्रे-त्यादिस्वमतं तत्र विकल्पमध्ये। प्रमाणत्वेति, प्रमाणत्वाप्रमाणत्वयोः परित्यागप्रकल्पनमित्यर्थः तत्र प्रमाणत्वस्य परित्यागः अप्रमाणत्वस्य प्रकल्पनमिति क्रमान्वयः तद्वदिति समुच्चयार्थकं तदुज्जीवनहानाभ्यामिति वा पाठः। तत्र तयोः प्रमाणत्वाप्रमाणत्वयोरुज्जीवनहाने ताभ्यामित्यर्थः। प्रत्येकं प्रतियोगं तथाच प्रत्येकप्रयोगे दोषचतुष्टयात् उभयत्राष्टदोष-वत्त्वं अत्र व्रीहिभिर्यजेतेत्यनेन प्रकृतयागसाधनीभूतपुरोडाशसम्पादक-द्रव्याकाङ्क्षानिवृत्तौ यवैर्यजेतेति श्रुतिरेवं यवैरितिश्रुत्यानाकाङ्क्षिता व्रीहि-भिरिति श्रुतिरिति परस्परानपेक्षत्वात् विकल्पाश्रयणं, न च मिलित-योर्व्रीहियवयोर्यागाङ्गतालाभायोभयोपादानमितिवाच्यं तथात्वे व्रीहि-यवाभ्यामित्यस्य वक्तव्यतापातात् भिन्नभिन्नवाक्योपस्थापितानां मिलि

सूचितः, अत्र नेच्छाविकल्पोऽष्टदोषग्रासात् तथाच, प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनात्। तदुज्जीवनहाना-भ्यामित्येवमष्टदोषता। तथाहि व्रीहिभिर्यजेत यवै-र्यजेत, इति श्रूयते। तत्र व्रीहिप्रयोगे प्रतीतयवप्रामाण्य-

तोपकारकत्वाभावात् अन्यथा विष्णुं यजेत रुद्रं यजेतेति वाक्याभ्यां विष्णुरुद्रयोर्मिलितदेवतात्वं स्यादितिबोध्यं, प्रकृतयागविध्यन्तर्गततया यवैर्यजेतेति श्रुत्या प्रकृतयागसामान्ये यवकरणकत्वस्य प्रामाणिकत्वरूपं प्रामाण्यमापाततः स्वीकृतं, तच्च व्रीहिकरणकप्रकृतयागे यवकरण-कत्वानन्वयेन परित्यक्तं तथाच वेदस्थले औत्सर्गिकस्यैकपदार्थसामान्ये-ऽपरपदार्थान्वयबोधस्य परित्यागः ननु यागसामान्ये यवकरणकत्वस्या-नन्वयेन यवस्य नियतानुष्ठानं न स्यात् किन्तु कदाचित् व्रीहियागेऽपि यवसम्बन्धोऽस्त्वित्यत आह अप्रमाणत्वेति, न प्रमाणत्वं यतइतिव्युत्-पत्त्या अप्रमाणत्वपदेन स्वार्थस्याभावो बोध्यते तथाच यथा-श्रुत-शब्दे-नाप्रतीतस्य यवकरणकत्वाभावस्य व्रीहियागे कल्पनादित्यर्थः तथाच व्रीहिभिर्यजेतेत्यत्र यजिधातुना यवकरणकत्वाभावविशिष्टयागबोधस्य लक्षणया स्वीकारादिति गौरवमिति, एवं यवैर्यजेतइत्यस्य सार्थकत्वाय यवैरित्यस्य कुत्रचिद्यागेऽन्वयेन प्रामाण्यव्यवस्थापनं तदेवाहउज्जीवनेति, प्रामाण्यस्योज्जीवनमित्यर्थः। तथाच वाक्यभेदस्वीकारस्यावश्यकतेति भावः। नन्विदं वाधितं यागसामान्य एव यवकरणकत्वाभावबोधनात् तत्र च तादृशार्थतात्पर्य्यग्राहकं यवैर्यजेतेति श्रुतिवाक्यमित्यत आह हानेति हानं त्यागः अप्रमाणत्वस्य त्यागइत्यर्थः तथाच यागविशेषएव यवकरणकत्वाभावान्वयेन यागविशेषे यवकरणकत्वस्य न वाधः परन्त्व-भावान्वयेऽपि औत्सर्गिकस्य सामान्येऽन्वयबोधस्य त्यागः इति दोषचतुष्टयं तथा यवप्रयोगे व्रीहिभिरितिश्रुत्या यवकरणकयागे व्रीहिकरणकत्वान-न्वयेन औत्सर्गिकस्य सामान्येऽन्वयबोधस्य त्यागइत्येवं प्रामाण्यत्यागः यवैर्यजेतेत्यत्र यजिधातोर्व्रीहिकरणकत्वविरहविशिष्टपरताकल्पनरूपम-प्रमाणत्वकल्पनं तथाच यागविशेषे व्रीहिकरणकत्वान्वयस्वीकारस्तथा यागसामान्ये व्रीहिकरणकत्वाभावस्याननन्वयइति दोषचतुष्टयं मिलित्वाऽष्टौ

परित्यागः अप्रतीतयवाप्रामाण्यकल्पनं इदन्तु पूर्व्वस्मात् पृथक् अन्यथा समुच्चयेऽपि यागसिद्धिः स्यात्। अतएव विकल्पे नोभयः शास्त्रार्थइत्युक्तं। तथा प्रयोगान्तरे यवे उपादीयमाने परित्यक्तयवप्रामाण्योज्जीवनं स्वीकृतयवाप्रामाण्यहानिरिति चत्वारोदोषाः। एवं व्रीहावपि चत्वार इत्यष्टौ दोषाइच्छाविकल्पे। तथाचोक्तं।

दोषाइतिभावः। अत्र च यवकरणकत्वाभावविशिष्टव्रीहिकरणकयागत्वेनैकं मुख्यफलं प्रति जनकत्व-मपरञ्च व्रीहिकरणकत्वाभावविशिष्ट यवकरणकयागत्वेनेति परस्परव्यभिचारवारणाय फलवैजात्यद्वयं कार्य्यतावच्छेदकं कल्पनीयमिति न मिलितयागे फलसिद्धिरितिबोध्यं। व्रीहिप्रयोगे व्रीहिकरणकयागे। इदन्त्विति अप्रामाण्यकल्पनन्त्वित्यर्थः पूर्व्वस्मात्प्रामाण्यपरित्यागात् पृथगिति, अप्रमाणत्वपदस्य प्रमाणत्वाभावपरत्वे पूर्व्वस्मादभेदः प्रमाणत्वपरित्यागस्यापि प्रमाणत्वाभावकल्पनरूपत्वादिति अप्रमाणत्वपदं स्वार्थयवकरणकत्वाद्यभावपरमिति पूर्व्वस्माद्भिन्नमित्यर्थः। नन्वेतत्कल्पनंव्यर्थमित्यत आह अन्यथेति अप्रमाणत्वकल्पनाभावइत्यर्थः, विकल्पेन परस्पराभावरूपकारेण शास्त्रार्थः शास्त्रबोधितफलजनकः। अष्टदोषइतिविकल्पविशेषणं। केचित्तु यवपक्षे स्वार्थस्य व्रीहेस्त्यागः अन्यार्थस्य व्रीह्यभावस्य कल्पनं व्रीहिभिरिति तृतीयार्थसाधनत्वस्य प्रकृत्यर्थे व्रीहावनन्वयः व्रीह्यभावेऽन्वय इतिचत्वारः, एवं व्रीहिपक्षेऽपि चत्वारइत्याष्टौ दोषाः, तथाच भट्टपादाः। स्वार्थत्यागोऽन्यार्थकॢप्तिः प्रकृत्यर्थेत्वनन्वयः। अन्वयश्चाप्रकृत्यर्थे द्वयोरित्यष्टदोषतेति। अत्र व्रीहिभिर्यजेतेत्यन्वये यवपदं लक्षणया यवाभावपरं यवैर्यजेतेत्यन्वये व्रीहिपदं व्रीह्यभावपरं, एवं व्रीहिपदं यवपदञ्च तत्तद्वाक्यार्थान्वये स्वार्थपरमपि। ननु व्रीहियागे यवाभावस्य यवयागे व्रीह्यभावस्य कथं करणतेतिचेन्न व्रीहियागजन्यकार्य्येऽपूर्व्वे स्वकरणकयागसम्बन्धेन यवस्य प्रतिबन्धकतया तदभावस्य हेतुत्वादेवञ्च यवाभावकरणकत्वस्य व्रीहियागकार्य्येऽन्वयः एवं यवयागकार्य्ये व्रीहेः स्वकरणकयागसम्बन्धेन प्रति-

एव-मेवाष्टदोषोऽपि यद्व्रीहि-यववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यतइति। ननु यदि पुरोडाशाय व्रीहियवौ विहितौ तर्ह्याग्नेयादिवत् समुच्चयरूपा गतिरस्त्विति चेन्न। प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्य-प्रकृतितया हि परस्परानपेक्षौ व्रीहियवौ विहितौ शक्नुतश्चैतौ प्रत्येकं पुरोडाशं सम्पादयितुं। तत्र यदि मिश्राभ्यां पुरोडाशः सम्पाद्येत तदा परस्परानपेक्षे व्रीहि-यवविधायिनी उभेऽपि शास्त्रे वाध्येतामिति (६०)।

वन्धकतया तदभावस्य कारणत्वमिति सामञ्जस्यादित्याहुः आग्नेया-दिवदिति आग्नेयादौ दधिपयसोः समुच्चयवदित्यर्थः प्रकृतितयेति, पुरो-डाशात्मकद्रव्यस्य प्रकृतितयेत्यर्थस्तत्प्रकृतित्वञ्च तदारम्भकावयवावयवत्वे-सति तज्जनकनाशप्रतियोगित्वं यवादिपदानां तदवयवयवे लाक्षणिकत्वे प्रकृतित्वमवोपादानकारणत्वं वोध्यं। पुरोडाशमिति, यज्ञाङ्गतयेत्यर्थः परस्परानपेक्षे सति लौकिक प्रमाणेन पुरोडाशसम्पादकत्वमोषधिमात्रस्य प्राप्यतइति। व्रीहेरपि पक्षतः प्राप्तं। तत्र च विशेषाकाङ्क्षायां व्रीहि-भिर्यजेतेतिश्रुतिर्नियमार्था नियमः पाक्षिके सतीत्युक्तेः तत्र च व्रीहिपदं व्रीहि-प्रकृतिकपुरोडाशपरं नियमश्च इतरानिरपेक्षत्वं व्रीहीतराकरणक-व्रीहिकरणकयागवोधकत्वं नचेतरनिरपेक्षत्वं न नियमफलं अपदार्थत्वात् किन्तु परिसंख्याफलं नियमस्तु नियतप्रवृत्तिविषयत्वं सच व्रीहेः कारणत्व वोधेनैव सम्भवति तथाहि व्रीहेः कारणत्वे लब्धे कारणं विना कथं यागसिद्धिःस्यादिति विवेकेन व्रीहेर्नियतानुष्ठानं तदसम्वलितत्वे कथं तद्वाधः स्यादितिवाच्यं तथापि मुद्गादिसम्वलितव्रीहिसाधितपुरोडाशे-नापि क्रतुः स्यादिति, श्रुतेः प्रमाणान्तरनिरपेक्षतया व्रीहीतराकरणकत्व वोधे तात्पर्य्यकल्पनात्तेन यादृच्छिकग्रहणव्यावृत्तिः। वरञ्च यदि व्रीहियवसम्वलितादपि पुरोडाशसिद्धिः स्यात्तदाकथितपरस्परनिराकाङ्क्ष-श्रुत्योर्विरोधः स्यादित्यगत्या विकल्पकल्पनं यत्र च श्रुत्योः साकाङ्क्षता तत्रैकवाक्यतया समुच्चयपरतेतिभावः। शास्त्रेश्रुतिवाक्ये (६०)।

अथ मा भूद्वाक्यद्वयसामर्थ्यात् समुच्चयः, अङ्गसहित प्रधानानुष्ठानापेक्षप्रयोगविधिर्व्रीहियवौ समुच्चेतुमर्हतीति चेन्न। स हि यथाविहितान्यङ्गानि समीक्ष्य प्रवर्त्तमानोनैतान्यन्यथयति मिश्रणे चान्यथात्वं तेषामिति। ननु मा मिश्रेयातां व्रीहियवौ उभयविध्यनुरोधादेकस्मिन्नेव प्रयोगे व्रीहिभिरेकवारं यवैरप्यपरवारमिज्यतामिति चेन्न। अङ्गानुरोधेनाश्रुतप्रधानाभ्यासस्यायुक्तत्वात्। एवञ्च न केवलं व्रीहि-यवसमुच्चये प्रमाणाभावः किन्तु

अथेति। अङ्गसहितप्रधानानुष्ठानेऽपेक्षा यस्य तादृशसाङ्गप्रधानं कथं कर्त्तव्यमित्याकाङ्क्षयैव विधुत्थानात् प्रयोगविधिः समुच्चेतुमर्हति तथाच व्रीहियवयोरङ्गत्वात् उभयाङ्गकमेव यागं साधयितुमर्हतीति-भावः। स हि प्रयोगविधिर्हि यथाविहितानीति, समीक्ष्याङ्गविधितः समीक्षणानन्तराकाङ्क्षावलादुत्थाय प्रवर्त्तमान इतिकर्त्तव्यतावोधजननोन्मुखो न तान्यन्यथयति अन्यप्रकारेण ज्ञापयति तथाच व्रीहियवयोर्विकल्पतयाभिहितत्वात् विकल्पेन व्रीहिभिर्यवैर्यागं कर्त्तव्यतया विदधातीति, अन्यथाऽनाकाङ्क्षिताभिधानं स्यादितिभावः : अङ्गानुरोधेन व्रीहियवयोर्विधानानुरोधेन प्रधानस्य होमस्याभ्यासः पुनरनुष्ठानं। इत्यर्थः एवं विरोधश्चेत्ये च प्रमाणाभावः समुच्चयवोधकचकारादाभावः प्रमाणविरोधः प्रमाणयोः श्रुतिवाक्ययोः परस्परविरोधः। प्रमाणविरोधमेव दर्शयति तथा हीत्यादिना, पुरोडाशविधिनैव पुरोडाशेन यजेतेत्यादि-विधिवोधितपुरोडाशे पुरोडाशपदवाच्यतावोधकप्रमाणेन यस्मिन् कस्मिंश्चिदिति यथेच्छमेकस्मिन्नित्यर्थः। पक्षतइच्छातः निरपेक्षेति प्रमाणान्तरनिरपेक्षेतितदर्थः। एतेन यवैर्यजेतेत्यादि-श्रुतिमपेक्ष्य व्रीहिभिरेवेति एवकारेण व्रीहीतरयवेतरकरणकत्ववोधकल्पनेन विरोधपरीहारोनिरस्तः। व्रीहिभिरेवेति व्रीहीतराकरणकत्वरूपनियमं गमयेत् साक्षात् परम्परयावोधयति सिद्धेसत्यारम्भोनियमायेति न्यायात्, दर्शार्थकवेदे यत्कर्म्मसाधनतया यद्द्रव्यं श्रुतं तत्र तद्द्रव्यवाचक-पदस्य-

प्रमाणविरोधोऽपि तथाहि पुरोडाशविधिनैवौषधिद्रव्ये यस्मिन् कस्मिंश्चित् प्राप्ते व्रीहियोऽपि पक्षे प्राप्तास्तत्रा-प्राप्तांशे प्रापणार्था निरपेक्षव्रीहिश्रुतिर्व्रीहिभिरेवेति नियमं गमयेत्। एवञ्च तत्र यवसमुच्चये निरपेक्षव्रीहि-श्रुतिबाधः स्यात्। एवं यवश्रुतेरपि नियमार्थत्वाद्व्रीहि-समुच्चये तद्बाधःस्यादिति। अतएवोक्तं गतिरन्या न विद्यतइति। एकार्थतया विविधं कल्प्यतइति वि-कल्पः (६१)।

तस्मादष्टदोषभिया उपोष्ये द्वे तिथी इत्यत्र नेच्छा-विकल्पः किन्तु व्यवस्थितविकल्पः। अतएव द्वैतनिर्णये स्कन्दपुराणं। सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।

---

तरासम्वलिततद्व्यपरतानियमाच्च तत्र व्रीहिकारणकत्वं कथं साक्षादि-तराकारणकत्वं परम्परया यथा प्राप्तस्य पुनः प्रापणमितराकारणकत्व-बोधं विना निरर्थकमित्यनुपपत्त्या तद्बोधइति। वस्तुतोव्रीहिपदस्य व्रीहीतरासम्वलितव्रीहौवेदस्थल लक्षणया बोधइति। एवञ्च नियम-बोधकत्वे च, तत्र व्रीहियागे, यवसमुच्चये यवैरिति विधिना निरुक्त-यागसामान्ये यवकरकत्वान्वयेन यवस्यापि प्राप्तौ निरपेक्षव्रीहिश्रुति-प्राप्तव्रीहीतराकारणकत्वेन विरोधः। एवञ्च, एवं रीत्याच, एकार्थतया एक जातीयफलं प्रति तृणारणिमणिन्यायेन कारणतया विविधं यागादिकर्म्म कल्प्यतइति विकल्पो विकल्पपदार्थः (६१)।

तस्मात्विकल्पे दोषाष्टकसत्त्वान्नेच्छाविकल्पइति। यत्रैकादश्यामुप-वसेदिति सामान्यविधानन्तरं पूर्णाखण्डयोरुपस्थित्या उपवासः कथम्भवे दित्याकाङ्क्षायां पूर्णायामेकादश्यामुपवसेदित्युक्ते खण्डायामुपवासव्यावृत्ति रायाति खण्डायामुपवसेदित्युक्ते पूर्णाव्यावृत्तिरितिविरोध स्तत्परिहाराय पूर्णैकादश्युपवासाभावविशिष्टे खण्डोपवासस्य खण्डोपवासाभावविशिष्टे पूर्णोपवासस्य च श्रुतिवाक्यद्वयेन बोधनेऽष्टदोषप्रसङ्गइतिभावः।

उत्तरान्तु यतिः कुर्य्यात् पूर्व्वामुपवसेद्‌गृही। कूर्म्मपुराणे-ऽपि। एकादशी प्रवृद्धाचेच्छुक्ले कृष्णे विशेषतः। तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही। एकादश्येव प्रकर्षेण वृद्धा परदिने निर्गता न दशमी नापि

व्यवस्थितविकल्पइति, अधिकारिभेदेन विविधकल्पइत्यर्थः। ननु दर्शपौर्ण-मासाभ्यां यजेतेत्यत्र यथासमुच्चयस्तथा उपोष्ये द्वेतिथीतत्रेत्यत्रापि समुच्चयः स्याद्विलेनोल्लेखादित्यत आह अतएवेति, प्रभाते पुनरेव सेति, परदिने द्वादश्यनिर्गमेचेति पूरणीयं, पूर्णाप्येकादशी त्याज्या द्वितयं वर्द्धते यदी-त्युक्तत्वात् गृहीतिसामन्यतोनिर्द्देशात् वैष्णवस्यापि ग्रहणं उपोष्ये द्वे तिथी-तत्रविष्णुप्रीणन तत्परैरित्यत्र उभयत्रविष्णुप्रीणनतत्परइत्यन्वयाद्विष्णु भक्तस्यापि गृहियतिभेदेन व्यवस्थावोधनाच्च। विधवायाश्चेति, चकारेण व्रह्मचारिग्रहणं पत्याज्ञावशात् सधवायाउपवासश्चेत् स तदा तस्याः पूर्व्व-दिने, पतिसमानधर्म्मदर्शनादिति वोध्यं। अत्रघटिकेत्युपलक्षणं प्रभाते पुनरेवसेति समान्यत एवोक्तत्वात् एकादश्यामिव द्वादश्यामप्युपवासस्य विहितत्वात् द्वे तिथी तत्रेत्यनेन एकादश्युपवासोभयपरत्वमस्तु किं व्यवस्थितविकल्पपरत्वकल्पनेतिचेन्न एकादशीमुपवसेद्द्वादशीमथवापुन-रित्यादिनैकोपवासेनैवोभयसिद्धेरुक्तत्वात् तत्रोत्तरां यतिः कुर्य्यादित्या-दिना विकल्पवोधनाच्च। नचयत्र त्रयोदशीदिने किञ्चिद्द्वादशीलाभः नतुसा पारणयोग्या तत्र यत्र वा पूर्णैकादशी-परदिने निर्गता द्वादशीचारु णोदयव्यापिनी न परदिने निर्गता तत्र पूर्णाखण्डयो गृहि-यत्यादि भेदेन व्यवस्थापरमुत्तरान्तु यतिः कुर्य्यादित्यादिवचनं नतुत्रिस्पृशाख्लपर तत्र क्रतुशतं पुण्यमित्यनेन सामान्यत स्तत् प्रशंसनादितिवाच्यं द्वादश्यां पारणालाभे पूर्णैवपरिगृह्यतइत्युक्तद्वादशीपारणालाभहेतोरविशेषात् त्रिस्पृशावचनविषयस्य अनुपदमेव दर्शयिष्यमाणत्वात्। न च निरुक्त पूर्णाख्लीयद्वादश्या उन्मीलनीत्वेन त्रिस्पृशात्वेन वा तदुपवासस्य नित्य-त्वेन गृहिणां तत्परित्यागे नित्यातिक्रमदोषः स्यादितिवाच्यं उन्मी-लनीत्यागे दोषश्रवणस्य यत्यादिपरत्वात् तेषामेव तत्रोपवासविधानात् त्रिस्पृशाया नित्यत्वाभिधानन्तु दशमीविद्धैकादशी परदिवसीयक्षि

द्वादशीत्यर्थः। पुनः प्रभातसमये घटिकैका यदा भवेत्। तत्रोपवासोविहितोवनस्थस्य यतेस्तथा। विधवायाश्च तत्रैव परतोद्वादशी न चेत्। तेन पारणदिने द्वादशीलाभे सर्व्वएव पूर्णां त्यक्त्वा खण्डामुपवसेत्। तदलाभे गृही पूर्व्वामितरस्तूत्तरां विधवापीति लभ्यते (६२)।

अथ त्रिस्पृशैकादशी। यदा पूर्व्वदिने दशमी परदिने चैकादशी स्वल्पा ततोद्वादशी रात्रिशेषे त्रयोदशी तदा सैव सर्व्वैरुपोष्या। एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। अत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणमिति हलायुधधृतवचनात्। हेमाद्रिस्तु परिशेषखण्डे स्कान्दं। एकादशीकला यत्र द्वादशी च त्रयंगता। नक्तं तत्र प्रकुर्व्वीत नोपवासोगृहाश्रमे। अत्र च उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेदिति सामान्यशास्त्रस्य नक्तविधायकविशेषशास्त्रेण

स्पृशापरं तदन्यत्रिस्पृशा च यत्यादीनामेव नित्येतिविवेकः, त्रयोदश्यान्तुपारणं, विवादेषु च सर्व्वेषु द्वादश्यांसमुपोषणं। पारणञ्च त्रयोदश्यामाग्नेयं मामकी मुने। हेतुवादोनकर्त्तव्योहेतुना पतते नरइति। पूर्व्वदिने सूर्य्योदयपूर्व्वमुहूर्त्तद्वयान्वितैकादशी, परदिने यत्रैकादशी द्वादशी त्रयोदशीति तिथित्रयं तत्र विकल्पेनोपवासमुक्त्वा पूर्व्वदिने दशमी विद्धैकादशी परदिनेच त्रिस्पृशा तत्र त्रिस्पृशायां सर्व्वोपोष्यतां विशेषफलञ्च वक्तुमाह (६२)।

अथ त्रिस्पृशैकादशीति। परतः परदिने द्वादशी न चेदिति एतच्च रात्रिशेषे त्रयोदशीलाभार्थं, परतोद्वादशी न चेदित्यत्र रात्रिशेषे त्रयोदशीति क्वचित् पाठः। अत्र पूर्व्वदिने एकादश्याः पूर्णत्वे गृहिणां पूर्णायामुपवासविधानादेतद्वचनं पूर्व्वदिने दशमीयुक्तैकादशीस्थलाभि-

वाधः। एकादशीकलाऽप्येका द्वादशी यत्र लुप्यते। तत्रोपवासं कुर्व्वीत निष्कामोविष्णुतत्परः। इत्याह। अत्र परवचनपर्य्यालोचनया नक्तविधानं कामिनः काम्य-व्रतविषयं। निष्कामस्य नित्योपवासार्थिनोविष्णुपरा-यणस्य गृहस्थस्याप्युपवासइति तत्त्वं। अतएव नित्यं भक्तिसमायुक्तैरित्यनेन पक्षे पक्षे नित्यमुपोषणमित्युक्तं। अतएवात्र द्वादशीहानियुक्ताविद्धाधिकेति विद्धायाः सप्तमे प्रकारे पूर्व्वोक्तरूपे सप्तमग्रान्तु व्यवस्थितिरित्यनेन स्व-वाक्येन विश्वरूपेणाप्येषैव व्यवस्थोक्ता। नचात्र, नि-ष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं सदा। सकामस्तु सदा पूर्व्वामिति वौधायनोऽव्रवीदितिविष्णुरहस्य-वाक्यात् सकामेन दशमीविद्धा कार्य्या निष्कामेण द्वादशीयुक्तैकादशीति वाचस्पतिमिश्रोक्ता व्यवस्था युक्ता। पूर्व्वोपदर्शितनक्तवोधकवच्यमाणदशमीविद्धानिन्दावचन-विरोधात्। विष्णुरहस्यानार्षत्वस्य दानसागरे अनिरुद्ध-भट्टेनाभिहितत्वाच्च यथा लोकप्रसिद्धमेतद्विष्णुरहस्यं

प्रायश्चित्तमितिभावः। वाधइति, तेन न दिवसे किञ्चित् भक्षणं कार्य्य-मितिभावः। हेमाद्रिभावार्थं स्फुटयति तत्रपरवचनेनेति। तत्र हेमाद्रौ। द्वादशी हानियुक्तेति परदिने द्वादशीक्षये पूर्व्वदिने दशमी-युतैकादशी द्वादशीहानियुक्ता विद्धोच्यते साधिकासप्तमीतदर्थः। सप्तम्या-न्त्विति सप्तम्यां विद्धायामितार्थः व्यवस्थितिः व्यवस्था। न चात्रेति द्वादशीक्षयस्थलइत्यर्थः पूर्व्वोपदर्शितेति, नक्तव्रतविधायक-हेमाद्रिधृत-स्कान्दवचनेनेतार्थः। अनिरुद्धभट्टाभिधानमाह यथेति न परिगृहीतं स्मृतान्तरविरोधे न ग्राह्यमितार्थः, अत्रहेतुतया विशेषणमाह संग्रहरूप-श्चेति अत्र चकारो हेत्वर्थः संग्रहरूपमिदानीन्तनरचितमनार्षमितियावत्।

शिवरहस्यञ्च इयमिह न परिगृहीतं संग्रहरूपञ्च यत-तोऽवधार्य्येति। यत्तु शिवरहस्यमिति कृत्वा तिथि-विवेकेऽभिहितं तन्मुनिवचनस्य स्वव्याख्यानसंवादाय। अ-त्रापि विष्णुरहस्यं (६३)।

वक्ष्यमाणशुक्लपक्षीयारुणोदयवेधे वैष्णवावैष्णवगृहि-विधिसंवादायेति। समयप्रदीपेऽपि यत्र पूर्व्वदिने दशमी-विद्धा परदिने द्वादशीमिश्रा दिनान्तरे च द्वादशी न वर्द्धते तदा द्वादशीमिश्रैवोपोष्या प्रधानकालानुरोधात्। पारणादौ तु द्वादशीबाध एव। एतन्मूलकमेव गौड़ी-यवचनं। एकादशी द्वादशीमिश्रा परतोऽपि न वर्द्धते। गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः। एतद्विस्पृशि त्रिस्पृशि च सम्भवत्यविशेषात्। अथ दशमीविद्धैकादशी। सा च द्वेधा पूर्व्वाह्ने दशम्या उत्तराह्ने द्वादश्या च युता दशम्य निर्मुक्ता चेति, तत्रोभयीं दशमीयुतामनुपोष्य पूर्व्वत्र द्वादशीयुतामेकादशीं उत्त-रत्र शुद्धां द्वादशीमुपवसेत्। एकादशीमुपवसेद्वा-दशीमथवा पुनः। विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचिदितिवचनाद्वक्ष्यमानवचनजाताच्च।

---

मुनिवचनेति, मुनिवचनस्य यद्व्याख्यानं तस्य संवादाय यथार्थख्याप-नाय नतु स्वतः प्रमाणतयेत्यर्थः। अत्रापि एतद्ग्रन्थेऽपि, विष्णुरहस्य-मिति उक्तमितिशेषः संवादायेत्यनेनान्वयः (६३)।

वक्ष्यमाणेति शुक्लपक्षेऽरुणोदयविद्धायामवैष्णवानामुपवासः परदिने वैष्णवानां गृहिणामिति योवक्ष्यमाणविधिस्तत्संवादायेत्यर्थः। तथाच विष्णुरहस्यवचनमप्येतद्व्यवस्थाभिधायकमिति। नतु कामिनां विद्धामा-

उत्तरपक्षे विशेषोऽपि वक्ष्यते। यत्तु यानि दशमीविद्धा-निन्दाबोधकवचनजातानि तान्युभयतोवेधे द्रष्टव्यानि। दशमीमात्रवेधे तु सैवोपोष्या। एकादशी न लभ्येत सकला द्वादशी भवेत्। उपोष्या दशमीविद्धा ऋषि-रुद्दालकोऽब्रवीदिति ऋष्यशृङ्गस्मृतेः। त्रये पूर्व्वान्तु कारयेदिति विश्वरूपनिबन्धाच्च। न द्वादश्युपवासः प्रमाणाभावात्। एकादशीमुपवसेद्द्वादशीमथवा पुनः। इत्यस्य राजाद्यलिखितत्वेनामूलकत्वादिति वर्द्धमानोपा-ध्यायवाचस्पतिमिश्रमतं। तन्न। तदुपजीव्यहरिनाथो-पाध्यायेन महाजनपरिगृहीतत्वेन तद्वचनस्याभिधानात्। न हि राजाद्यलिखितमेवाप्रमाणं रामायणादेस्तथात्वा-पत्तेः। न हि दशमीविद्धेति वचनं राजलिखितं। तस्मान्नानादेशीयसंग्रहकारलिखितवचनसंवादादेव प्रामा-ण्यपरिग्रहइति। उपोष्या दशमीविद्धेत्यस्य विषय उदयपूर्व्ववेधे वक्ष्यते। नवा नानासंग्रहधृतनानामुनि-वचनान्यनादृत्य संग्रहकर्त्तुर्विश्वरूपस्य षड्मतोद्धावस्था युक्ता। तथाच समयप्रदीपे श्रीदत्तोपाध्यायैः किञ्चित ": यदि तु, एकादशीमुपवसेद्द्वादशीमथवा पुनः। विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचिदिति गौडीय-वचनं प्रमाणं तदानेनैव विधे द्वैधे एकादशी-

---

व्रतोपवासविधायकं, इदन्तुबोध्यं कामिनां पूर्णायां निस्कामिनां त्रिस्प-शायामित्येतत् परत्वमपि सम्भवतीति। न चात्रविष्णुरहस्यवचने निष्का-मस्तुगृहीत्युक्तं ननु वैष्णवइति कथं तत्सम्वादइतिवाच्यं विष्णुर्पिता-खिलाचारः स हि वैष्णव उच्यत इत्यनेन वैष्णवस्यनिष्कामत्वलाभात्

कार्य्ये द्वादशीर्व्विधियुक्त एव द्वादश्युपवासः । नचेदं व्रतान्तरमेव एकादशीसन्दंशपाठात् अथवेत्यनेन पूर्व्वापेक्षितविधेश्च । पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुतामिति वाक्यमुदयपूर्व्वकालीनदशमीयोगविषयं वचनान्तरबलादिति प्रपञ्चितं जितामित्रादिभिरित्याहुः । तथाच कालविवेककृत्यमहार्णवयोर्भविष्यपुराणं । एकादशीं दशायुक्तां वर्द्धमाने विवर्ज्जयेत् । पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुतामिति । वर्द्धमाने सोमे शुक्लपक्षे । पक्षहानौ स्थिते सोमे कृष्णपक्षे । लङ्घयेत् उपवसेत् । क्षयमार्गस्थिते सोमे कुर्व्वीत दशमीयुतामिति कालमाधवीयपाठे व्यक्तएवार्थः । केचित्तु । विद्धाप्येकादशी ग्राह्या परतोद्वादशी न चेदिति । मुहूर्त्तं द्वादशी न स्यात्त्रयोदश्यां यदा मुने । उपोष्या दशमीविद्धा सर्व्वैरेकादशी तदेति । त्रयोदश्यां यदा न स्याद्द्वादशीघटिकाद्वयं । दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथिरिति स्मा[illegible]नारदीयवचनैरेवम्भूता दशमीविद्धैवो-

परतोऽपीति । [illegible]क्रमे परतः परदिने न वर्द्धतेऽपि द्वादशीत्यर्थः । त्रिस्पृशा एकादशीमिश्राद्वादशी यदि त्रयोदशीदिन-प्रथमक्षणे नष्टा त्रिस्पृगिति । यदिचैकादशी द्वादशी त्रयोदशीचैकदिने त्रिस्पृगिति अथैतावताग्रन्थेन गृहिमात्रस्य पूर्णैकादशीलाभे त्रयोदशीदिने द्वादश्यलाभे पूर्णायामेवोपवासः नतुत्रिस्पृशादावपि परदिने यत्र विद्धैकादशी परदिने निःसरति द्वादशी-क्षयश्च तत्र त्रिस्पृशायामेव सर्व्वेषामुपवासः, परन्तु तद्दिने कामिनां वैष्णवेतर गृहिणां न काम्योपवासः किन्तु तेषां नक्तव्रतं नित्योपवासस्तस्यैवेति ग्रन्थकृन्मतं पर्य्यवसितं प्रतीयते । केचित्तु उपोष्ये द्वे तिथी एकादशी : दशी तिथि[illegible]यएवोपवासविधानात् एतच्च

पोष्या त्रयोदश्यां द्वादशीनिर्गमे तु मुमुक्षुभिर्द्वादश्युपोष्या सकामैस्त्वत्रापि दशमीविद्धैव। शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। तथा, निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं सदा। सकामस्तु सदा पूर्व्वामिति वौधायनोऽब्रवीदिति विष्णुरहस्यवचनादिति वदन्ति। अत्र, विद्धाप्येकादशीत्यादिवचनानां नानादेशीयसंग्रहकारधृतनानावचनतद्व्याख्यानादनुपदं विषयः स्फुटीभविष्यति। अनार्षविष्णुरहस्यवाक्यमपि उत्तरैकादशीमित्यभिधानान्नोक्तविषयं किन्तु वक्ष्यमाणारुणोदयवेधविषयं। यदपि, कुर्य्यादलाभेसंयुक्तां नालाभेऽपि प्रवेशिनीं। उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणं। उदयात् प्रागदशम्यास्तु शेषः संयोगइष्यते। उपरिष्टात् प्रवेशस्तु तस्मात्तां परिवर्ज्जयेत्। इत्यनयोः समूलत्वेऽपि अलाभे त्रयोदश्यां द्वादश्यलाभे संयुक्तां सूर्य्योदयात्

---

गृहिपरं तदन्येषामेकादश्युपवासः परदिने, तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृहीत्युक्तेः उत्तरां परदिनस्थैकादशीं तद्युक्तदिनमिति यावत्। तत्रोपवासद्वयासामर्थ्ये परदिन एव तिथिद्वययोगस्य बलवत्त्वेन नित्योपवाससिद्धेरित्याहुः। साचेति, दशमीविद्धैकादशीचेत्यर्थः। पूर्व्वदिने दशमीयुता सती परदिने द्वादशीयुतेत्येका दशमीनिर्मुक्तेति, अपरा तत्र दशम्यनिर्मुक्ता दशमीयुता परदिने न निर्गता। पूर्व्वत्र प्रथमविद्धास्थले उत्तरत्र द्वितीयविद्धास्थले। उभयोर्वेधे दशमीद्वादश्योर्वेधे। दशमीमात्रविद्धादशमीयुक्तदिने त्रयङ्गताचेत् सैवोपोष्येत्यर्थः, तु शब्दो-यदीत्यर्थः। राज्ञा भोजराजेन, तदुपजीव्येति, भोजराजोपजीव्येत्यर्थः। विश्वरूपस्य वा स्यादुपवस्येति निष्कामसकामभेदेन भिन्नेत्यर्थः। एकादशीकार्य्यं एकादशीजन्यफलनिमित्तं द्वादशीविधेर्द्वादशीमथवापुनरि-

प्रागवक्त्रावलोकनसमये दशम्यायुतां षष्टिदण्डात्मिकामेकादशीं कुर्य्यादित्यर्थः। द्वादश्यां पारणालाभे पूर्णैव परिगृह्यत इति प्रचेतोवचनैकवाक्यत्वादितिभावः। लाभे तु संयुक्ता न ग्राह्या अलाभइति वचनस्वरसात् पूर्णाप्येकादशीत्याज्या इत्यमेनैकश्रुतिमूलकत्वाच्च। नालाभेऽपि प्रवेशिनीमिति द्वादश्यास्त्रयोदश्यामनिर्गमेऽपीत्यर्थः। यत्र दशमी सूर्य्योदयात् परतः, परदिने चैकादशी द्वादशी रात्रिशेषे त्रयोदशी चेति त्रिस्पृशा तत्र दशमीविद्धैकादशीनिषेधकमिदं। अयमाशयः। एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्दियं तथेति भविष्यपुराणवचनात् परदिने द्वादश्यां विष्णूपासनार्थत्वमेकादश्युपवासस्यावगतं तच्चोक्तविषये दशमीविद्धैकादश्युपवासमन्तरेण न सम्भवति सोऽप्यस्त्वित्याशङ्क्योक्तमुपोष्या द्वादशी तत्रेति। एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। तत्र क्रतुशतं पुण्यं

त्युक्तेयद्वादश्युपवासविधेः, नचेदमिति द्वादशीमथवा पुनरितिवचनमित्यर्थः व्रतान्तरं एकादश्युपवासव्रतादन्यदेव द्वादशीव्रतं वोधयतीति शेषः, एकादशीसन्दंशपाठात् एकादशीव्रतप्रकरणपाठात् पूर्व्वापेक्षितविधेरिति, विधेः द्वादशीविधेः पूर्व्वापेक्षितत्वस्य एकादशीव्रते कालविशेषाकांक्षयोत्थापितत्वस्य वोधनादित्यर्थः। उदयपूर्व्वकालीनेति, अरुणोदयकालीनेत्यर्थः सर्व्वैर्गृहस्थवनियतिप्रभृतिभिः। एवम्भूतदशाविद्धा उभयवधयुता, सदेति नित्योपवासपरत्वलाभाय। वचनानामित्यस्य विषय इत्यनेनान्वयः, नोक्तविषयमिति, पूर्व्वविद्धैकादशी परदिने न निःसरति द्वादशी च त्रयोदश्यां निःसरति न तद्विषयमित्यर्थः। अत्र हंसुहतैकादशीमित्यभिधानादिति परदिने एका-

त्रयोदश्यान्तु पारणमिति वचनात्। त्रयोदश्यामिति नतु द्वादश्यां विष्णुपूजां कृत्वा। नच एकादश्याः परदिने द्वादशीसम्बन्धे द्वादश्युपोष्या इत्यसङ्गतं। एकादशीयुक्तद्वादश्या अपि द्वादशीत्वाविशेषादित्याहुः। तदप्यश्रद्धेयं। यतोजीमूतवाहनहलायुधप्रभृतिभिस्तद्वचनमभिहितं यथा श्रुतं व्याख्यातञ्च। हेमाद्रिमाधवाचार्य्यप्रभृतिधृतवचनान्तरसंवादिशिष्टाचारपरिगृहीतञ्च। ततश्च तद्वचनस्यार्थान्तरकल्पनं कल्पनमेव। तथाहि। एकादशीमुपवसेद्द्वादशीमथवा पुनः। विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित्। इत्यभिधाय कुर्य्यादलाभ-

दशीनिर्गमबोधकादित्यर्थः यदा च पूर्व्वविद्धैकादशी परदिने निःसरति तथा द्वादशी परदिनगा तत्र सर्व्वैरेव उत्तरैकादश्या उपोष्यत्वात् परदिने द्वादश्यनिर्गमे पूर्व्वैकादश्या सर्व्वेषामेव तदुपोष्यत्वेनोक्तत्वाच्च, न च तत्परत्वसम्भव इति, तेषां विष्णुरहस्यवचनोपादानमनर्थकमिति भावः। यद्वा नोक्तविषयं न विद्धाप्येकादशी इत्यादि वचनदत्तविषयपरं तस्य परदिनासम्बन्ध्यरुणोदयविद्धैकादशीपरत्वादिति भावः। पूर्णेवेति उदयादुदयाद्रवेरित्युक्तपूर्णलक्षणाभिप्रायेणेदं। लाभेतु त्रयोदश्यां पारणयोग्यद्वादशीलाभेत्वित्यर्थः। तत्रेति न तु प्रवेशिनीसामान्यनिषेधकं तेन दशम्येकादशी द्वादशी चेति त्रिस्पृशोपोष्येति। ननु यत्रैकादशीत्यादि तिथित्रयरूपा त्रिस्पृशा तत्र प्रवेशिनी सर्व्वथा निषिद्धेवेति तद्गृह्यस्याप्रसक्त्या कथं तन्निषेधकमिदमित्यत आह अयमाशयइति द्वादश्यां विष्णुपूजां कृत्वेति, त्रयोदश्यामित्यस्यादौ पूरितं तद्वचनं। कुर्य्यादलाभे संयुक्तामितिवचनं यथाश्रुतं प्रवेशिनीसामान्यनिषेधकं। समूलत्वेऽपीत्यनेन यत् सन्दिग्धमूलकत्वमुक्तं तदपिदूषयति हेमाद्रीत्यादि। ततश्च तद्वचनस्य समूलत्वाच्च समूलत्वं तत्रहेतुरुत्तरैकादशीमित्यभिधानादिति परदिनैकादशी निर्गमबोधज्ञापकतत्सम्वादवचनं प्रदर्शयन्नर्थान्तरकल्पने बाधक-

इत्यादिवचनद्वयं कौर्म्मएवाभिहितं। तत्र प्रकृतत्वान्न-दशम्या युतामित्यस्यैवानुवादकं विधायकञ्च कुर्य्यादलाभ-इत्यादि (६४)।

एवञ्च संयुक्तैकादशीकरणविधानादलाभइत्यत्राप्येका-कादश्या एव परदिनेऽलाभइति प्रतीयते नतु त्रयो-दश्यां द्वादश्यलाभोऽनुपस्थितेः। यदुक्तं पूर्णैत्येक-वाक्यत्वं तदपि न भवदुक्तविषये पूर्णत्वा योगात्। तथाच सौरधर्म्मे, आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता। सैकादशीति संपूर्णा विद्धान्या परिकीर्त्तिता। इत्य-नेनैकादशीपूर्णत्वस्य सूर्य्योदयप्राक्कालीनमुहूर्त्तद्वयान्वि-तत्वेन विशिष्याभिधानात्। स्कान्देऽपि। प्रतिपत्-प्रभृतयः सर्व्वाउदयादोदयाद्रवेः। संपूर्णाइति विख्याता-हरिवासरवर्ज्जिताः। अतस्तदुक्तपूर्णाविषये पूर्व्वाया विद्ध-त्वात् परैकादश्युपोष्या। कुर्य्यादलाभे संयुक्तामित्य-नेन द्वादश्यामेकादश्यलाभे संयुक्तां प्रातर्वक्त्रावलोकन-समयविद्धां कुर्य्यात् अर्थाद्द्वादश्यामेकादशीलाभे तादृश विद्धां न कुर्य्यादित्यवगतेस्तत्र परोपोष्येति गम्यते। एतद्विषये, षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे

माह तथाहीत्यादि, कौर्म्म एवेत्यनेन समूलत्वं दर्शितं प्रकृतत्वात् प्रक्रान्त-त्वात् भवदुक्तविषये अरुणोदयकालीनदशमीवेधविषये। अर्थादलाभा-दित्युपादानात् अन्यथा तदर्थं स्यादिति भावः (६४)।

संकीर्णा विद्धा अत्रापि पूर्व्वदिने अरुणोदयविद्धा परदिनगायत्र तत्रापीत्यर्थः मोचेत् त्रयोदश्यांद्वादश्यलाभे एकादशीमुत्तीर्य्येति द्वादश्यां पारणनियमादितिभावः। द्वादश्या आद्यपादमुत्तीर्य्येतिपाठः। तत्रापि

परे। अकर्म्मण्यं तिथिमलं विद्यादेकादशीं विनेति-सङ्गच्छते। तथा कालमाधवीये गारुड़ं। आदित्यो-दयवेलाया आरभ्य षष्टिनाड़िका। संकीर्णैकादशी नाम त्याज्या धर्म्मफलेप्सुभिः। अत्रापि त्रयोदश्यां द्वादश्य-लाभएव परोपोष्येत्यवधेयं। नचेत्तत्र पूर्व्वामुपोष्य परदिने द्वादश्याद्यपादमुत्तीर्य्य पारणं कुर्य्यादिति। विद्धाप्येकादशी ग्राह्या परतोद्वादशी नचेदित्यादि प्रागुक्तवचनेभ्यः। अथैवं विद्धापूर्णयोर्व्यवस्थायामविशेष-इति चेत्। द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते। इत्यविशेषाद्वैष्णवेनापि पूर्णोपोष्या। अरुणोदयविद्धा तु द्वादशीपारणस्यालाभेऽपि वैष्णवैर्नोपोष्या किन्तु खण्डैका-दश्युपोष्येति विशेषः। दशमीशेषसंयुक्तोयदि स्यादरु-णोदयः। नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रत मितिगारुड़े वैष्णवेनेत्यभिधानात्। तत्रापि कृष्णपक्षे-ऽरुणोदयविद्धैवोपोष्या शुक्लपक्षे तु न तथेति विशेषः एकादशीं दशायुक्तां वर्द्धमाने विवर्जयेत्। पक्षहानौ

परदिननिःसृतप्रागरुणोदयविद्धैकादशी स्थलेऽपीति, चेत्येति, अस्य एका-दशी द्वादशी चेतिवचनस्य अस्य च विषयेत्यनेन वाधकत्वमित्यनेन चान्वयः उदयोपरिविद्धाया एकादश्याः परदिने विषयस्य त्रिस्पृशैकादश्युप-वासरूपस्य सम्भवात् अरुणोदयविद्धा च पूर्णाचेति ते अरुणोदयविद्धा-पूर्णे विषयौ ययोस्तयोर्विशेषवचनयोर्वाधकत्वेनेत्यर्थः ते च वचने विद्धा-प्येकादशीग्राह्या परतोद्वादशी नचेदिति द्वादश्यांपारणालाभे पूर्णैव परिगृह्यत इति, विशेषत्वश्चास्य सामान्यत्रिस्पृशाविषयकवचनमपेक्ष्य, तथाच सामान्यविशेषयोर्विशेपविधेर्वलवत्त्वात् त्रिस्पृशाविषयकवचनस्य सामान्यस्य चारुणोदयविद्धापूर्णा परदिवसीयेतरत्रिस्पृशा विषयकत्वमिति-

स्थिते सोमे लङ्घयेद्दशमीयुतामित्येकवाक्यत्वात्। एतच्छुक्लपक्षैकादशीसंवादाय। निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं सदा। सकामस्तु सदा पूर्व्वामिति वौधायनोऽब्रवीदिति विष्णुरहस्यवाक्यमिति। अथारुणोदयविद्धोत्तरैकादशी पूर्णोत्तरैकादशी च द्वादश्यास्त्रयोदश्यामनिर्गमे सर्व्वैरेव कथं नोपोष्यते। एकादशी द्वादशी च परतोद्वादशी नच। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणमिति वचनादिति चेन्न। अस्योदयोपरिविद्धैकादशीपरदिने विषयसम्भवात् नारुणोदयविद्धापूर्णाविषयकविशेषवचनवाधकत्वमिति। अस्मन्मते तु नालाभेऽपि प्रवेशिनीमित्यनेन अलाभेऽपि परदिने एकादश्यलाभेऽपि सूर्य्योदयानन्तरवेधमात्रनिषेधः। भवतांमते परदिन एकादशीलाभ एवेति सङ्कोचः स्यात्। उपोष्या द्वादशीत्यत्र द्वादशीपदस्य एकादशीयुक्तद्वादशीपरत्वे प्रमाणं नास्ति लक्षणा च स्यात्। किन्तु द्वादशीमथवा पुनरित्यस्य प्रवेशिन्यन्तरितकेवलद्वादशीपरत्वप्रदर्शनार्थं नालाभेऽपि प्रवेशिनीमिति। तथा च कालविवेके जीमूतवाहनः। एकादशी दशाविद्धा परतोऽपि न वर्द्धते। गृहिभिर्यति-

भावः। प्रवेशिनी तु कदाचिदपि नोपोष्येत्याह अस्मन्मतेत्विति नालाभेपीत्यपिना परदिने एकादशीलाभ इति लभ्यते तथाच प्रवेशिनीमात्रे नोपवास इतिपर्य्यवसितमुपदर्शयति सूर्य्योदयानन्तरवेधमात्रे निषेधइति सङ्कोचइति तथाच दशमीविद्धां वर्ज्जयेदित्यत्र परदिने एकादशीलाभइति विशेषणज्ञानं परदिने एकादश्यालाभे विद्धायां उपवासविधि-

भिश्रैव सैवोपोष्या सदा तिथिरिति भविष्य-पुराणीयात्। दशा दशमी, तत्र द्वादशीदिने एका-दशीकलार्द्धमात्रसत्त्वाप्यनिर्गमे दशम्या विद्धैकादशी उपो-ष्येति प्रचरति शास्त्रार्थः सतु सौरधर्म्मोत्तरकूर्म्मपुरा-णादिविरुद्धः। तथाच सौरधर्म्मोत्तरे। एकादशीमुप-वसेद्द्वादशीमथवा पुनः। विमिश्रां वापि कुर्व्वीत न दशम्या युतांक्वचित्। कौर्म्मे। एकादशीमुदवसेद्द्वादशी-मथवापुनः। विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित्। कुर्य्यादलाभे संयुक्तां नालाभेऽपि प्रवे-शिनीं। उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणं। उदयात् प्राग्दशम्यास्तु शेषः संयोगद्दृष्यते। उपरि-ष्टात् प्रवेशस्तु तस्मात्तां परिवर्जयेत्। अस्यार्थः। द्वादश्यां कलार्द्धमात्रमप्येकादश्याअनिर्गमे यदि दशमी नोदयं स्पृशति तदा संयुक्तोच्यते सैवोपोष्या अथोदयं स्पृशति तदा सैव प्रवेशिनीपदवाच्या तां विहाय द्वादशीमेवो-पवसेत् तदिदमुक्तं नालाभेऽपि प्रवेशिनीमिति। सौर-

कल्पनञ्च गौरवायेतिभावः। यच्चोक्तं विद्धापरदिने एकादश्यादि-तिथित्रयस्पर्शे तद्दिने उपवासविधायकमुपोष्या द्वादशी तत्रेतिवचन-मितिद्वादशीपदं एकादशीपरमिति तदपि दूषयति एकादशीयुक्तेति, किञ्चित्यादि। द्वादशीमथवा पुनरित्यस्य यत् शुद्धद्वादश्युपवासपरत्वं तत् कुत्रेत्याकांक्षायां तत्स्थलमाह नालाभेऽपि प्रवेशिनीमित्यनेन सूर्य्यो-दयानन्तरं वेधमात्रं निषिद्धं तत्परदिने एकादश्यलाभे शुद्धद्वादश्यु-पोष्याइत्यावेदयितुमाह उपोष्या द्वादशी तत्रेतिभावः। परतोऽपि परदिने च न वर्द्धते न निःसरति। एकादशींशुद्धैकादशींद्वादशीं शुद्धद्वादशीं विमिश्रां द्वादशीयुतां। दशम्या युतां उदयानन्तरदशमीयुतां क्वचिद-

धर्म्मोत्तरे सूतउवाच। कीदृशस्तु भवेद्वेधो योगोवि-प्रेन्द्र कीदृशः। योगवेधौ समाचक्ष्व याभ्यां दुष्टमुपोषणं। व्यास उवाच। या तिथिः स्पृशते सूत प्रातर्वक्त्रावलोकिनी। स वेधइति विज्ञेयोयोगः सूर्य्यो-दयी मतः। सूर्य्योदयात् प्रागन्योन्यमुखावलोकन-योग्यं प्रातःकालं यदि दशमी स्पृशति नतूदयं स वेधइति परिभाषितं यस्य कूर्म्मपुराणवचने शेषः संयोगइत्युक्तं। यस्य तूपरिष्टात् प्रवेशस्त्वित्युक्तं सोऽनेन योगः सूर्य्योदयी मतइत्युक्तं (६५)।

परिभाषितत्वादेवास्य परस्परविरोधोन वाच्यः। तेन सूर्य्योदयकाले दशमीस्पृष्टैकादशी न कदाचि-दुपोष्या। किन्त्वेकादशी निःसरतु न निःसरतु वा

त्युक्तः। ननु त्रियामांरजनीं प्राहुरित्यादिवचनवलात् प्रदोषे घटिका युग्मंप्रभातेघटिकाद्वयं। दिनवत्सर्व्वकर्म्माणि कारयेन्नविचारयेदित्यादि वचनमाद्यारुणोदयकालस्यापि दिनत्वातिदेशात् अत्र दशमीयोगे एकादशी-त्याज्या न वेत्याकाङ्क्षायामाह कुर्य्यादलाभ इति। अत्र प्रवेशिनीस्थले। संयुक्तलक्षणमाहउदयात् प्रागिति उपरिष्टादिति उदयस्येत्यर्थः। दशम्याः शेष इत्यनुषङ्गेनान्वयः प्रवेशइतास्यच उच्यते इत्यनुषङ्गेनान्वयः तां संयोग-युतां प्रवेशयुताञ्च। व्यवस्थाभेदायसंयोगप्रवेशभेदेन वेधद्वयमुक्तं साच व्यवस्था दर्शिता कुर्य्यादलाभइत्यादिना। सैवोपोष्येति द्वादश्यां पारणालाभे द्वादशामेकादशानिर्गमे चेतिशेषः। एवञ्च भविष्य-पुराणवचने दशाविद्धेतास्यारुणोदयविद्धेतार्थः। सूर्य्योदयी सूर्य्योदय-कालीनः (६५)।

परिभाषितत्वादेवेति परिभाषाया स्वतद्ग्रन्थमात्रैसिद्धग्रन्थे व्यवस्था-भेदाय कृततत्वादेवेत्यर्थः। एवकारेण सङ्कारादो नद्वैदिक इति सूचितं। व्यवस्थाभेदस्तु वेदे शब्दान्तरेण कथित इतिभावः परस्परविरोधः।

द्वादशीं वोपोषयेत्। यदा तु वक्राावलोकनमात्रं स्पृशति दशमी नोदयं परदिने चैकादशी न निःसरति तदा एकादशीं वेधवतीमुपवसेत्। एकादशी दशायुक्ते-त्यादि दशमीयुतामिति दशम्याहीत्यादिकमप्यस्मिन् विषये बोद्धव्यमित्याह स्म। स्मृतिमहार्णवे भोजदेवो-ऽप्येवमेवं वचनमाह। एवमेव कालकौमुदी। तस्मात् पूर्व्वोक्तमात्स्यकौर्म्मनारदीयवचनानां। दिग्भीरुद्रे समा-युक्ते त्रयेऽहनि तथापरे। उपवासस्तु पूर्व्वेद्युर्नोप-वासः परेऽहनि। इति विष्णुधर्म्मोत्तरीयस्याप्यरुणोदय-विद्धायामेव व्यवस्था नतुव्यवस्थान्तरं जीमूतवाहन-लिखितकूर्म्मपुराणसौरधर्म्मोत्तरविरोधात्। एवमन्यान्यपि वचनानि व्याख्येयानि संवत्सरप्रदीपे हलायुधोऽप्ये-तन्मतानुसारी सन्निदमधिकमुक्तवान् यथा। अरुणो-दयवेलायां दशमी सङ्गता यदि। उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणं। दशमीशेषसंयुक्तोयदि स्यादरुणोदयः। वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतं इत्यादिवचनेषु अरुणशब्द आदित्यवाचकोबोद्धव्यः अरु-णोभास्करेऽपि स्यादित्यभिधानात्। तस्मादेकादशी

कूर्म्मपुराणेऽरुणोदयकालीन दशमीयोगे संयुक्तेति संज्ञा उदयानन्तर संयोगे वेधसंज्ञा सौरधर्म्मोत्तरे तद्दैपरीत्यमिति परस्परविरोधः। इत्याह इति जीमूतवाहनइत्यनेनास्यान्वयः। सवचनं प्रमाणवचनसहितं। तस्मात् प्रवेशिन्याः सर्व्वदा निषेधात्। पूर्व्वोक्तेति केचित्त्वित्यादिनोक्तानां विद्धाऽ-प्येकादशीग्राह्या इत्यादिवचनानामित्यर्थः। दिग्भिः समायुक्तेरुद्रेइत्यन्वयः दिक्पदं दशमीपरं। बहुवचनमनेकस्थलाभिप्रायेण रुद्र एकादशी

त्याज्या दशमीपलमिश्रिता। उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणं। यत्तु। द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणमिति तत्परदिने द्वादशीलाभे तां त्यक्त्वा पारणे वोद्धव्यं (६६)।

हेमाद्रिरपि दशमीविद्धायामुपवासानुपवासविधायकानि वचनानि यथाक्रमं सकाममुमुक्षुविषयकाणि, यथा कौर्म्मे, द्विस्पृशैकादशी यत्र तत्र सन्निहितोहरिः। तामेवोपवसेन्मर्त्यः सकामोविष्णुतत्परः। दशमीं द्वादशीञ्च या स्पृशति सैकादशीद्विस्पृक्। सुमन्तुसत्यव्रतौ। दिनक्षये तु शुद्धाच द्वादशी मोक्षकाङ्क्षिभिः। उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा। पुत्रवद्गृहिनालेण दशमी विद्धा नोपोष्या किन्तु शुद्धा द्वादश्युपोष्या। यथा पितामहः, एकादशीदिनक्षये उपवासं करोति यः। तस्य पुत्रा विनश्यन्ति मघायां पिण्डदोयथा। दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता। यदीच्छेत् पुत्रपौत्राणामृद्धिं सम्पदमात्मनः। एकादश्यां यदा

तथापरेऽहनि क्षये सति द्वादशीक्षयेसति एकादश्यादितिथित्रयस्पर्शे सतीतियावत्। अरुणोदयविद्धायामिवेति, तथाच पूर्व्वोक्तमत्स्यपुराणादिवचनेषु विद्धापदं अत्र च समायुक्तपदमरुणोदयविद्धापरमित्यर्थः। व्यवस्थान्तरं उदयोपरिविद्धायामुपवासपरत्वं इदं वक्ष्यमाणं। अत्र पूर्व्ववचनस्यापि वैष्णवपरत्वं परवचने वैष्णवपदश्रवणात् तथाचारुणोदयपदं यथाश्रुतं सङ्कुचतइत्यवधेयं। वोद्धव्यमित्यन्तोहलायुधग्रन्थः (६६)।

हेमाद्रिरपीति। आहेति परेणान्वयः। दशमीविद्धायामित्यादितत्र दशमीविद्धा सकामैरुपोष्या मुमुक्षुभिर्निष्कामैरनुपोष्येत्यर्थः। दशमीं दशमीयुक्तपूर्व्वदिनमरुणोदयकाले दशमीयोगेऽपि पूर्व्वदिनमिति यावत्

वत्स दिनत्रयतिथिर्भवेत्। तत्रोपोष्या द्वादशी स्यात्त्रयो-दश्यान्तु पारणं (६७)।

व्यासः। दशमीमिश्रिता पूर्व्वा द्वादशी यदि लुप्यते। एकादश्यां महाप्राज्ञ उपवासः कथं भवेत्। शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। पारणन्तु त्रयोदश्यां पूजयित्वा जनार्द्दनं। भविष्ये। दशमीशेष-संयुक्तो यदिस्यादरुणोदयः। वैष्णवेन न कर्त्तव्यं तद्दि-नैकादशीव्रतं। ब्रह्मवैवर्त्तः, चतस्रोघटिकाः प्रातर-रुणोदय उच्यते। यतीनां स्नानकालोऽयं गङ्गाम्भः सदृशः स्मृतः। त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयं। नाड़ीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते। तथा, नन्दा शरीरं देवस्य भद्रा ह्यात्माचयोमतः। तस्मात् सरोगं त्यक्त्वाङ्गमात्मानमुपवासयेत्। नन्दा एकादशी। भद्रा द्वादशी। तथा, वरमेकादशी त्याज्या न कार्य्या दश-

द्वादशीं द्वादशीयुक्तदिनं परदिनमितियावत् यैकादशीम्पृशति सा त्रिस्पृ-गित्यर्थः एकस्मिन्दिने दशमीद्वादशीयुक्तत्वेन त्रिस्पृगित्युक्ती तस्याः प्रवेशिनीत्वेन कस्याप्यनधिकारात्। केचित्तु एवम्भूतत्रिस्पृक् प्रवेशिन्यपि सकामैरुपोष्येति हेमाद्रिमतमित्याहुः। दिनत्रये एकादशीत्रये चेत निश्चितं शुद्धाएकादशीयोगरहिता दशमीविद्धैकादशीनोपोष्येत्य-न्वयः (६७)।

व्यासइति पूर्व्वाएकादशी। तत्परदिने द्वादशीलुप्यते द्वादशीत्रय एकादश्यादितिथित्रयस्पर्शइति यावत्। शुद्धा मिश्रिता यद्वा दशमीयुत पुर्व्वाएकादशी अनन्तरं रात्रिशेषे द्वादशी परदिनेच लुप्यते तत्र शुद्धा एकादशीयोगरहिता द्वादश्युपोष्येत्यर्थः। यतीनां स्नानकालोऽयमिति अरुणोदयकालस्यदिनत्वातिदेशकं त्रियामामिति तदुभेउभेआदिदण्ड चतुष्टयमन्तदण्डचतुष्टयञ्च अरुणोदयदण्डचतुष्टयस्यरात्रित्वनिरासेन प

मीयुता। इत्यरुणोदयवेधनिषेधवाक्यं यदा द्वादश्यां कियन्मात्राप्येकादशी दृश्यते त्रयोदश्याञ्च कियन्मात्रा द्वादशी दृश्यते तदा पूर्व्वा त्याज्या इत्येतत्परं (६८)।

काम्यैकादशीव्रतविषयं वा। अरुणोदयकाले तु दशमी यदि दृश्यते। न तत्रैकादशी कार्य्या धर्म्मकामार्थदायिनी, इति श्रवणादित्याह। पाश्चात्यनिर्णयामृते भविष्योत्तरीयं। अरुणोदयकाले तु दशमी यदि दृश्यते। सा विद्धैकादशी तत्र पापमूलमुपोषणं भविष्यपुराणीयमेतदिति माधवाचार्य्यः। ततश्चारुणोदयवेधे तु भागवतैर्नोपवासः कार्य्यः। स कालः स्कान्दे उक्तोयथा। उदयात् प्राक्चतस्रस्तु नाड़िका अरुणोदयः। तत्र स्नानं प्रशस्तं स्यात्तद्धि पुण्यतमं स्मृतं। विश्वादर्शे, वेधस्तूदये निषिद्धः। दशम्याः प्रान्तमादाय यदोदेति दिवाकरः। तेन दुष्टं हरिदिनं तद्दत्तमसुराय हि, इति स्मृतेः। अत्र दत्तं जम्भासुराय त्विति माधवाचार्य्यः पठति। कालमाधवीये माधवाचार्य्योऽपि, ब्रह्मवैवर्त्तः,

दिनत्वातिदेशः तेन तत्र दशमीयोगे तद्दिवसीयैकादशी विद्धाभवतीत्यर्थः। देवस्य विष्णोः। सयोगंदशमीयुत सर्व्वतिथिद्वययोग एकदिनवृत्तित्वं। अरुणोदयनिषेधकमिति, योगमात्रस्याभिधानात्, यद्वा अरुणोदयनिषेधकमपीति तदर्थः। ननु अरुणोदय विद्धायामप्युपवास श्रवणात् कथं तन्निषेधइत्यतआह यदेत्यादि द्वादश्यां एकादश्यानिर्गमे पारणायोग्यत्वे वाऽरुणोदयविद्धायां उपवास विधानान्न विरोधइतिभावः। स्थलविशेषकल्पनां विनाप्याह (६८)।

काम्यैकादशीव्रतविषयंवेति अत्र वाकारोऽनास्थायां द्विस्पृशैकादशी यत्रेति प्रागुक्तकूर्म्मपुराणवचनविरोधात् एतद्वचनेऽरुणोदयकाले त्वित्यत्रा-

कीदृशस्तु भवेद्वेधोयोगोविप्रेन्द्र कीदृशः। योगवेधौ समाचक्ष्व याभ्यां दुष्टमुपोषणं। चतस्रोघटिकाः प्रातररुणोदयनिश्चयः। चतुष्टयविभागोऽत्र वेधादीनां किलोदितः। अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकाद्वयं। अतिवेधोद्विघटिका प्रभासन्दर्शनाद्रवेः। महावेधोऽपि तत्रैव दृश्यतेऽर्कोन दृश्यते। तुरीयस्तत्र विहितोयोगः सूर्य्योदये बुधैः (६८)।

तथा। यातुधानव्रतं योगे महावेधे तु राक्षसं। जम्भासुरस्यातिवेधे मोहिते वै प्रवेशिनी, इत्यनेन तत्तदेकादशी फलं तत्तदसुरः प्राप्नोतीति विशेषः। घटिका दण्डं। उदयात् प्राक्चतस्रस्तु नाड़िका अरुणोदयः, इति स्कान्दनारदवचनैकवाक्यत्वात्। कण्वः। उदयोपरिविद्धा तु दशम्यैकादशी यदि। दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः। गारुड़े। दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्दिनैकादशी-

रुणपदस्य सूर्य्यपरत्वात् अतएवतुकारोऽपि सङ्गच्छते अन्यथा परदिनगतेऽपि द्वादश्याः सर्व्वैरुपोष्यत्वात्तदुपादानमनर्थकं स्यादिति। केचित्तु[illegible]दरुणोदयनिषेधकवचनजातं वैष्णवपरमित्याहुः। प्रान्तं शेषं। तद्दत्त ममुरायेत्यनीतमत्र। सार्द्धं अर्द्धघटिकासहितं घटिकादण्डः। तथाच षट्पञ्चाशद्दण्डोपरि सार्द्धदण्डद्वयमध्ये दशमीयोगश्चेदरुणोदयवेधः। द्विघटिकायां योगोऽतिवेधः। प्रभासन्दर्शनात् तत्पर्य्यन्तं अत्र दण्डद्वयं न सम्पूर्णं प्रथमार्द्धदण्डस्यारुणोदयवेधगतत्वात् परदण्डस्य किञ्चिद्भागमात्र महावेधगतत्वाच्चेति। अत्रैवारुणोदयकालमध्ये एव न दृश्यतेइति तेन सूर्य्यदर्शनाव्यवहितप्राक्क्षणपर्य्यन्तं सूर्य्यदर्शनसंशययोग्यकाले दशमीयोगोमहावेधइति (६८)।

. वास्कलोसुरविशेषः। मोहिते मोहिताख्यासुरे मोहिनीतिपाठे

व्रतं। उदयात् प्राग्यदा विप्रमुहूर्त्तद्वयसंयुता संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद्गृहीत्यादि वचनजातात् सूर्य्योदयानन्तरविद्धा सर्व्वैरेव नोपोष्या। अरुणोदयविद्धा तु वैष्णवैर्नोपोष्या इत्याह। तेन जीमुतवाहनप्रभृतीनां मते सूर्य्योदयानन्तरदशमीविद्धैकादशीं परित्यज्य शुद्धां द्वादशीमुपोष्य त्रयोदश्यां पारणमिति वर्त्तुलार्थः। तथाच कालनिर्णये स्मरति। अतिवेधमहावेधा ये वेधास्तिथिषु स्मृताः। सर्व्वेऽप्यवेधाविज्ञेयावेधः सूर्य्योदये सति। एवञ्च सूर्य्योदयकालीनवेधः सर्व्वथा त्याज्यः। अरुणोदयवेधे तु प्रतिप्रसवसत्त्वात् क्वचिद्ग्राह्यत्वमिति। अत्र गौड़ीयानां विशेषतोदेशाचारादुदयोपरिविद्धा सर्व्वथा नोपोष्या। तथाच मरीचिः। येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः। तत्र तन्नावमन्येत धर्म्मस्तत्रैव तादृशः। येषु देशेषु ये देवा येषु स्थानेषु ये द्विजाः येषु स्थानेषु यत्तोयं या तु यत्रैव मृत्तिका। सैवतत्र प्रपूज्या स्यात्तेषु कृत्यं विधीयते। राजमार्त्तण्डे भोजदेवः। देशाचारस्तावदादौ नियोज्योदेशे देशे या स्थितिः सैव कार्य्या। लोकद्विष्टं पण्डितानाचरन्ति शास्त्रज्ञोऽतोलोकमार्गेण यायात्। अतएव यत्र न्यायागमयोर्न निश्चायकता तत्रान्तरेरसर्व्वज्ञस्य धर्म्मतत्त्वसाक्षात्-

मोहाख्यासुरसम्बन्धिनीत्यर्थः। प्रवेशिनी। सार्द्धदण्डद्वये दशमीयुतैकादशी तत्रैवेत्येवकारेण उदयात् उदयपर्य्यन्तस्थायिन्याः संकीर्णायाव्यावृत्तिः नोपोष्येत्याहइति पूर्व्वोक्त माधवाचार्य्य इत्यनेनास्यान्वयः। तिथिषु एकादशीषु ये वेधा महावेधाश्चते सर्व्वे अवेधाः क्वचिददुष्टाः सूर्य्योदये

कारासम्भवाच्छिष्टाचारं प्रमाणमाह हेमाद्रिनिबन्धे व्यासः (७०)।

तर्कोऽप्रतिष्ठः श्रुतयोविभिन्ना नासौ मुनिर्यस्य मतं न भिन्नं। धर्म्मस्य तत्त्वं निहितं गुहायां महाजनो-येन गतः स पन्थाः। स्कान्दे, येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्नविद्यते। न तेषां वचनं ग्राह्यं धर्म्मनिर्णय सिद्धये। कालमाधवीये, यस्मिन् देशे यस्मिन् काले येषु शिष्टेषु नीरागद्वेषस्य स्वस्य प्रामाण्यातिशयवुद्धिस्तदा तादृशस्याचारस्य मुख्यत्वमिति। एतदभिप्रेत्य गुरोः शिष्यानुशासने तैत्तिरीयाः समामनन्ति। अथ ते यदि धर्म्मविचिकित्सा वृत्तिविचिकित्सा वा स्याद्ये तत्र व्राह्मणाः सम्यग्दर्शिनोयुक्ता आयुक्ता अरुक्षाधर्म्म-कामाः स्युर्यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथा-इति। सम्यग्दर्शिनः शास्त्रतत्पराः युक्ता युक्तिकुशलाः आयुक्ता स्तदर्थानुष्ठाननिरताः अरुक्षा क्रोधादिवर्ज्जिताः धर्म्मकामा जीवन्मुक्तवत् कर्म्मण्योदासीन्यमकुर्व्वाणा-इत्यर्थः। अतोदशमीविद्धानिन्दावचनान्यविशेषाद्दशम्य-निर्मुक्तायामपि। यथा स्कन्दपुराणं, दशम्यैकादशी

सति यो वेधः स वेधः सर्व्वदा दुष्ट इत्यर्थः। ये देवा उपास्याइति शेषः। द्विजाः उत्तमत्वेन प्रसिद्धा यत्तोयं शुद्धत्वेन शिष्टैर्व्यवह्रियमाणं यत्रसैवमृत्तिकेत्यन्वयः। तत्तत्कर्म्मणि नियोज्यमानाः। तत्रदेशे सैव-देवादिविततिः प्रयोक्तव्या उपादेयास्तेषु देवादिषु कृत्यं पूजा-दिकं (७०)।

अनृषेः ऋषिभिन्नस्य ऋषिर्ज्ञानार्थः तेनासर्व्वज्ञस्येत्यर्थः। अप्रतिष्ठः अनवस्थादुःस्थः तदुक्तं यत्नेनापादितोऽप्यर्थः कुशलैरनुमातृभिः। अभि-

विद्धा गान्धारी तामुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्। तथा, सुरायाविन्दुना स्पृष्टं यथा गाङ्गं जलं त्यजेत्। तथा चैकादशीं रम्यां दशम्या दूषितां त्यजेत्। ये कारयन्ति कुर्व्वन्ति दशम्यैकादशींयुतां। आलोक्य तन्मुखं ब्रह्मन् सूर्य्य-दर्शनमाचरेत्। यैः कृता दशमीविद्धा जड़वाक्यात्तु-मानवैः। ते गता नरकं घोरं युगानामेकविंशतिं। ब्रह्मवैवर्त्तः। दशमीशेषसंयुक्तां यः करोति विमुढधीः। एकादशीफलं तस्य नश्येद्द्वादशवार्षिकं (७१)।

तत्र संक्षेपः। पारणदिने द्वादशीलाभे सर्व्वएव पूर्णां त्यक्त्वा खण्डामुपवसेत्। तदलाभे गृही पूर्व्वां. तदन्यः परां विधवापि। यदा तु पूर्व्वदिने दशम्या उत्तरदिने द्वादश्या युतैकादशी तदोत्तरामुपोष्य द्वादश्यां

युक्ततरैरन्यैरन्यथै वोपपद्यते, इति। मतंदर्शनं संहिता न्यायादिशास्त्रं तदपि विभिन्नमितिशेषः क्वचित् परस्परविरुद्धार्थकमितितदर्थः। निहितं गुहायां गुहायां निहितमिव उच्छन्न-प्रच्छन्न-श्रुतिषु स्थितमित्यर्थः। शिवे शिवेच, शिष्टेषु आचारेषु प्रामाण्यातिशयबुद्धिः प्रमाणसिद्धत्वाव-धारणं बहुभिर्ग्टहीतत्वादिनेति शेषः। तादृशस्याचारस्येत्यभेदान्वयः। यद्वाशिष्टेषु भ्रमप्रमादादिशून्यतया प्रथितेषु प्रामाण्यं प्रमात्वं कर्त्तरि ष्युट्। प्रमाश्रयत्वं प्रमा च शास्त्रतत्त्वादिविषयिका। तादृशस्य जनस्य य आचारस्तस्येत्यर्थः। ते तव विचिकित्सा संशयः स्यादिति तदेतिशेषः यत्र यस्मिन काले देशेचेत्यर्थः। जीवन्मुक्तवदितिव्यतिरेके दृष्टान्तः। तथाच जीवन्मुक्ता यथोदासीनास्तथान्येत्यर्थः। दशम्यनिर्मुक्ताया-मपि (७१)।

अत्रेदमवधेयं। उपोष्य द्वेतिथीतत्रेति द्वेतिथी एकादशीद्वादश्यौ उभययुक्तदिनमितियावत् एकादशी द्वादशी च तत्सन्निहितोहरिः।

पारणं कुर्य्यात्। परदिने द्वादश्यनिर्गमे त्रयोदश्यामपीति। यदा सूर्य्योदयानन्तरं दशमीयुतैकादशी अथच परदिने न निःसरति तदा तां विहाय द्वादशीमुपवसेत्। यदा तु सूर्य्योदयात् प्राक्कालीनदशमीविद्धैकादशी परदिने च न निःसरति तदा तामुपवसेत्। यदा तु तथाविधा सती परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय खण्डामुपोष्य द्वादश्यां पारयेत्। यदा तूभयदिने तद्विधैकादशी परदिने च न द्वादशी तदा षष्टिदण्डात्मिकां विद्धामुपोष्य परदिने द्वादश्याः प्रथमपादमुत्तीर्य्य पारयेत् वैष्णवस्त्वपि शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेदिति। सर्व्वस्यां कृष्णैकादश्यां वैष्णवानां सपुत्राणां गृहस्थानामप्युपवासो-नित्यः। ब्राह्मणस्य तु विशेषतोनित्यः। वैष्णवेतरेषां तादृशाणां हरिशयनमध्यवर्त्तिनीषु कृष्णैकादशीषूपवासो-नित्यः। अपुत्रवतां गृहिणान्तु सर्व्वास्वेव नित्याधिकारः। काम्योपवासे तु अविशेषेणैव सर्व्वेषामधिकारः। नित्योपवासे रविशुक्रादिदोषोनास्ति। अष्टाब्दाधिकापूर्णाशीति-वत्सरो मानवो नित्याधिकारी। विधवायास्तु सर्व्वा-

उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहतीति विष्णुपुराणवचनैकवाक्यत्वात् अत्र विष्णुप्रीणनतत्परइति श्रवणात् द्वादश्यां पारणालाभे पूर्व्वैव परिगृह्यते इतिवचनं पूर्व्वामुपवसेद्गृहीति वचनञ्चावैष्णवपरं त्रिस्पृशैकादशी यत्र तत्र सन्निहितोहरिः। तामेवोपवसेत्मर्त्त्यः सकामोविष्णुतत्-परइति कूर्म्मपुराणवचनस्यापि द्वेतिथी एकादशीद्वादश्यौस्पृशतः यद्दिनं तद्दिनस्पृक् तद्दिनवृत्तिरेकादशीतियावत्। यथा त्रिस्पृक्शब्देन तिथित्रय-युक्तदिनवृत्तिरेकादशी लभ्यते तथाच पूर्व्वापरदिवसीयखण्डतिथिपरत्वं

तथैवै-
ष्णव नित्याधिकारः। अत्र मलमासादिदोषोनास्ति,

तथा पद्मपुराणे। द्वादशीमिश्रितायाह्या सर्व्वत्रैकादशीतिथिः। द्वादशी च त्रयोदश्यां विद्यते यदिवा न वेति। तथा, एकादशीकलाप्येका द्वादशी यत्र लुप्यते। तत्रोपवासं कुर्व्वीत निष्कामो विष्णुतत्पर इति हेमाद्रि-धृतवचनञ्च। नचैतद्वचनं पूर्व्वदिने एकादश्या दशमीविद्धत्वे तत्पर-मिति वाच्यं तन्मात्रपरत्वे प्रमाणाभावात् वृद्धौ त्याज्या वेधहीनेत्यादि वचनाच्च एवं वैष्णवानां एकादशीद्वादश्योस्तुल्यत्वेन तदुभययुक्तदिनस्य कदाचिदपि न त्याज्यता। यथाचैकादशी राजन् द्वादशीच तथानृणा-मित्यादिवचनात्। पूर्व्वापरदिवसीयैकादशीयुक्तद्वादश्याउन्मीलनीत्वेन त्रिस्पृशात्वेन वा वैष्णवानामावश्यकत्वाच्च तत्रोन्मीलनीलक्षणं प्राग्दर्शितं। त्रिस्पृशालक्षणञ्च यथा वैष्णवामृते पद्मपुराणे जाह्नवीं प्रति भगवद्वाक्यं। एकादशी द्वादशीच रात्रिशेषे त्रयोदशी। त्रिस्पृशा सा हि विज्ञेया दशमीसंयुता नहीति। दशमीसंयुता त्रिस्पृशा तत्रैव जाह्नवीप्रश्ने यथा, दशम्येकादशी भद्रा दिनैकस्मिन् यदाभवेत्। त्रिस्पृशा संभवेद्देव कान्या वा वद मे प्रभो। अत्र माधवस्योत्तरं। आसुरीन्नितं [illegible] देवि सा त्वया परिकीर्त्तिता। वर्ज्जनीया प्रयत्नेन यथा शूद्रीपतिर्द्विजः। तथा [illegible] वृद्धौ त्याज्या वेधहीना श्रवणादियुता तथा। उपोष्या द्वादशी भद्रा नोपोष्यैकादशी मता। पक्षवृद्धौ विशेषेण सन्देहे समुपस्थिते। ममाज्ञया प्रकर्त्तव्यं द्वादशीवल्लभा मम। ममाज्ञयाप्रकर्त्तव्यं मद्दिनं मत्परायणैः। मद्दिनं तद्विजानीयाद्दशमीवेधवर्ज्जितमिति। कूर्म्मपुराणेच। एकादशी कलाप्येका परतोऽपि न वर्द्धते। गृहिभिः पुत्त्रवद्भिश्च सैवोपोष्या सदा तिथिरिति। यस्तः परतिथिर्द्वादशीत्यर्थः सैव कलारूपैव। अत्र गृहि-पदं वैष्णवपरं वृद्धौ एकादशीमात्रस्य वा पक्षवृद्धौ तदुभयवृद्धौ। पक्षस्य पक्षान्तदिनपौर्णमास्यमावास्यान्यतरतिथिवृद्धाविति हेमाद्रिहरिभक्तिवि-लासादयः। स्कान्दे। एकादशी क्षयोणाच्च द्वादशी चक्षयं [illegible]। तत्कथं द्वादशीनाम नोपोष्या क्रियते जनैः। हेमाद्रौ पद्मपुराणं। बहुवाक्यविरोधेन सन्देहोजायते यदा। द्वादशीतु तदायाह्या त्रयो-दश्यान्तु पारणं। तथा विवादेषु च सर्व्वेषु द्वादश्यां समुपोषणं। पारणञ्च त्रयोदश्यामाज्ञेयं मामकी मुने। एवञ्च कुर्य्यादलाभे संयुक्तेति यदुक्तं

प्रथा," ज्योतिःपराशरः, अनादि देवताद्वीसु काल-

तदपि वैष्णवेतरपरं तथाच भविष्ये। दशमीशेषसंयुक्तो यदिस्यादरुणो-दयः। वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतमिति। एकादशीमुपवसेदि-त्यादि सर्व्वसाधारणव्यवस्थां निरूप्य कुर्य्यादलाभ इत्यादिकं वैष्णवेतरपरं वचनमुक्त्वा कूर्म्मपुराणे वैष्णवपरतया द्विस्पृशैकादशीयत्रेत्यादिकमुक्तं तथा अवैष्णवेन परदिने एकादश्यलाभेऽरुणोदयविद्धोपोष्येत्युक्तं यदि चैकादशी परदिने निःसरति तत्परदिने च द्वादशी न निःसरति तत्रापिवैष्णवेन विद्धाग्राह्या विद्धाप्येकादशी ग्राह्यापरतोद्वादशी न चेदित्यादिवचनात् विद्धाऽरुणोदयविद्धा यदि च परदिने द्वादशी निःसरति तदाप्यवैष्णवेन कृष्णपक्षेऽरुणोदयविद्धैवोपोष्या शुक्लपक्षे परोपोष्या न च कृष्णपक्षेऽवैष्णव-गृहिणामुपवासनिषेधात् कथमेतदितिवाच्यं शयनी वोधनी मध्ये तेषा-मप्यधिकारादिति। एकादशीं दशायुक्तां वर्द्धमाने विवर्जयेत्। पञ्च-ह्यानीस्थिते सोमेलङ्घयेद्दशमीयुतामितिवचनात्। लङ्घयेत् उपवसेत् दशमीयुतामरुणोदयविद्धां सूर्य्योदयविद्धाच सर्व्वैरेव सर्व्वदा त्याज्येति वैष्णवानामरु ब्राह्मिनापि सर्व्वदा त्याज्येति। यदाच सूर्य्योदय ...मुहूर्तद्वय ... ताऽहोरात्रव्यापिनी परदिने न निःसरति द्वादश्यपि न ...त् परदिने तत्रैव केवलैकादशी वैष्णवेनोपोष्या तथाऽवैष्णवेन तादृशी ...युक्ता पौत्यरि ...येणोक्तं एकादशीमुपवसेदिति। यदिचैकादशी संपूर्णा न निःसरति द्वादशीव तत्परदिने निःसरति तदा वैष्णवेन शुद्धा द्वादशीग्राह्या, तथोक्तं, संपूर्णैकादशी यत्र द्वादशी च तदाभवेत् त्रयोदश्यां मुहूर्त्तार्द्धं वञ्जुली सा हरेः प्रिया। शुक्लपक्षे तथाकृष्णे यदाभवति वञ्जुली। एकादशीदिने भुक्त्वा द्वादश्यां कारयेद्व्रतमिति। अत्र संपूर्णा संपूर्णापीत्यर्थः तेन पूर्व्वदिने दशमीविद्धैकादशी परदिने शुद्धद्वादशी तत्परदिने च निःसरति तदापि वञ्जुलीति यदिचाविद्धैका-दशी ... रात्रौ द्वादशी भूत्वा तत्परदिने षष्टिदण्डात्मिका तत्परदिनेच नि...सरि यत्र तत्रादशीमिश्रत्वादेकादश्युपोष्येति विष्णुरहस्यवचनस्य पूर्णा-खण्डस्थिताभिप्रायेण। विष्णुरहस्यकर्त्तुरनृषित्वेऽपि वौधायनस्मार्दि-त्वेन प्रामाणिकत्वमास्थेयं। वैष्णवामृतेजयादिद्वादशीमाहात्म्यं यथा। यस्याष्टौ कलिकालेतु कर्म्मणा मनसा गिरा। हृदयान्नापसर्पन्ति

दोषो न विद्यते। नित्याखभ्यामयोगेन तथैवै-
कादशीव्रते (७२)।

अथ दशमीनियमाः। सूरिसन्तोषे। कांस्यं मांसं मसूरञ्च चणकं कोरदूषकं। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियं। अत्रोपवसन्निति तद्दिने भोजनासम्भवात् सामीप्यात् पूर्व्वापरदिनयोर्ग्रहणं। स्मृतिः, शाकं मांसं मसूरञ्च पुनर्भोजनमैथुने। द्यूत मत्यम्बु-

धन्योऽसौ वैष्णवः प्रिये। जया जयं प्रकुरुते विजयाच महाजया। जयन्ती नाशयेच्छत्रून् पापं पापप्रणाशिनी। उन्मीलनी हरेत्पापं जन्मकोटिशतोद्भवं। यच्छते वञ्जुली मोक्षं त्रिस्पृशापक्षवर्द्धिनी। जयाच विजयाचैव जयन्ती पापनाशिनी। महापुण्यप्रदाह्येताः प्रातरुत्थायकीर्त्तिताः। उन्मीलनी वञ्जुलीच त्रिस्पृशा पक्षवर्द्धिनी। वाञ्छितार्थप्रदा नित्यं प्रातरुत्थायकीर्त्तिताः। तथा, यस्य प्राणप्रिया नित्यं द्वादश्योऽष्टौ कलौयुगे। कल्पान्तं स्वपितॄणान्तु दत्तं तेन हरेःपदं। ये न जानन्ति सर्व्वत्र द्वादश्यष्टौकलौयुगे। कल्पान्तं स्वपितॄणान्तु दत्तं तैर्नारकं पदमिति भगवतीं प्रति रुद्रवाक्यं। तत्रैवान्यत्र, प्रीताः पितामहास्तेषां यावदाहुतसंप्लवं। उन्मीलनीवञ्जुलीच यैः कृतापक्षवर्द्धिनी। त्रिस्पृशाच विशेषेण जयन्ती विजया जया। पापघ्नी दैत्यशार्दूल यैः कृता व्रतसंयुता। अभीष्टा द्वादशीह्येषा प्राणदापिगरीयसी। ये न कुर्व्वन्ति पापिष्ठाः कल्पान्तं नारका हि ते। दशमीविद्धाप्रवचनानि शुक्र-मायाकृतान्यासुराणि यथा वैष्णवामृते स्कन्दपुराणे। येषां कलौ न तुष्टोऽहंसशल्यं वासरं मम। ते कुर्व्वन्ति न सन्देहः शुक्रमाया विमोहिताः। तत्रैवान्यत्र। एकादशीं यदा विद्धां कुरुते पद्मलोचने। मन्येऽसौ कलिकालेतु दैत्यपक्षविवर्द्धनः (७२)।

अथ दशमी नियमादिति। कांस्यं कांस्यपात्रभोजनं प्रवासं प्रकर्षेणवासयति सुगन्ध्यनुलेपनानि यद्वा प्रकर्षेण वसत्यस्मिन् प्रकृष्ट शयनीयादि सुखवासंवा। सर्व्वथैव भगवद्भाजनानुष्ठानपरेण भवितव्यमिति-

पानञ्च दशम्यां वैष्णवस्त्यजेत् । कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणं । व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनं । तिलपिष्टं मसूरञ्च दशम्यां वर्ज्जयेत् पुमान् । दशम्यामेकभक्तञ्च कुर्व्वीत नियतेन्द्रियः । आचम्य दन्तकाष्ठञ्च खादेत तदनन्तरं । पूर्व्वं हरिदिनाल्लोकाः सेवध्वं चैकभोजनं । अवनीपृष्ठशयनाः स्त्रियाः सङ्गविवर्ज्जिताः । सेवध्वं देवदेवेशं पुराणं पुरुषोत्तमं । सकृद्भोजनसंयुक्ता द्वादश्याञ्च भविष्यथ । अत्र सकृद्भोजनपदं, मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यं । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तरिति छन्दोगपरिशिष्टोक्तभोजनद्वयस्यैकमात्राचरणं न तु सकृदेव द्रवस्य गलाधःकरणं विवृतमेतत् प्रायश्चित्त तत्त्वे । अत्र वैष्णवग्रहणं तस्यातिशयदोषार्थं (७३) ।

अथैकादशीनियमाः । प्रातरुत्थायैकादश्यां वाह्या-

भावः । तिलपिष्टमित्यत्रशिलापिष्टमितिक्वचित् पाठः । एक भक्तं एक भोजनं पूर्व्वोक्तस्मृतिवचने पुनर्भोजननिषेधात् सायमाद्यन्तयोरह्नो रित्युक्तोपवासाङ्गत्वाच्च न तु दिनार्द्धसमयेऽतीते भुज्यतेनियमेन यत् । एकभक्तमिति प्रोक्तं रात्रौतन्नकदाचनेति स्कान्दवचनोक्तैकभक्तपरमिति सम्वत्सरप्रदीपव्याख्यानमादरणीयं । परवचनेऽपि सामान्यतएकभोजनविधानात् एकभोजनादिपदस्य पारिभाषिकत्वाभावात् अतएव नित्यैकादश्युपवासे भोजनद्वय निवृत्तिकर्त्तेति । एतदेकभोजनस्य भोजनचतुष्टय निवृत्तिरूपोपवासाङ्गत्वाभिप्रायेणोक्तत्वादिति ( ७३ ) ।

अथैकादशी नियमाइति, कथ्यन्तेइति शेषः । जपन्जनःस्नातः समुपविष्टः कृष्णस्य नामसहस्राणि प्रकीर्त्तयेत् तथाक्षुतप्रस्खलनादिषु जातेषु

भ्यन्तरशौचं कुर्य्यात्। तत्प्रकारस्तु। उपविष्टोजपन् स्नातः चुतप्रस्खलितादिषु। पूजायां नाम कृष्णस्य सप्तवारान् प्रकीर्त्तयेत्। पाषण्डिनोविकर्म्मस्थान्नालपेच्चैव नास्तिकान्। संभाष्य तान् शुचिपदं चिन्तयेदच्युतं वुधः। इदञ्चोदाहरेत् सम्यक् कृत्वा तत्प्रवणं मनः। शरीरमन्तःकरणोपजातं वाह्यञ्च विष्णुर्भगवानशेषं शमं नयत्वस्तु ममेह शर्म्म योगादनन्ते हृदि सन्निविष्टे। अन्तःशुद्धिं वहिः शुद्धिं शुद्धोधर्म्ममयोऽच्युतः। स करोतु ममैतस्मिन् शुचिरेवास्मि सर्व्वदा।

तथापूजायां कर्तव्यायां कृष्णस्य नाम सप्तवारान् प्रकीर्त्तयेदित्यनुषङ्गेणान्वयः। पाषण्डिनः वेदादिशास्त्रवहिर्मुखान् नास्तिकान् धर्म्मकार्य्येषु नास्तीति वुद्धीन्। शुचि शोधकंपदं नामोच्चारणस्वरूपञ्च यस्य तं। तत्प्रवणं अच्युतनिविष्टं। वाह्यञ्चेति अशौचमितिशेषः वाह्यं पाषण्डालापादिनिवन्धनं अशेषो विश्वात्मा शमं नाशं। शर्म्म इष्टं योगात् कर्म्मयोगात् हृदिसंनिविष्टे सति। एतदिति मन्त्रद्वयमितिशेषः। उपोषितैरित्युपलक्षणं उपोषितैः आरब्धोपवासैः उपलक्षणत्वं स्फुटयति नियमस्थैरिति। पाषण्डादीन् संभाष्येत्युपलक्षणं नियमान्तर भङ्गेऽपीदं पाठ्यं। ननु मन्त्रप्रकाशितफलस्यावश्यंभावित्वात् कथं मुमुक्षोः कर्तव्यतेत्यत आह तथाहीति। एतत्साधनकर्म्मणः वाह्याभ्यन्तरीण शौचद्वारोपवासादिसाधनमन्त्रपाठरूपकर्म्मण स्तत्साधनताया आनुषङ्गिक कर्म्मसाधनतायाः सिद्धिर्निश्चयः। लिङ्गन्तु न तत्र साक्षात् प्रमाणमिति। अत्र कर्म्मणः फलेच्छावोधकमन्त्रपाठत्वं न मन्त्रपाठस्य फलसाधनतासाधकं यदा कदाचित् पठिते व्यभिचारात्। वैदिकतादृशमन्त्रपाठत्वमपि न फलसाधनताप्रमापकं वैदिकक्रियायाः विधिवोधितस्यैवालौकिकफलस्य जनकत्वनियमात् तादृशमन्त्रपाठे विधिना तत्फलजनकत्वावोधने लिङ्गेन तत्फलजनकत्वस्य वोधयितुमशक्यत्वात् तत्फलजनकत्वेन विधिवोधितत्वाभाव वोधस्य वाधकत्वादितिभावः। किन्त्वितदिति

वाह्योऽजातनिरयान्नैद्रांश्च भगवानजः। शमं नयत्वन्न-न्तात्मा विष्णुश्चेतसि संस्थितः। एतत् सम्भाष्य जप्तव्यं पाषण्डादीनुपोषितैः। उपोषितैर्नियमस्थितैः। एते च मन्त्राः शर्म्मफलकामनारहितेनापि मुमुक्षुणा जप्तव्याः। अविशेषेण विधानात्। यथा योऽस्मान् द्वेष्टि यञ्चवयं द्विष्म, इति मन्त्रोद्देषाभावेऽपि स्यादिति निर्णीतं। तथाहि मन्त्रस्य शर्म्मसाधनताप्रकाशसामर्थ्यलक्षणलिङ्गं नैवतत्-साधनकर्म्मणस्तत्साधनतासिद्धिर्व्यक्ताव्या लिङ्गन्तु न तत्र साक्षात्प्रमाणं किन्त्वेतत्काममिदं कुर्य्यादितिश्रुत्यनु-मापकतयैव, तत्र त्विष्टसाधनतापरेण विधिप्रत्ययेनेष्टमेव शर्म्म तद्भाव्य मिति प्रतिपादनादनिष्टस्य कुतोभाव्यता। यथा स्वर्गादिसाधनस्याग्निहोत्रादेर्मुमुक्षुं प्रति न तज्जन कत्वमिति। ततश्च प्रातः सङ्कल्पं कुर्य्यात् तद्विधानं वराहपुराणे। गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयाद्यद्वा वार्य्येव धारयेत्। एकादश्यां

अयं मन्त्र एतत्फलसाधनतया विधिवोधित एतत्फलसाधनताप्रकाशक-वैदिकमन्त्रत्वादित्यनुमानद्वारा लिङ्गं तत्प्रमापकमित्यर्थः। यो यत्फल-साधनता-प्रकाशकवैदिकमन्त्रः स तत्फलसाधनतया वेदवोधितः। यथा शारीरत्यादिरयं मन्त्रः शौचसाधनताप्रकाशकः शौचसाधनत्वेन विधिवोधितश्चेति सामान्यतो व्याप्तिसत्त्वादितिभावः। अत्र तादृशविधिं प्रदर्शयति एतत्काम एतत्कुर्य्यादितीति इति इत्यस्य इष्टमेव इच्छा विषयीभूतमेव एतद्भाव्यमेतत्कर्म्मणा भाव्यमुत्पाद्यमितिप्रतिपादनात् अनिष्टस्यानीप्सितस्य न तज्जनकतेति। तथा च कामनाविषयस्यैव तत्तत्कर्म्मणा जननात् मुमुक्षोः कामनाविरहेण न तत्कर्म्मणा तत्फल-मिति। न च शमं नयत्वस्तु ममेह शर्म्मेति मन्त्रस्य शर्म्मप्रार्थना-

निराहारोभूत्वा चैवापरेऽहनि। भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत, इत्युच्चार्य्य ततोविद्वान् पुष्पाञ्जलिमथार्पयेत्। इत्युत्तरार्द्धमधिकं विष्णुनोक्तं ततस्तत्पात्रस्थजलं किञ्चित् पिबेत् आचमनजलपानवन्नात्र दूषणं। यथा स्कान्दे। रात्रिं नयेत्ततः पश्चात् प्रातःस्नायी समाहितः। उपवासन्तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत्। मन्त्रस्तु कात्यायनेनोक्तः कालमाधवीये। अष्टाक्षरेण मन्त्रेण त्रिर्जपेनाभिमन्त्रितं। उपवासफलं प्रेप्सुः पिबेत् पात्रगतं जलं। अष्टाक्षरेण नारायणमन्त्रेण। ततः प्रार्थयेत्। इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्व्विघ्नां सिद्धिमाप्नोतु त्वत्प्रसादाज्जनार्द्दन। ततो विष्णुपूजनं। तथाच ब्रह्मपुराणं। एकादश्यामुभे पक्षे निराहारः समाहितः। स्नात्वा

रूपत्वेन कथं शर्म्मेच्छारहितमुमुक्षोः पाठइतिवाच्यं इच्छाप्रत्यचं प्रत्येव इच्छायाः हेतुत्वात् इच्छांविनाऽपि यथाकथञ्चिदिच्छाज्ञानेन इच्छा बोधकशब्दप्रयोगस्य तदधीनशाब्दबोधस्य च सम्भवात्। फलेच्छां विनापि तादृशफलेच्छाबोधकमन्त्रस्य वेदबोधितक्रियाङ्गतयैव मुमुक्षुणा पाठः क्रियते। न चाकाङ्क्षितफलस्याजनकत्वेन तत्तत् कर्म्मणि कथं मुमुक्षोः प्रवृत्तिरितिवाच्यं तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादि श्रुत्या तत्तत्फलकामनां विना कृतवैदिकक्रियामात्रस्य मोक्षसाधनपरमेश्वरतत्त्वज्ञानजनकत्वश्रवणात्। अत्र च मन्त्रे अनन्ते हृदि संनिविष्टे इत्यत्तेन भगवति मनोयोगस्यापि साध्यतयावगमात्तदिच्छयापि प्रवृत्तिसम्भवात् भगवति मनोयोगस्य च मुमुक्षोरभीष्टत्वादितिदिक्। प्रातरिति प्रातःसन्ध्यां ततः कृत्वा संकल्पं बुध आचरेत्। ओंडु स्वरं तान्मयं। यद्वेति पात्राभावे भोक्ष्येऽहमिति भोजनं पारणरूपं तच्च यत् किञ्चिज्जलपानेनापि भवति अर्पणं विष्णवे। तत्पात्रे जलमिति

सम्यग्विधानेन धौतवासाजितेन्द्रियः। संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः। पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैःपरैः। उपचारैर्बहुविधैर्जपहोमप्रदक्षिणैः स्तोत्रैर्नानाविधैर्द्दिव्यै र्गीतवाद्यमनोहरैः। दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः। संपूज्य विधिवद्रात्रौ कृत्वा चैव प्रजागरं। कथाद्या गीतिकाविष्णोर्गायन् विष्णुपरायणः। याति विष्णोः परं स्थानं नरोनास्त्यत्र संशयः। उपचारैर्व्वहुविधैः षट्त्रिंशदुपचारादिभिः ( ७४ )।

अथ विष्णुपूजनविधिः। यमदग्निः। चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः। उपासकानां कार्य्यार्थं ब्रह्मणोरूपकल्पना। रूपस्थानां देवतानां पुंस्त्र्यंशादिकल्पना। तथा चाधिकारिणमाह विष्णुपुराणं। वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णुराराध्यते पन्था नान्यत्तत्तोषकारणं। मत्स्यपुराणं। आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्। ज्ञानञ्च शङ्करा-

नारायणमन्त्रेण ॐ नमो नारायणायेति मन्त्रेण। सिद्धिं संपूर्णतां। द्रव्यैश्चामरव्यजनादिभिः। तथा सम्वत्सरप्रदीपे। श्रीहरेर्जागरे पुण्ये ये न नृत्यन्ति मानवाः। तेऽन्यत्र जन्मनि नरा जायन्ते पङ्गवः सदा। ये न गायन्ति देवस्य जागरे वनमालिनः। तेन कर्म्मविपाकेन मूकत्वं यान्ति ते नरा इति ( ७४ )।

चिन्मयस्य ज्ञानस्वरूपस्य, अद्वितीयस्य सजातीयविजातीयद्वितीयरहितस्य, निष्कलस्य निर्गुणस्य। रूपं शरीरं तस्य कल्पना वेद इति शेषः। अंशो विभेद. आदिना अङ्गदेवता शस्त्रायुधादिपरिग्रहः। यद्वा चिन्मयस्य नित्यसर्व्वविषयकज्ञानवतः प्राचूर्य्ये मयट्प्रत्ययविधानात् निष्कलस्य क्रियारहितस्य अथवा निष्कलस्य संख्यातीतगुणस्य कलत्क

दिच्छेन्मुक्तिमिच्छेज्जनार्द्दनात्। अपि स्यात् स कुलेऽस्माकं सर्व्वभावेन योहरिं। प्रययौ शरणं विष्णुं प्रजेशं मधुसूदनं। आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरूक्षणे। सम्मार्ज्जनं सर्पिरादिस्नपनावाहने तथा। पाद्यार्घाचमनीयञ्च स्नानीयमधुपर्ककौ। पुनराचमनीयञ्च वस्त्रयज्ञोपवीतकं। अलङ्कारोगन्धपुष्पे धूपदीपौ तथैव च। ताम्बूलादिकनैवेद्यं पुष्पमाला तथैव च। अनुलेपश्च शय्या च चामरव्यजनन्तथा। आदर्शदर्शनञ्चैव नमस्कारोऽथ नर्त्तनं। गीतवाद्ये च दानानि स्तुतिहोमप्रदक्षिणं। दन्तकाष्ठप्रदानञ्च ततोदेवविसर्ज्जनं। उपचाराइमे ज्ञेयाः षट्त्रिंशत् सुरपूजने। वाद्यं विशेषयति योगिनीतन्त्रे, पूजाकाले सदा विष्णोर्डिण्डिमं न प्रवादयेत्। देवस्य स्वत्वानुत्पादनाद्दानपदं गौणं पूजादक्षिणादितद्धर्म्म प्राप्त्यर्थं। षोड़शोपचारादीनाह प्रपञ्चसारे, आसनं स्वागतं पाद्यमर्घमाचमनीयकं। मधुपर्काचमनस्नानवसनाभरणानि च। सुगन्धिसुमनोधूपदीपनैवेद्यवन्दनं। प्रयोजयेदर्च्चनायामुपचारांश्च षोड़श। अर्घपाद्याचमनकमधुपर्काचमनान्यपि। गन्धादयोनैवेद्यान्ताउपचारादश क्रमात्। गन्धादयोनैवेद्यान्ताः पूजाः पञ्चोपचारिकाः। उपचारैर्यथाशक्ति देवतामन्वहं यजेत्। ब्रह्मपुराणे,

स्थाने इत्यनुशासनात्। अशरीरिणो देहदेहिविभागरहितस्य नित्यानन्तशरीरात्मकस्येति यावत्। रूपकल्पना रूपाविष्करणं। अन्यत् आराधनादन्यत्, अभ्यञ्जनमभ्यङ्गः, संमार्ज्जनं सूक्ष्मवस्त्रेण। सर्पिरादीति सामस्त्यार्थकं। स्नानीयमधुपर्ककौ मधुपर्कस्नाने। होमस्योपचारत्वं

ओङ्कारादिसमायुक्तं नमस्कारान्तकीर्त्तितं। स्वनाम सर्व्वसत्वानां मन्त्वइत्यभिधीयते। अनेनैव विधानेन गन्धपुष्पे निवेदयेत्। गन्धपुष्पमात्रं पञ्चोपचारासम्भवे। मन्त्रनिर्णये, मन्त्रपाशेन देवेशि देवता नीयते ध्रुवं। साधकस्य विना कार्य्यसिद्धिं कृत्वा न गच्छति। ब्रह्मपुराणं, देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत्। पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिः। अष्टोत्तरशतपलं स्नाने देयञ्च सर्व्वदा। अत्र, पञ्चकृष्णलको-माषस्ते सुवर्णस्तु षोड़श। पलं सुवर्णाश्चत्वारइति मनूक्तमष्टरत्तिकाधिकलौकिकमाषद्वयाधिकतोलकत्रयेण पलं भवति। तत्पञ्चविंशत्या अष्टरत्तिकाधिकलौकिक-माषद्वयाधिकत्र्यशीतितोलकानि भवन्ति। एवं तथा-विधाष्टोत्तरपलशतेन लौकिकषष्ट्याधिकशतत्रयतोलकानि भवन्ति। उद्वर्त्तननिरूपणे आह नरसिंहपुराणं, यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा। प्रक्षाल्य देव-देवेशं वारुणं लोकमाप्नुयात्। पादपीठन्तु योदद्या-द्विल्वपत्रैर्निघर्षयेत्। उष्णाम्बुना च प्रक्षाल्य सर्व्वपापैः प्रमुच्यते। शारदायां। गन्धपुष्पाक्षतयवकुशाग्रफल-सर्षपैः। सदूर्व्वैः सर्व्वदेवानामर्घ्यमेतदुदीरितं। आह-रन्तीत्युपक्रम्य कात्यायनः। मधुपर्कं दधिमधुघृतमपिहितं

घृतसमर्पणरूपलेन। दन्तकाष्ठप्रदानं नैवेद्यदानानन्तरं यथा गौतमीये, नैवेद्यजातमुद्धृत्य स्थानशुद्धिं विधाय च। आचमनजलं दद्याद्दन्त-शोधनमेव च। हस्तलेपं ततोदत्त्वा पुनः पानीयमर्पयेत्। सूक्ष्मवस्त्र-युगन्दत्वा दद्याच्च स्वर्णपादुकं। पूजास्थानं समानीय रत्नमालां निवे

कांस्ये कांस्यमिति। अपिहितमाच्छादितं। होमसङ्ख्यामाह देवीपुराणं, होमोग्रहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते। होम द्रव्यमाह कात्यायनः, आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। नरसिंहपुराणं, दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्ततां। सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः। अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते। कालिकापुराणं, यद्दीयते च देवेभ्योगन्धपुष्पादिकं तथा। सर्व्वत्राब्स्थितैस्तोयैरभिषिच्य तदुत्सृजेत्। शारदायां, तत्र तत्र जलं दद्यादुपचारान्तरान्तरे। नरसिंहपुराणं, स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकं। भविष्यदेवीपुराणयोः, शुचिः सुवस्त्रधृक् प्राज्ञोमौनी ध्यानपरायणः। शतकामभयद्वन्द्वोरागमात्सर्य्यवर्ज्जितः। आत्मानं पूजयित्वा च सुगन्धिसितवाससा। सुमुहूर्त्ते यजेद्देवान् स्वकीयासनसंस्थितान्। सुमुहूर्त्ते पूर्व्वाह्णादिकाले। स्मृतिः, मृत्कुम्भात्ताम्रकुम्भेश्च स्नानं दशगुणं स्मृतं। रूप्यैः शतगुणं प्रोक्तं हैमैः कोटिगुणं स्मृतं।

दद्यात्। दिव्यगन्धं ततोदद्यात्ताम्बूलं शशिसंयुतं। स्तोत्रैः स्तुत्वा च विधिवत् कुर्य्यात् प्रदक्षिणं हरिमिति। दानपदं गौणमिति, देवोद्देश्यकत्यागएवात्र दानपदार्थः। तत्र स्वस्वत्वध्वंसमात्मस्याद्गौणी लक्षणा। पूजेति देयद्रव्यपूजेत्यर्थः, तद्धर्म्मप्राप्त्यर्थमिति, देवे दत्त्वा च दानानीत्यादि वचनात्। इदञ्च परस्वत्वहेतुत्याग एव दानपदार्थइति मते, परस्वत्वोद्देश्यकत्यागस्य दानपदार्थत्वे मुख्यमेव दानमत्र बोध्यं। देवाय दद्यादित्यत्र चतुर्थ्यानिष्पन्नमर्थं। तस्य च उद्देश्यताख्यविषयताया मन्वयः।

एवमर्घेषु नैवेद्यबलिपूजादिषु क्रमात्। पात्रान्तर-विशेषेण फलञ्चैवोत्तरोत्तरं। विभवे सति यो मोहान्न कुर्य्याद्विधिविस्तरं। नैतत् फलमवाप्नोति देवद्रोही स उच्यते। भविष्ये, वस्वङ्गुलविहीनन्तु न पात्रं कारयेत् क्वचित्। स्मृतिः, देवानां दर्शनं पुण्यं दर्शनात् स्पर्शनं वरं। स्पर्शनादर्च्चनं श्रेष्ठं घृतस्नानमतः परं। अष्टकृत्वोमल्लजैः सुप्रभूतैः सुगन्धिभिः। प्राहुर्गङ्गा-जलैः स्नानं घृतस्नानसमं बुधाः। हयशीर्षे, चित्रस्थं पुण्डरीकाक्षं सविलासं सविभ्रमं। दृष्ट्वा प्रमुच्यते पापैर्जन्मकोटिसमुस्थितैः। तथा, अर्च्चकस्य तपो-योगादर्च्चनस्यातिशायनात्। आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति। स्वप्नेऽपि दर्शनं पुण्यवतामेव। तथाच ब्रह्मपुराणे, इन्द्रद्युम्नं प्रति भगवद्वाक्यं, मद्दर्शनमपुण्यानां स्वप्नेऽपि न हि विद्यते। त्वं पुन-र्दृढभक्तित्वात् प्रत्यक्षं दृष्टवानसि। संवत्सरप्रदीपे, केशवार्च्चा गृहे यस्य न तिष्ठति महीपते। तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं स्मृतं। अर्च्चा शालग्राम शिलादिका। नरसिंह पुराणे, तस्मादेकमनाभूत्वा यावज्जीवप्रतिज्ञया। पूजनान्नरसिंहस्य संप्राप्नोत्यभि-

स्वत्वोद्देश्यत्वञ्च स्वत्वभागितयोद्देश्यत्वं देवस्य स्वत्वानुत्पादनमपि स्वत्व-भागितया तदुद्देशा सम्भवादिति। विनेति क्लृप्तेत्यनेनान्वयस्तेन कार्य्य-सिद्धिमकृत्वेत्यर्थः। फलानीतिशृतस्येत्यर्थः। तिलसर्षपैरिति अत्र सर्षपाः श्वेताः। यथा कालिकापुराणे। गन्धपुष्पाक्षतैश्चैव सिद्धार्थैश्च-न्दनैस्तथा। तोयैर्गन्धैर्यवालम्भैरर्घ्यं दद्यात्तु सिद्धये। सिद्धार्थाः श्वेत-

वाञ्छितं। ब्रह्मपुराणे, ये पूजयन्ति तं देवं शङ्ख-चक्रगदाधरं। वाङ्मनःकर्म्मभिः सम्यक् ते यान्ति परमं पदं। विद्याकरधृतं, तर्ज्जनीद्वयसंयुक्ता हेमयुक्ता त्वनामिका। सैव युक्ता तु दर्भेण कार्य्या विप्रेण सर्व्वदा। विष्णुः, स्नातः सुप्रक्षालितपाणिपादवदनः शुचिर्व्वद्धशिखोदर्भपाणिराचान्तः प्राङ्मुख उदङ्मुखो वा उपविष्टो-ध्यानी देवताः पूजयेत्। मत्स्यसूक्ते, शस्ताः समूला-दर्भाश्च गुच्छेन चाधिकं फलं। हारीतः, मार्ज्जना-र्च्चनबलिकर्म्मभोजनानि दैवेनेति। अत्र तीर्थेनेति शेषः। वायुपुराणे, दानं प्रतिग्रहोहोमोभोजनं बलिरेव च। साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत्। एतान्येव च कर्म्माणि दानानि च विशेषतः। अन्तर्जानुविशेषेण तद्वदाचमनं नृप। साङ्गुष्ठेनेति अङ्गुष्ठसहितेन करेणेत्यर्थः। अन्तर्जानु जानुनोर्मध्ये यथा बाहुर्भवति तथा कार्य्यमित्यर्थः। अतएवाचमने गोभिलः। दक्षिणं बाहुं जान्वन्तरा कृत्वेति। यमः, इष्टं निवेदितं यद्यद्दत्तं जप्तं श्रुतं तपः। यातुधानाः प्रलुम्पन्ति शौचभ्रष्टद्विजन्मनः (७५)।

सर्षपाः। स्नानद्रव्यमाह गौतमीये। चन्द्रचन्दनकाश्मीर जलैः स्नानं-विधीयत इति। ग्रहादिपूजायामित्युपलक्षणं। जलं दद्यादिति जल-दानेनोत्सृजेदित्यर्थः। द्वन्द्वं शीतोष्णादि। पात्रान्तरविशेषे मणिमया-दिपात्रे उत्तरोत्तरं पूर्व्वं स्यादधिकं। सविलासं सानन्दं सविभ्रमं प्रमाद-रहितं। एतद्वयं क्रियाविशेषणं। बिम्बानां प्रतिमानां आभिरूप्यात् सौन्दर्य्यात्। स्वप्रान्ते स्वप्नदशायां। सैव अनामिकैव, ध्यानी देव निविष्ट-चेताः। इष्टं यागः सर्व्वत्रभावे निष्ठाप्रत्ययः (७५)।

स्मृतिः, वृषार्त्ताः पशवोऽरुद्धाः कान्यका च रजस्वला। देवता च सनिर्म्माल्या हन्ति पुण्यं पुराकृतं। गोतमः। रात्रावुदङ्मुखः कुर्य्याद्दैवकार्य्यं सदैव हि। शिवार्च्चनं सदाप्येवं शुचिः कुर्य्यादुदङ्मुखः। दानधर्म्मे विष्णुं प्रति नारदवाक्यं, अभुक्ता देवकार्य्याणि कुर्व्वते येऽविकत्थनाः। सन्तुष्टाश्च चमायुक्तास्तान्नमस्याम्यहं। विभो। अविकत्थनाश्चनात्मश्लाघाकारिणः। स्कन्दपुराणे, सर्व्ववाद्यमयी घण्टा केशवस्य सदा प्रिया। वादनाल्लभते पुण्यं यज्ञकोटि समुद्भवं। संवत्सरप्रदीपे। यस्य घण्टा गृहे नास्ति शङ्खोवा पुरतोहरेः। कथं भागवतोनाम गीयते तस्य देहिनः। तथा, सर्व्वे दोषाः प्रलीयन्ते घण्टानादे कृते हरौ। तथा, नदीतड़ागसम्भूतं वापीकूपह्रदोद्भवं। गङ्गोदकं भवेत् सर्व्वं शङ्खेनैव समुद्धृतं। वराहपुराणे, अग्रे कृत्वा तु शङ्खेन यः करोति प्रदक्षिणं। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। कल्पतरौ तु दक्षिणावर्त्ते विशेषमाह, दक्षिणावर्त्तशङ्खेन पात्रे औडुम्बरे स्थितं।

कान्यका अनूढ़ा, हरौ हरिसमीपे। गङ्गोदकं गङ्गोदकतुल्यं। प्रतीच्छेत् धारयेत्। मण्डले सर्व्वतोभद्रमण्डले, भुवनानि चतुर्द्दश इति सर्व्वेषां तत्र स्थितत्वं लक्ष्यते, तेन सर्व्वेषां देवादीनां तत्र पूजनं कर्त्तुमर्हतीति। स्कान्दे, कार्त्तिकेयं प्रति शिववाक्यं, शालग्रामशिलायान्तु यः करोति समार्च्चनं। तेनार्च्चितं कार्त्तिकेय युगानामेकसप्ततिमिति। वेदद्वारं चतुर्द्वारं स्थावरे स्थिर प्रतिमायां। विकल्पः शालग्रामे न कुर्य्यात् सैकतायां कुर्य्यात् अन्यत्र कुर्य्याद्वा नवेति स्वामिपादाः। उद्वासो विसर्ज्जनं। देवस्थापनस्य सनलचणमाह शायितेति, सांख्येन तत्त्वविचार-

उदकं यः प्रतीच्छेत्तु शिरसा हृष्टमानसः। सप्तजन्म-कृतं पापं तत्क्षणादेव नश्यति। औडुम्बरे ताम्रमये। स्कान्दे। दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्च्चयेद्धरिं। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति। पूजाधार-माह गोतमीयतन्त्रं। शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च। नित्यं पूजा हरेः कार्य्या नतु केवल-भूतले। हरिरित्युपलक्षणं। तथाच पद्मपुराणं, शाल-ग्रामशिलारूपी यत्र तिष्ठति केशवः। तत्र देवासुरायक्षा-भुवनानि चतुर्द्दश। तत्र ब्रह्मादयोदेवाइति क्वचित् पाठः। अतएवास्य दाने भूचक्रदानमप्याह तत्रैव, शालग्रामशिलाचक्रं योदद्याद्दानमुत्तमं। भूचक्रं तेन-दत्तं स्यात् सशैलवनकाननं। पूजाप्रदीपे, अनुक्त-कल्पे यन्त्रन्तु लिखेत् पद्मं दलाष्टकं। षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितं। राघवभट्टधृतं, शालग्रामे स्थावरे वा नावाहनविसर्जने। शालग्रामशिलादौ यन्नित्यं सन्निहितोहरिः। गृहे लिङ्गद्वयं नार्च्च्यं गणेश-

शास्त्रोत्थज्ञानेन, योगिनाष्टाङ्गयोगादिना। उपास्यत्वेन सेवनीयत्वेन ज्ञानं ज्ञानविशेषः। अन्यत्र शालग्रामादन्यत्र प्रतिमादौ। घृणा दया, शौचमान्तरीणं, न शौचं न व्रतानि चेत्यत्र शौचंवाह्यमिति न पौनरुक्त्यं हितानां विहितानां, पादसेवनमिति, पादपद्मं भक्त्यानिर्द्दिष्टं तेन चामर-व्यजनादि सेवामात्रं ग्राह्यं, दास्यं कर्म्मार्पणं दासाभिमानश्च, सख्यं विश्वासः। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यतीत्यादिवाक्ये तथा बोधनात्। आत्मनिवेदनं देहाद्यर्पणं विष्णौ अर्पिता सती क्रियमाणा न तु करणान्तरमर्पितेति स्वामिचरणाः। एवञ्च भक्तिर्द्विविधा क्रिया-योगात्मिका ज्ञानमयी च तत्राद्या श्रवणकीर्त्तनादिका द्वितीया स्मरणा-

द्वयमेव च। शक्तित्रयं तथा शङ्खं मत्स्यादिदश-चाङ्कितं। द्वौ शङ्खौ नार्च्चयेन्नैव शालग्रामशिलाद्वयं। द्वे चक्रे द्वारकायास्तु तथा सूर्य्यद्वयं बुधः। एतेषाम-र्च्चनान्नित्यमुद्वेगं प्राप्नुयाद्गृही। एकादशस्कन्धेऽपि, उद्वासावाहने न स्तः स्थिरायामुद्धवार्च्चने। अस्थि-रायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयं। विष्णो-रर्च्चनमुत्क्रम्य बोधायनः। प्रतिमास्थानेष्वप्स्वग्नावा-वाहनविसर्जनवर्जमिति। रत्नाकरे, स्निग्धा तु श्रीकरी नित्यं रुक्षा दारिद्रदायिका। कृष्णा भोगवती नित्यं स्थूला एकान्तदायदा। कपिला दहते पापं ब्रह्म-चर्य्येण पूजिता। दायदा धनदा। तथा, व्यत्तानना तथा भग्ना विषमा वक्रचक्रिका। नैकचक्रं न भग्नारं दद्रुणं मुखकालिमं। नृसिंहरूपिणं चक्रं नार्च्चयेच्च सदा गृही। शायिता न प्रचलते यस्मिन्देशे च संस्थिता। तस्यास्तदासनं विद्धि ततोमूर्त्तिं परीक्षयेत्।

दिरूपा सर्व्वत्रोपास्यत्वेन ज्ञानसम्वलितत्वेन मुख्यत्वं। तथोक्तं नारद-पञ्चरात्रे। सर्व्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्म्मलं। हृषीकेण हृषी-केशसेवनं भक्तिरुच्यते। उपाधिः फलकामना, तत्परत्वेन भजनीयज्ञाने-नानुकूल्येन वा। निर्म्मलं रागादिरहितं, आशयश्चित्तं, भक्त्यालोमहर्षादि-व्यङ्ग्येति। गद्गदा अव्यक्ताक्षरा, द्रवः परमानन्देन कृष्णावेशः, भुवनं पुनातीति किम्वक्तव्यं स्वाश्रयं पुनातीति, रोदनादिकं भजनानन्दावेशेनेति बोध्यं, मद्भावो मद्भावदर्शनं भावोऽन्तर्य्यामित्वेन सत्ता, यागादीनां कर्म्मभिः क्रियाभिः। तपस्वी निरतिशयपूतः। तल्लिङ्गैः पूज्यदेवताप्रकाशकैर्मन्त्रैः। नमोऽन्तइतिअन्तपदमवसानार्थकं नतु चतुर्थ्यन्तनामसमभिव्याहारपरं त्यागार्थकनमःपदस्य मन्त्रावसानएव विधानात् आदौ मन्त्रं समुच्चार्य्य

तथा, संवत्सरन्तु यः कुर्य्यात् पूजां स्पर्शनदर्शने। विना शालङ्गेन योगेन मुच्यते नात्र संशयः। भक्त्या वा यदि वाभक्त्या चक्रं पूजयते नरः। अपि चेत् सुदुराचारीमुच्यते नात्र संशयः। लिङ्गपुराणं, कामासक्तोऽपि वै नित्यं भक्तिभावविवर्जितः। शालग्रामशिलां निश्चं योऽर्च्चयेत् सोऽच्युतोभवेत्। शालग्रामशिला यत्र तत्तीर्थं योजनद्वयं। तत्र दानञ्च होमश्च सर्व्वं कोटिगुणं भवेत्। भक्तिरुपास्यत्वेन निश्चयज्ञानं। भावः श्रद्धा शास्त्रार्थे दृढ़प्रत्ययरूपा। अन्यत्र भक्तिरावश्यकी। तथाच भागवते। नालं द्विजत्वं देवत्वमृषित्वं वा सुरात्मजाः। प्रीणनाय मुकुन्दस्य न वृत्तं न वहुज्ञता। न दानं न तपोमिज्या न शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद्विड़म्वनं। वृत्तं यथा, गुरुपूजा घृणा शौचं सत्य मिन्द्रियनिग्रहः। प्रवर्त्तनं हितानाञ्च तत् सर्व्वं वृत्तमुच्यते। भक्तिश्च नवविधा। श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनं। अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनं। इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा। तथा, कथं विना लोमहर्षं द्रवता चेतसा विना। विनानन्दाश्रुकणया शुद्ध्येद्भक्त्या विना-

पश्चादियमुदीरयेत्। सम्प्रदानं तदन्ते तु त्यागार्थकमतःपरमिति, तान्त्रिकमन्त्रस्थले विधानात्। पौराणिकमन्त्रे मन्त्रस्यैव सम्प्रदानार्थकतया तदन्ते मन्त्रवटकतया त्यागार्थकनमः पदस्य नमस्कारान्तकीर्त्तित मित्यनेनोक्तत्वात् स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवतामित्युक्तत्वाच्च। एवञ्च

शय:। वाग्गद्गदा द्रवते यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च। विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तोभुवनं पुनाति। वराहपुराणे, संस्मृत: कीर्त्तितोवापि दृष्ट: स्पृष्टोऽथवा प्रिये। पुनाति भगवद्भक्ताश्चाण्डालोऽपि यदृच्छया। एतज्ज्ञात्वा तु विद्वद्भि: पूजनीयोजनार्द्दन:। वेदोक्तविधिना भद्रे आगमोक्तेन वा सुधी:। सुधीरिति पृथिवीसम्बोधनं। तथा, यावत् सर्व्वेषु भूतेषु मद्भावोनोपजायते। तावदेवमुपासीत वाङ्मन:कायकर्म्मभि:। हरिवंशे वलिं प्रति भगवद्वाक्यं, पुण्यं महर्षिणां यच्च मद्भक्तर्षिणां तथा। तत्सर्व्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति। अथाङ्गिरसौ। सर्व्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतं। पुनस्तपस्वी भवति पंक्तिपावनपावन:। गारुड़े, यद्दुर्लभं यदप्राप्यं मनसोयन्न गोचरं। तदप्यप्रार्थितं ध्यातोददाति मधुसूदन:। विष्णुपुराणं, ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवं। योगियाज्ञवल्क्य:, ध्यात्वा प्रणवपूर्व्वन्तु दैवतन्तु समाहित:। नमस्कारेण पुष्पादि विन्यसेत्तुपृथक् पृथक्। आग्नेये, तल्लिङ्गै: पूजयेन्मन्त्रै: सर्व्वदेवान् समाहित:। ध्यात्वा प्रणवपूर्व्वन्तु तन्नाम्ना सुसमाहित:। नमस्कारेण पुष्पादि विन्यसेत्तु पृथक् पृथक्। मन्त्रतन्त्रप्रकाशे मन्त्र-

---

ॐ नमो नारायणायेत्यादि मन्त्रादौ यन्नम:पदं तन्न त्यागार्थकं किन्तु नत्यर्थकं अतस्तदन्तेनम:पदं देयमेव। होमस्थले त्यागार्थकतया स्वाहापदस्यानुशिष्टत्वान्नमोऽन्ते तत्र स्वाहापदं नतु स्वाहान्ते

मधिकृत्य। नमोऽन्ते न नमोदद्यात् स्वाहान्ते द्विठमेव च। पूजायामाहुतौ चैव सर्व्वत्रायं विधिः स्मृतः। द्विठः स्वाहा। स्मृतिः, पत्रत्रयान्विता दूर्व्वा प्रशस्ता चार्घकर्म्मणि (७६)।

कालिकापुराणं, यद्दीयते च देवेभ्योगन्धपुष्पादिकं तथा। अर्घपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्। विष्णुधर्म्मोत्तरे, चन्दनागुरुकर्पूरमृगसारन्तथैव च। जातीफलं तथा दद्यादनुलेपनकारणात्। अतोन्यन्नैव दातव्यं किञ्चिद्देवानुलेपनं। विष्णुधर्म्मोत्तराग्निपुराणयोः। सुगन्धैश्च मुरामांसीकर्पूरागुरुचन्दनैः। तथान्यैश्च शुभैर्द्रव्यैरर्च्चयेज्जगतीपतिं। कालिकापुराणे, यद्यपि देव्याद्युपक्रम्य नैवेद्यादौ दिङ्नियमउक्तस्तथाप्याकाङ्क्षया अन्यत्राप्यन्वेति। यथा, नैवेद्यं दक्षिणे वामे पुरतोऽपि न पृष्ठतः। दीपं दक्षिणतोदद्यात् पुरतोऽपि न वामतः। वामतस्तु तथा धूपमग्रे वा नतु दक्षिणे। निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणं। दीपञ्च तथा स्थापयेत्

तद्देयमित्यभिप्रायेणाह स्वाहान्तेद्विठमेवचेति यत्र च मन्त्रे चतुर्थ्यन्तनाम नास्ति तत्रचान्तस्थत्यागार्थकनमः स्वाहादिपदसमभिव्याहारवशान्मन्त्रस्य सम्प्रदानतापरत्वमुन्नेयमिति (७६)।

मृगसारं कस्तूरीं। ततोऽन्यदिति विहितेतरदित्यर्थः। तथादद्यादित्यत्र तथाशब्देन विहितान्तरस्यानुकर्षात्, अन्यथा वचनान्तरविरोधापत्तेरिति। मुरागन्धद्रव्यविशेषः। मांसी जटामांसी दक्षिणे वामेइत्यत्र व्यवस्थामाह तन्त्रसारे। पक्वञ्च वामतोदद्यादामान्नञ्चैव दक्षिणइति। तथा दीपं दद्धे घृताक्तञ्च तैलयुक्तञ्च वामतः। दक्षिणे च सितावर्त्तिं वामतोरक्तवर्त्तिकां। तुलसीचन्दनं तुलसीकाष्ठगन्धः। गारुड़े,

यथाच्छायां नाश्रयेत्। विभीतकार्ककारञ्जस्नुहीच्छायां नचाश्रयेत्। स्तम्बदीपमनुष्याणामन्येषां प्राणिनान्तथा। इति प्रयोगसारात्। संवत्सरप्रदीपे, "योहि भागवतो-भूत्वा कलौ तुलसीचन्दनं। न चार्पयति वै विष्णौ न स भागवतोनरः। आग्नेये, चन्दनागुरुकर्पूरकुङ्कमोशीर-पद्मकैः। अनुलिप्तोहरिर्भक्त्या वरान् भोगान् प्रयच्छति। कालेयकं तुरुस्कञ्च रक्तचन्दनमेवच। नृणां भवन्ति दत्तानि पुण्यानि पुरुषोत्तमे। विष्णुधर्म्मोत्तरे, अनु-लिप्तं जगन्नाथं तालहन्तेन वीजयेत्। वायुलोकमवा-प्नोति पुरुषस्तेन कर्म्मणा। चामरैर्वीजयेद्यस्तु देव-देवं जनार्द्दनं। तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसं-शयं। राघवभट्टधृतं, शङ्खचास्थितं गन्धं मन्त्रै-र्दद्यात् कनिष्ठया। कनिष्ठाङ्गुष्ठसंयुक्ता गन्धमुद्रा प्रकीर्त्तिता। नारसिंहे, अपर्य्युषितनिश्छिद्रैः प्रोक्षितै-र्जन्तुवर्जितैः। आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेद्धरिं। देवीपुराणे, स्वयं पतितपुष्पाणि त्यजेदुपहतानि च।

---

योददाति हरेर्नित्यं तुलसीकाष्ठचन्दनं। युगानि वसते स्वर्गे ह्यनन्तानि नरोत्तम, इति, यद्वा तुलस्या सह चन्दनं। उशीरं गन्धवीरणमूलं। पद्मकं पद्मकाष्ठं कालेयकं कृष्णागुरु, तुरुस्कं शिलारसइतिख्यातं। रक्तचन्दनं कुङ्कुमं वीरलोहितचन्दन मित्यमरात्। दारिद्रं पद्मकं दद्या-द्दौर्भाग्यं रक्तचन्दनं। उशीरं चित्तविभ्रंशमन्येकुर्य्युरुपद्रवमिति विष्णु-धर्म्मोत्तरवचने पद्मकाष्ठादिनिषेधादत्रपद्मकाष्ठादिविधानं सम्वलितत्वेन बोध्यं, अन्येवचनान्तरनिषिद्धाः। कनिष्ठयेति, अङ्गुष्ठसंयुक्तयेत्यर्थः तथा-विधायाएव गन्धमुद्रात्वात्। अपर्य्युसितैर्निश्छिद्रैश्च आत्मारामोद्भवैः स्वकीयारामोद्भवैः। वापीत्यत्र वाधार्थे उपहतानि, दूषितानि

शातातपः, शिवे विवर्जयेत् कुन्दमुन्मत्तञ्च हरौ तथा। देवीनामर्कमन्दारौ सूर्य्यस्य तगरन्तथा। विष्णुधर्म्मोत्तरे, धर्म्मार्जितधनक्रीतैर्यः कुर्य्यात् केशवार्च्चनं। उद्धरिष्यत्यसन्दिग्धं दशपूर्व्वान् दशापरान्। नारसिंहे, मल्लिकामालतीजातीकेतकाशोकचम्पकैः। पुन्नागनागवकुलैः पद्मैरुत्पलजातिभिः। तुलसीकरवीरैश्च पलाशावल्लिकुब्जकैः। एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः। अर्च्चनन्दश सुवर्णस्य प्रत्येकं फलमाप्नुयात्। पुन्नागः पुनानइति मिथिलायां प्रसिद्धः, नागोनागकेशरः। नारदीयसप्तसाहस्रे, मालतीवकुलाशोकशेफालीनवमालिका। अम्लानतगराङ्कोठमल्लिकामधुपिण्डिका। यूथिकाष्टापदं कुन्दं कदम्बं मधुपिङ्गलं। पाटलाचम्पकं कृष्णं लवङ्गमतिमुक्तकं। केतकं कुरुवकं विल्वं कह्लारं करकं द्विज। पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे। कुरुवकं रक्तझिण्टिकं। यत्तु, सुरभीणि तथान्यानि वर्जयित्वा च केतकीमितिवामनपुराणवाक्यं तन्नरसिंहेतरावतारविषयं। केतकीपत्रपुष्पञ्च भृङ्गराजस्य पत्रकं तुलसीकृष्णतुलसी

अङ्कोठं आकलादीतिख्यातं, मधुपिण्डिका मधूकं, अतिमुक्तकं माधवीलता। गिरिशालिनीपदेनात्र श्वेतापराजिता। कृष्णापराजिताञ्चैव जयन्तीं बृहतीं तथा। यो दद्याद्विष्णवे तस्मै दुःखं विष्णुःप्रयच्छतीति, हरिहरामोदधृतनारदवचनेन कृष्णापराजिता निषेधात्। पीतकं पीयुलीतिख्यातं करवीरञ्चेति हरिभक्तिविलासे। न गृहे करवीरस्थैः कुसुमैरर्च्चयेद्धरिं। पतितैर्मुकुलैर्म्लानैः श्वासैर्वाजन्तुदूषितैः। आघ्रातैरङ्गसंस्पृ-

सद्यस्तुष्टिकरं हरेरिति नरसिंहपुराणात्। वामनपुराणे, पारिभाद्रं पाटला च वकुलं गिरिशालिनी। तिलकं जम्बुवनजं पीतकं तगरन्त्वपि। एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने। गिरिशालिनी अपराजिता। जम्बुवनजं श्वेतजवापुष्पं, विष्णुधर्म्मोत्तरे, रक्ताशोकस्य कुसुममतसीकुसुमन्तथा। अतसीशणः। तथा, चम्पकस्य च देयानि तथा भूचम्पकस्य च। आग्नेये, पद्मान्यम्बुसमुत्थानि रक्तनीले तथोत्पले। सीतोत्पलञ्च कृष्णस्य दयितानि सदा नृप। तथा, पाटला करवीरञ्च जवा जयन्तिरेव च। कुब्जकस्तगरश्चम्पः कर्णिकारः कुरुण्टकः। चम्पश्चम्पककुसुमं। अत्र विशेषोमत्स्यतन्त्रे, गोपाले वर्जयेज्झिण्टिं वकचम्पकवासकमिति। अत्रचम्पकं कनकचम्पकं। तथाच स्कन्दपुराणे, जवा कुरुण्टकं वन्यं वकं कनकचम्पकं। विवर्णं कृमिसन्दष्टं न देयं भजताच्युतं। जवा रक्तजवा, कुरुण्टकं पीतझिण्टिकं। भविष्ये, पद्मानि सितरक्तानि कुमुदान्युत्पलानि च। एषां पर्य्युषिताशङ्का कार्य्या पञ्चदिनोत्तरे। तुलस्यगस्त्यविल्वानां नास्तिपर्य्युषितात्मता। अगस्त्यं वकं। योगिनीतन्त्रे, विल्वपत्रञ्च माध्यञ्च तमालामलकीदलं। कह्लारं तुलसी

ष्टेदूंषितैश्चैव नार्च्चयेदित्यत्र करवीरश्चैरिति न करवीरपुष्पपरं नानावचनेषु तस्य विहितत्वात् किन्तु करवीरपत्रादिस्थकुसुमपरमिति न विरोधः। हरिभक्ति विलासटीकायान्तु वन्धुकं करवीरञ्च न गृहे रोपयेत् क्वचिदिति ज्योतिर्वचने गृहेकरवीरारोपणनिषेधात् गृहेरोपितकरवीर-

चैव पद्मञ्च मुनिपुष्पकं। एतत् पर्य्युषितं न स्याद्यच्चा-न्यत् कलिकात्मकं कलिकात्मकं स्वः प्रस्फोटनयोग्यं। राघवभट्टधृतं कलिकाभिस्तथा नित्यं विना चम्पकपङ्कजैः। शुष्कै र्न पूजयेद्विष्णुं पत्रैः पुष्पैः फलैरपि। विष्णुधर्म्मोत्तरे, उग्रगन्धीन्य गन्धीनि कुसुमानि न दापयेत्। अन्यायतनजातानि कण्टकानि तथैव च। रक्तानि यानि धर्म्मज्ञ चैत्यवृक्षोद्भवानि च। यानि श्मशानजातानि यानि चाकालजानि च। तथा, कुटजं शाल्मलीपुष्पं शिरीषञ्च जनार्द्दने। निवेदितं भयं रोगं निःस्वत्वञ्च प्रयच्छति। बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत्। अनुक्तरक्तकुसुमदानाद्दौर्भाग्यमाप्नुयात्। आगस्त्ये, परारोपितवृक्षेभ्यः पुष्पमानीय योऽर्च्चयेत् अविज्ञाप्य च तस्यैव निष्फलं तस्य पूजनं। एतद्द्विजेतरपरं। द्विज स्तृणैधः पुष्पाणि सर्व्वतः स्ववदाहरेदिति याज्ञवल्क्यात्। देवतार्थन्तु कुसुममस्तेयं मनुरब्रवीदिति वचनाच्च। गोऽग्न्यर्थतृणमेधांसि वीरुद्वनस्पतीनां पुष्पाणि स्ववदादीत फलानि चापरिवृहितानामिति गोतमवचनाच्च विशेषोज्ञेयः। द्विजेतरस्य दण्डोऽपि। तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलं।

पुष्पेण हरिपूजनं न कार्य्यमित्युक्तं। योगिनीतन्त्रे विष्णुमन्त्रमधिकृत्य नीलकण्ठं मयूरञ्च योन्याकारञ्च वर्जयेत्। शेफालिकाञ्च कह्लारं शरत्काले प्रशस्यते। अन्यत्र नस्पृशेद्देवि प्रायश्चित्तीच पूजनात्। रक्तहैमन्तिकं वर्ज्यं रक्तकृष्णाञ्च वर्जयेत्। वन्धूकं करवीरस्य वज्रस्य नीरजस्यच। केशरस्य कदम्बस्य तथा कोकनदस्यच। रक्तान्येतानि देयानि द्रोणस्या-

अप्रयच्छन्निग्टह्णानो हस्तच्छेदनमर्हति, इति स्मृतेः देवोपरिधृतं मस्तकोपरिधृतमधोवस्त्रधृतमन्तर्जलप्रक्षालितञ्च पुष्पं दुष्टमिति हरिभक्तिनामक ग्रन्थे (७७)।

अभिवाद्याभिवादककरस्थपुष्पञ्च प्रोक्षणात् कर्म्मण्यमिति केचित्। अतएव तयोरभिवादननिषेधमाह वौधायनः, समिद्वार्य्युदकुम्भपुष्पान्नहस्तोनाभिवादयेद्‌यच्चाप्येवं युक्तमिति। एवं युक्तं समिधादियुक्तं। लघुहारीतः, जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान्। दन्तकाष्ठञ्च भैक्षञ्च वहन्तं नाभिवादयेत्। अभिवादयेदित्यनुवृत्तौ शङ्खलिखितौ, न पुष्पाक्षतपाणिर्नाशुचि र्न जपन्न देवपितृकार्य्यं कुर्व्वन्निति, अक्षतायवाः, अक्षतास्तु यवाः प्रोक्ताभृष्टाधानाभवन्ति ते। इति भट्टनारायणधृतं।

---

च्छनकस्येति। अत्र द्रोणस्य योन्याकारत्वेऽपि विशेषेण ग्रहणाद्ग्राह्यता, तथा श्वेतापराजिताया अपि ग्राह्यता विशेषणाभिधानादिति। जयन्तिरेवच इत्यत्र जयन्तीग्रहणं श्वेतजयन्तीलाभाय। हरिहरामोदधृतवचने कृष्णापराजितासाहचर्य्यात् जयन्तिपदं कृष्ण जयन्तीपरमिति। नास्तिपर्य्युषितात्मतेति अत्र हरिहरामोदे, मालाकारगृहस्थानि न स्युः पर्य्युषितान्यपीति। श्रीदत्तोऽपि, मालाकारगृहस्थकुसुमस्य पर्य्युषितत्वदोषोनास्तीत्याह। तथा हरिहरामोदधृतमत्स्यसूक्ते। तुलस्यागस्त्यपुष्पाणि पद्मं गङ्गाजलंकुशं। न पर्य्युषितदोषोऽत्र छिन्नंभिन्नं न दूष्यतीति। अन्यायतन जातानीति द्विजेतरपरं वक्ष्यमाणवचनात्। कण्टकोनि सकण्टकानि। अत्र पुष्पाण्यञ्जलिभिर्दद्यान्निषिद्धान्यपि मालयेति हरिहरामोदश्रीदत्तादय चाहुः स्वत्र् आत्मीयवत् अपहृताना अन्येनावहितानामस्वामिकानामितियावत् (७७)।

ते यवा भृष्टा धाना भवन्तीत्यर्थः धानाशब्दस्य भृष्टयववाचित्वप्रदर्शनेन भट्टनारायणोक्तवचने अक्षतास्तु यवाइत्यत्र यवपदस्य व्रीहिविशेष-

अतएवामरसिंहः धानाभृष्टयवे स्त्रियः। आ[illegible],
समित्पुष्पकुशाज्याम्बुमृदन्नाक्षत[illegible]। जपं होमञ्च
कुर्व्वाणं नाभिवादयेत वै द्विजं। [illegible] तु [illegible],
जपकाले न भाषेत व्रतहोमादिकेषु च। एतेषु चैवा-
सक्तस्तु यद्यागच्छेद्द्विजोत्तमः। अभिवाद्य ततो विप्रं
योगक्षेमञ्च कीर्त्तयेत्। अत्र द्विजोत्तमपदं निषादस्थ-
पतिवत् कर्म्मधारयसमासस्यैव युक्तत्वादपतितवैवर्णिक-
परमिति विद्याकरः, वस्तुतस्तु विप्रपदश्रवणा[illegible]चपरं।
याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलमिति
वदन्ति। तथा, न पुष्पच्छेदनं कुर्य्याद्देवार्थं वाम-
हस्ततः। न दद्यात्तानि देवेभ्यः संस्थाप्य वामहस्ततः।
हारीतशातातपौ, समित्पुष्पकुशादीनि ब्राह्मणः स्वयमा-
हरेत्। शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् पतत्यधः।
क्रये प्रतिप्रसूते ब्रह्मपुराणं, पुष्पैर्धूपैश्च नैवेद्यैर्वीरक्रय-
क्रियाहृतैः, वीरक्रयः वीरवत् याञ्चाशून्येन विक्रेतुर्क्रय-

परतां हृदयन्ति। अतएवेति निषादस्थपतिवदिति, [illegible]
निषादस्थपतिं याजयेदितिश्रुतौ निषादस्य [illegible]
इति षष्ठीतत्पुरुषे निषादसम्बन्धेलक्षणापत्त्या निषाद[illegible]
कर्म्मधारय एवाद्रियतइति मीमांसासिद्धान्तसिद्ध दृष्टान्तितं, [illegible]विद्याकर-
मते उत्तमपदमपतितस्वधर्म्मनिष्ठपरं एवञ्चयद्यागच्छेत् द्विजोत्तमइत्य-
नन्तरं तदा तमिति पूरणीयं तस्ययोगक्षेमं कीर्त्तयेत् पृच्छेदित[illegible]
न्वयः। यदि च तेषु मध्येऽभिवाद्योविप्र आयाति तं [illegible]
योगक्षेमं पृच्छेदितिवाक्यभेद [illegible]
मतेद्विजोत्तम इत्यस्य विशेष्यपदं वि[illegible]मित्यस्य[illegible]भक्तिविपरिणामेन
विप्रइतिपदं निर्द्धारणस्थले निर्द्धारणीयविशेष्यवाचकपदस्यावश्यकत्वात्

न्यस्तमूल्येन क्रयः। विष्णुधर्म्मोत्तरे, भृङ्गराजस्य विल्वस्य वकपुष्पस्य च द्विजाः। जम्बाम्रवीजपुराणां पत्राणि विनिवेदयेत्। तथा, पुष्पाणि यदि ते न स्युः प्रशस्तै- रपि पल्लवैः। दूर्व्वाङ्कुरैरपि ब्रह्मंस्तद्भाविनार्च्चयाच्युतं। वामनपुराणे, विल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकं। तमालामलकीपत्रं शस्तं केशवपूजने। ज्ञानमालायां, पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखं। पुष्पाञ्जलि- विधिं हित्वा यथोत्पन्नं तथार्पणं। लघुहारीतः, स्नानं कृत्वा च ये केचित् पुष्पं गृह्णन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत्। एतत्तु द्वितीयस्नानाभिप्रायकमितिरत्नाकरः। व्यक्तं मत्स्यसूक्ते, स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं नरः। तत्पुष्पस्यार्च्चने देवि रौरवे परिपच्यते। स्कान्दे, न धात्री सफला यत्र न विष्णोस्तुलसीदलं। तन्म्लेच्छ- सदृशं स्थानं यत्र नायान्ति वैष्णवाः, यत्र मातृ- परोमर्त्यो यत्र द्वादशीलङ्घनरः। तुलसी मालती धात्री तत्र विष्णुः श्रिया सह। दूर्व्वा दहति दुःखानि धात्री

---

नराणांभूरस्त्वित्याद्यप्रयोगात् नराभिन्नक्षत्रियादौ नरसामान्यव्यावृत्त- भूरत्वादेर्बाधात् निर्द्धारणविभक्तिप्रकृत्यर्थसामान्यव्यावृत्तविधेयबोधस्यैवा- काङ्क्षितत्वात्। अन्यथा द्रव्येषु घटोगन्धवानित्यादिप्रयोगापत्तेः घट- भिन्नजलादिरूपयत्किञ्चित् द्रव्यव्यावृत्तत्वस्य गन्धे सत्वात् विशेष्यवाचक पदस्य सत्वे च तदर्थभिन्ननिर्द्धारणविभक्तिप्रकृत्यर्थसामान्यव्यावृत्तत्वस्य निर्द्धारण विभक्त्यावोधनीयत्वेन निरुक्तदोषाभावः। एवं नराणां राजसः शूरइत्यादि प्रयोगवारणाय विशेष्यवाचकपदार्थे निर्द्धारणविभक्तिप्रकृ- त्यर्थाभेदबोध एव निर्द्धारणविभक्तेः साधुतावाच्येति विशेष्यवाचकपदस्या-

हरति पातकं। हरीलक्ष्मी हरेद्रोगं तुलसी हरते भयं। तुलसीं प्राप्य यो नित्यं न करोति ममार्चनं, तस्याहं प्रतिगृह्णामि न पूजां दशवार्षिकीं। अतएव, गृह्णाति तुलसीं शुष्कामपि पर्य्युषितां हरिः। तथा, वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलं, न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलं। तुलसीपत्रमादाय यः करोति ममार्च्चनं। न पुनर्योनिमाप्नोति मुक्तिभागी भवेद्धि सः। तथा, समञ्जरिदलैर्युक्तैः तुलसीसम्भवैः क्षितौ। कुर्व्वन्ति पूजनं विप्रास्ते कृतार्थाः कलौ

---

त्यक्तेति। एवञ्च जात्यादिविशेषणविशिष्टे यद्धर्मावच्छिन्नाभिन्ने तादृशजात्यादिविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविधेयभानं तत्र तद्धर्मावच्छिन्नवाचकपदोत्तरं षष्ठीसप्तम्याविति निर्द्धारणसूत्रतात्पर्य्यं। द्विजपूत्तमो द्विजोत्तमो विप्र इत्यत्र तु सप्तम्या व्यावृत्तत्वमर्थः व्यावृत्तत्वं भेदप्रतियोगितावच्छेदकत्वमेकस्य तस्योत्तमपदार्थतावच्छेदकोत्तमत्वे व्युत्पत्तिवैचित्र्यात् तदेकदेशे भेदे च विप्रान्यद्विजत्वव्यापकत्वविशिष्टाधेयतासम्बन्धेन प्रकृत्यर्थद्विजस्यान्वयः। सप्तम्यन्तार्थान्वितोत्तमत्वावच्छिन्नस्य च द्विजत्वविशिष्टतादात्म्यसम्बन्धेन विप्रेऽन्वय इति निरुक्तार्थलाभः निरुक्तसम्बन्धेन तत्पदार्थान्वय एवाकाङ्क्षास्वीकारात् समुदायाधेयत्वादिसम्बन्धेनान्वयस्वीकारेणातिप्रसङ्गः द्विजेषु विप्रस्य उत्तमत्वमित्यत्र द्विजनिरूपितत्वविशिष्टाधेयतासम्बन्धेन विप्रस्योत्तमत्वेऽन्वये तादृशवाक्याकाङ्क्षास्वीकारेण नातिप्रसङ्गः। न निर्द्धारणे षष्ठीतिसूत्रेण निर्द्धारणषष्ठ्या तत्पुरुषसमासनिषेधः स्वरभेदनिषेधाय उत्तमत्वमित्यत्र वेदाध्ययनादिगुणविशेषपरं। नन्वेतादृशगुणविशिष्टस्योत्तमपदार्थत्वे कर्म्मधारय एव कथं न क्रियते चत्रियवैश्ययोर्निरुक्तोत्तमत्वविरहेणैव व्यावर्त्तनात्। न च द्विजपदम्न्यावर्त्तकं मेरुमहीरुह इत्यादौ महीरुहपदवदत्र द्विजपदस्य स्वरूपाख्यानरूपत्वादितिचेन्न विशेषणवाचकोत्तमपदस्य पूर्व्वनिपातापत्तेः। अथवा द्विजेभ्य उत्तम इति पञ्चमीसमासस्तत्र द्विजपदं विप्रभिन्नद्विजपरं विप्रमित्यनेन

स्तुलस्या तुष्यते यथा। गरुड़पुराणे, गवामयुतदानेन यत् फलं लभते खग। तुलसीपत्रकैकेन तत्फलं कार्त्तिके स्मृतं। तथा, तुलसीं विना या क्रियते न पूजा स्नानं न तद्यत्तुलसीं विना कृतं। भुक्तं तद्यत्तुलसीविवर्जितं पीतं न तद्यत्तुलसीविवर्जितं अनाचापि, तुलसीदलसंमिश्रं यत्तोयं शिरसा वहेत्। सर्व्वतीर्थाभिषेकस्य तेन प्राप्तं फलं ध्रुवं। वैष्णवामृते व्यासः, जलक्लिन्ना भवेद्यावत्तुलसीमूलमृत्तिका। तावत् प्रीणाति भगवान् विश्वात्मा पितृभिः सह। मनः-प्रसादजननी सुखसौभाग्यवर्द्धिनी। आधिव्याधिहरे

पुरुषोत्तमोमत इति कालिदासादिवचनाच्च पुरुषोत्तमपदं हरौ रूढ़ं। अवयवशक्त्या पुरुषावधिकोत्तमत्वं बोध्यते तेन पुरुषोत्तमः कृष्ण इति पुरुषोत्तमशब्दार्थस्तथाद्विजोत्तमपदस्य विप्रएव भूरिप्रयोगात् क्षत्रिय वैश्ययोरप्रयोगाच्च विप्रे रूढ़िः। एवञ्च द्विजोत्तमशब्देन रूढ़्या विप्र उक्तः। द्विजशब्देन च शक्त्या द्विजत्वावच्छिन्न उक्तस्तस्य च विप्रेऽभे-दान्वयः। तथा तेनैव द्विजपदेन लक्षणया विप्रान्यद्विजउक्तः। तस्य च लुप्तसप्तम्यर्थे अन्वयः। अन्यत्र एकपदे युगपत्शक्तिलक्षणयोरस्वीकारे-ऽपि निर्द्धारणविभक्तिप्रकृतेर्युगपत्शक्यलक्ष्यार्थबोधेऽनादिव्युत्पत्तिकल्पनात् सप्तम्यर्थभेदस्य उत्तमपदार्थेऽन्वयः। उत्तमपदार्थस्य चाभेदसम्बन्धेन विप्रेऽन्वयस्तेन द्विजाभिन्नो विप्रोविप्रान्यद्विजभिन्नोत्तमाभिन्न इति बोध्यः। अतएव निर्द्धारणसप्तमीसमासमभिप्रेत्य वोपदेवैः पुरुषोत्तमपदं पुरुषेषूत्तमः पुरुषोत्तमइत्युक्तं। क्वचिदन्यत्र पुरुषोत्तमपदप्रयोगः कर्म्म-धारयाभिप्रायेण यथा तथा द्विजोत्तमपदस्य कर्म्मधारयाभिप्रायेणैव क्वचित् क्षत्रियवैश्ययोरपि प्रयोग इति प्राहुः। वीरक्रयक्रियाहृतैरिति वीरक्रयरूपाक्रियातयागृहीतैरित्यर्थः। विल्वपत्रमिति श्रीकृष्णेतर विषयकं न रक्तचन्दनं जातु गृह्णीयाद्रक्तपुष्पकं। विष्णुपत्रैस्ततकुसुमै-

नित्यं तुलसि त्वं नमोऽस्तु ते। इति नमस्कारमन्त्रः। श्रियः प्रिये श्रियावासे नित्यं श्रीधरसत्कृते। भक्त्या दत्तं मया देवि गृहाणार्घ्यं नमोऽस्तु ते। श्रियं देहि यशो देहि कीर्त्तिमायुस्तथा सुखं। बलं पुष्टिं तथा धर्म्मं तुलसि त्वं प्रयच्छ मे। इत्यनेन पूजा (७८)।

विष्णुधर्म्मोत्तरे। पुष्पाभावेऽपि देयानि पत्राणि च जनार्द्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्यते। न रत्नैर्न सुवर्णैश्च न च वित्तेन भूरिणा। तथा प्रसादमायाति यथा पुष्पैर्जनार्द्दनः। ज्ञानमालायां, नाक्षतैरर्च्चयेद्विष्णुं न तुलस्या विनायकं। न दूर्व्वया यजेद्दुर्गां नाम्रातकैर्दिवाकरं। विष्णुधर्म्मोत्तरे, धूपदः सर्व्वमाप्नोति दीपदः सर्व्वमश्नुते। वामनपुराणे। रुहिकाख्यं कणं दारु सिह्लकं सागुरुं सितं। शङ्खं

नार्च्चयेद्देवकौस्तुभमित्यागमनिषेधात्। समञ्जरिदलैरिति मञ्जरीसहितपत्रैर्युक्तं कृतं पूजनमित्यर्थः। सदात्वममृतनामासीत्यन्वयः नमृतं मरणं पुनर्म्मरणं यत इति मोक्षदनामासीत्यर्थः। मलं पापं तद्विनाशिनीति। पितृभिः सहेति। पितरोऽपि प्रीताभवन्ति मत्सन्तानकृततुलसीमूलसेककृतहरितोषेण वयमुद्धृता भवाम इति चित्तोल्लासादितिभावः। पूजेतिगारुड़े या संवत्सरप्रदीपे पद्मे पत्रेतुसंप्राप्ते द्वादश्यां वैश्यसत्तम। ब्रह्मादयोऽपि कुर्व्वन्ति तुलसीदलपूजनं। द्वादश्यां ये प्रकुर्व्वन्ति तुलसीदलपूजनं। गृहारामे वनेवापि शृणु तेषान्तु यत्फलं। प्रयागस्नानयुक्तानां काश्यां प्राणविमोक्षिणां। यत्फलं कथितं वेदैस्तुलसीपूजनेनतत् (७८)।

नाक्षतैरिति। एकादशस्कन्धे श्रीधरस्वामिभिर्नतुलस्यागणाधिपमित्यत्र नकेतक्यामहेश्वरमिति पाठोलिखितः। अत्राक्षतनिषेधस्तुलस्यादिपदसाहचर्य्यात् पत्रपुष्पादिवत्तण्डुलस्योपचारतया दानपरः एका·

जातिफलं श्रीशे धूपानि स्युः प्रियाणि वै। कहिका मांसी। कणं माहिष्याख्यगुग्गुलुः। सितं कर्पूरं। सितेतिपाठे सिता शर्करा। शर्करानखी श्रीशे विष्णौ कालिकापुराणे, गन्धं पुष्पं धूपदीपौ उपचारांस्तथा परान्। स्नाताञ्जिवेद्य देवेभ्यो नरोनरकमाप्नुयात्। न भूमौ क्षिपेद्धूपं नासने न घटे तथा। यथातथाधारगतं कृत्वा तं विनिवेदयेत्। तथा, सर्व्वंसहा वसुमती सहते न त्विदं द्वयं। अकार्य्यपादघातञ्च दीपतापं तथैव च। तथा, नैव निर्व्वापयेद्दीपं देवार्थमुपकल्पितं। दीपहर्त्ता भवेदन्धः काणोनिर्व्वापकोभवेत्। विष्णुधर्म्मोत्तरे, यावदक्षिनिमेषाणि दीपोदेवालये ज्वलेत्। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। तथा, यः कुर्य्यात्तेन कर्म्माणि स्यादसौ पुष्पितेक्षणः। तेन देवदत्तदीपेन, विष्णुसंहितायां। घृतं तिलतैलं विना न किञ्चिद्दीपार्थञ्चाति। दद्यादित्युच्यते। नरसिंहपुराणे, मोचकं पनसं जम्बुं तथान्यल्लवलीफलं। प्राचीनामलकं श्रेष्ठं मधुकोडुम्बरं तथा। यत्नपक्वमपि ग्राह्यं कदलीफलमुत्तमं। प्राचीनामलकं करमर्द्दकं। वराहपुराणं, अपर्य्युषितपक्वानि दातव्यानि प्रयत्नतः।

---

दशस्कन्धे गन्धपुष्पाक्षतस्रग्भिर्धूपदीपोपहारकैः साङ्गं संपूज्य विधिवत् स्तवैः स्तुत्वा नमेद्धरिमित्यत्राक्षतदानविधानं तिलकालङ्कारादि विषयकमिति श्रीधरस्वामिचरणाः। पुष्पप्रतिनिधि तण्डुल दाननिषेधकं नाक्षतैरिति वचनमिति तत्त्वसारकृतः। तेनार्घ्यादौ न तण्डुलदाननिषेध इति बोध्यं शर्करानखीति भवनखी विधानात् हरिभक्तिविलासधृतविष्णु-

खण्डाज्यादिकृतं पक्वं नैव पर्य्युषितं भवेत्। ब्रह्माण्ड-पुराणे, ताम्बूलमुज्ज्वलं दद्याद्यो विप्रेभ्यः समाहितः। शिवाय केशवायाथ नाकलोके स पूज्यते। श्रीभागवते, यद्यदिष्टतमं लोके यच्चापि प्रियमात्मनः। तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते। मह्यं वासुदेवाय। विष्णुसंहितायां, नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वजामहिषीक्षीरं वर्जयेत् पञ्चनखमत्स्यवराहमांसानि चेति। नाभक्ष्यमिति यद्वर्णस्य यदभक्ष्यं स्वरूपतोलशुनादि तत्तेन न देयं नतु रात्रौ दध्याद्यपि। पञ्चनखश्च शशादिरिक्तः। मार्गं मांसं तथा च्छागं शाशं समुपयुज्यते। एतानि हि प्रियाणि स्युः प्रयोज्यानि वसुन्धरे, इति

---

धर्म्मोत्तरवचने प्राणिजात निषेधः द्रव्यान्तरमिलित गन्धोत्पत्तिरिक्तपरः। तद्वचनञ्च तथैव शुभगन्धा ये धूपास्ते जगतीपतेः। तथा न यक्षधूपं वितरेत् माधवाय सकामनं। यक्षधूपः सर्जरसः कासनीऽद्भवनेदः, अत्र यक्षधूपः केवलो निषिद्धः षोड़शाङ्गे तस्य विहितत्वात्। तथा विना मृगमदं धूपे प्राणिजातं विवर्जयेदिति।

अकार्य्यपादघातं निष्प्रयोजन पादघातं। दीपतापं तथैव चेति कालिकापुराणे तैजसं दारवं लौहं मार्त्तिकं नारिकेलजं। तृण-राज भवञ्चापि दीपपात्रं प्रशंस्यते। दीपवृक्षाश्च कर्त्तव्या स्तैजसा-श्चैव भैरव। वृक्षेषु दीपादातव्योनचभूमौ कदाचन। दद्याद्यथा च पृथिवी तापं नाप्नोतिवै तथा।

मोचकं कदलीफलं तत्रविशेषमाह यत्नपक्वमपीति एतेनान्येषां यत्नपक्वं नग्राह्यमितिबोध्यं। उज्ज्वलं गुवाकखदिरादियुक्तं। तदा-नन्त्याय कल्पत इति आनन्त्याय अनन्तफलायमोक्षायेति यावत्। वामन-पुराणे। हविषासंस्कृता येच यवगोधूमशालयः। तिलमुद्गादयोमाषा व्रीहयश्च प्रिया हरेरिति। स्वरूपतः ऋतुकालविशेषद्रव्यविशेषसम्ब-

वराहपुराणे भगवद्वाक्यात्। तथा, माहिषञ्चाविकं छागमयाज्ञिकमुदाहृतं। माहिषं वर्जयेन्मांसं क्षीरं दधि घृतं तथा (७८)।

देवलः, चाण्डालेनशुना वापि दृष्टं हविरयाज्ञिकं। विड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्। अन्यत्र हिरण्योदकस्पर्शादिति। कालिकापुराणे, यस्य यद्दीयते वस्त्रमलङ्कारादि किञ्चन। तेषां दैवतमुच्चार्य्य कृत्वा प्रोक्षणपूजने। उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत्। प्रोक्षणादिलक्षणन्तु, उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतं। न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतं। विष्णुधर्म्मोत्तरे, द्रव्याणां तत्तद्दैवतमभिधाय। गृहन्तु सर्व्वदैवत्यं यदनुक्तं द्विजोत्तमैः। तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतं। गोतमः। अन्तर्जानु करं कृत्वा सकुशन्तु तिलोदकं। फलांशमभिसन्धाय प्रदद्याच्छ्रद्धयान्वितः। योगियाज्ञवल्क्यः, अदृष्टविग्रहोदेवोभावग्राह्योमनोमयः। तस्योङ्कारःस्मृतो-

न्येन। तेनेति तेन वर्णेनेत्यर्थः। मागं मृगसम्बन्धि, माहिषंमहिषसम्बन्धिक्षीरादि। आविकं अविर्मेष स्तत्सम्बन्धिक्षीरादि। उत्तरार्द्धे क्षीरादिदर्शनात् (७८)।

हस्तेनेतिजलप्रक्षेपइतिशेषः अस्यचोत्तरवाक्येनान्वय न्यञ्चताऽधोमुखेनहस्तेनेत्यनुषङ्गेनान्वयः तिरश्चा वक्रेणहस्तेनावोक्षणमिति वचनमिदं वर्द्धमानधृतं ब्रह्मसंहितासम्बन्धि। भावग्राह्यः भक्त्याग्राह्यः भक्त्याहमेकयाग्राह्य इति भगवद्वचनात् मनोमयःमनसाग्राह्यः नतुवहिरिन्द्रियेण। उत्पत्तिस्थानानीति अकारादय एव सन्धिवशेनप्रणवभावमाप्ता इत्यर्थः। विष्णुरिति नामनामिनोरभेदोपचारेण वचसां पतिरितिसर्व्वेषां वर्णानां

नाम तेनाहूतः प्रसीदति। विष्णुपुराणे, ओङ्कारो भगवान् विष्णुस्त्रिधामा वचसाम्पतिः। तदुच्चारणतस्ते तु विनाशं यान्ति राक्षसाः। त्रिधामा त्रीण्यकारो-कारमकाररूपाणि धामान्युत्पत्तिस्थानानि यस्य स तथा। तथा, गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः। अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः। नारसिंहे, सर्व्ववेदान्तसारार्थः संसारार्णवतारकः। गतिरष्टाक्षरो नॄणामपुनर्भवकाङ्क्षिणां। यस्य यावांस्तु विश्वासस्तस्य सिद्धिस्तु तावती। एतावानिति नैतस्य प्रभावः परिमीयते। तथा, हृत्पुण्डरीकमध्यस्थं शङ्खचक्रगदाधरं। एकाग्रमानसोध्यात्वा विष्णुं कुर्य्याज्जपं द्विजः। तथा, अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयं। छन्दश्च देवी गायत्री परमात्मा च देवता। नमोनारायणा-

प्रणवस्य पूर्व्वरूपत्वादितिभावः, तथाहि श्रुतिः, चत्वारित्वाक्परिमितानि पदानि विदुर्ब्राह्मणा ये मनीषिणः गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वचोमनुष्यावदन्तीति अस्यार्थः वाचः ब्रह्माधिष्ठितत्वेन ब्रह्मरूपशब्दस्य पद्यते ज्ञायते परतत्त्वमनेनेतिपदानि स्वरूपाणि चत्वार्य्येव ये मनीषिणस्ते जानन्ति अन्तर्दृष्टत्वात्। तेषु पदेषु त्रीणि गुहायां मूलाधारमणिपूरकविशुद्धचक्रेषु निहितानिसमुद्भूतानि नादपश्यन्त्याख्यमध्यमाख्यानि नेङ्गयन्ति न स्वरूपं प्रकाशयन्ति सूक्ष्मरूपत्वात्, अतएवमनीषिणोनानुभवन्ति केवलं तुरीयं स्वरूपं कण्ठसमुद्भूतं वैखर्य्याख्यं त्रिषष्टिवर्णरूपं स्थूलत्वात् मनुष्या वदन्ति जानन्ति। एकादशे च। मयोपबृंहितं भूम्नाब्रह्मणानन्तशक्तिना। भूतेषु घोषरूपेण विषेषूर्णेव लक्ष्यते। मयेतिभगवद्वाक्यं उपबृंहितं अन्तर्य्यामितया-ऽधिष्ठितं मूलाधारे उद्भूतं शब्दपदमितिशेषः अन्तर्गतत्वेऽप्यपरिच्छिन्नत्व-माह भूम्नेति अन्तर्य्यामित्वेऽप्यविकारमाह ब्रह्मेति अविकृतस्यापि निय-

इति मन्त्रः सर्व्वार्थसाधकः। भक्तानां जपतां तात स्वर्गमोक्षप्रदायकः। जप मानसे चेतिगणेचकारपाठाद्वाक्-वचने मानसे च जपशब्दार्थसिद्धिः। देवतां ध्यायन् जपं कुर्य्यादित्यादिना ध्यानमत्राङ्गमुक्तं। यत्तु, मन्त्रार्थ-चिन्तनाभ्यासः सउक्तोमानसोजपः। इत्यनेन शब्दार्थयो-श्चिन्तन मुक्तं तत्रापि जपशब्दबलाच्छब्दचिन्तनं प्रधानं अर्थचिन्तनन्त्वङ्गं। तथाच योगियाज्ञवल्क्याः, वाच्यः सईश्वरः प्रोक्तोवाचकः प्रणवः स्मृतः। वाचकेऽपि च विज्ञाते वाच्यएव प्रसीदति। अतएव, धारयेन्मनसा मन्त्रं जिह्वौष्ठौ नैव चालयेत्। अभावे त्वक्षमालायाः कुशग्रन्थ्या च पर्व्वणा। हारीतः। मन्त्रार्थज्ञोजपन् जुह्वत्तथैवाध्यापयन् द्विजः। स्वर्गलोकमवाप्नोति नरकन्तु विपर्य्यये। नरकन्तु विपर्यय इतिनिन्दा मन्त्रार्थज्ञान-प्रशंसापरा मन्त्रैकवाक्यत्वात् नतु सर्व्वथा निषेधपरा।

न्तृत्वं घटयति अनन्तशक्तिर्नीति भूतेषु सर्व्व प्राणिषु घोषरूपेण नाद-रूपेण लक्ष्यते मनीषिभिः। अतः सूक्ष्मत्वे दृष्टान्तमाह विषेषु उर्णा-तन्तुरिवेति। अयञ्चशब्दः प्राणमय उच्यते प्राणोपादानकत्वात् ततो नाभिदेशे मणिपुरकाख्ये तदेवोद्भूतं पश्यन्त्याख्यं मनोमयं मणीषिणां मनोमात्रगोचरत्वात्। ततो हृदि विशुद्धाख्ये चक्रे समुद्भूतं सूक्ष्म-मोङ्काररूपं भवति। इदमिन्द्रियमयं मध्यमाख्यं तदेव कण्ठगतं वैख-र्य्याख्यं स्थूलरूपं विषष्टिवर्णमयं व्यक्तं भवतीत्योङ्कारस्य वर्णोपादा-नत्वं नचोङ्कारस्य अकारादिवर्णघटितत्वात् कथं सर्व्ववर्णोपादानत्व-मिति वाच्यं कण्ठगतस्योङ्कारस्याकारादिवर्णघटितत्वेऽपि हृद्गतस्य नत-द्घटितत्वमिति सामञ्जस्यात् तस्याकाराद्यघटितत्वेऽपि तद्घटितस्थूलो-ङ्कारोपादानत्वात्समानाकारत्वाच्च विहृदित्यनेनाभिधानं ब्रह्माविर्भा-

अन्यथा, वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतं । मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते, इति वृहस्पत्युक्तिविरुद्धा स्यात्। मनुस्तु क्रमाच्छ्रैष्ठ्यमाह। अज्ञेभ्यो-ग्रन्थिनः श्रेष्ठाग्रन्थिभ्योधारिणोवराः। धारिभ्योज्ञानिनः श्रेष्ठाज्ञानिभ्योव्यवसायिनः। ग्रन्थिनोग्रन्थसापेक्षपाठिनः, धारिणस्तदनपेक्षपाठिनः, ज्ञानिनोऽधीतशास्त्रार्थज्ञाः, एवं, वेदस्याध्ययनं सर्व्वं धर्म्मशास्त्रस्य चापि यत्। अजानतोऽर्थं तत्सर्व्वं तुषाणां कण्डनं यथा, इति व्यासवचनं तथैव व्याख्येयं। व्यवसायिनः शास्त्रार्थानुष्ठायिनः। जपविधिमाह पुरश्चरणचन्द्रिकायां। कनिष्ठा-नामिका मध्या चतुर्थी तर्जनी मता। तिस्रोऽङ्गुल्य-स्त्रिपर्व्वाणोमध्यमा चैकपर्व्विका। पर्व्वद्वयं मध्यमाया-जपकाले विवर्ज्जयेत्। एनं मेरुं विजानीयाद्दूषितं

वक्रत्वात् ब्रह्मेत्यभिधानञ्च। वेदोत्पत्तिश्च वैराजाख्यब्रह्मणोमूलाधारादि क्रमेणैव रीत्यावोध्या। द्वादशे च, ततोऽभूत् त्रिवृदोङ्कारोयोऽव्यक्त-प्रभवः स्वराट्। यत्तल्लिङ्गं भगवतो ब्रह्मणः परमेष्ठिनः। त्रिवृत् त्रिमात्रः अव्यक्तः प्रभवो यस्य सः। स्वराट् मनीषिणां हृदि स्वत एव प्रकाशमानः। तदेव कार्य्येण लक्षयति यत्तदिति नपुंसकत्वं लिङ्गशब्द विशेषणत्वात् लिङ्गं गमकमिति। अत्र श्रीधरस्वामिध्टताभियुक्तश्लोकः। या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते। तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीञ्च प्रपद्ये। अत्र सन्दर्भः। या सा पराख्या मित्रोऽग्निर्वरुणः सोमस्तयोः सदनं आधारचक्रं तस्मात् प्राण-सङ्गेनोच्चरन्तीस्वयमेव सूक्ष्ममुद्भवन्ती त्रिषष्टिवर्णान् प्रसूते इत्यर्थः। कैः अन्तःकरणाभ्यां प्रकटकरणैन च। अतस्तां प्रथममुदितां पश्यन्त्याख्या-मन्तः पतति नतूच्चारयति या तां प्रथमां तथा बुद्धिसंस्थां उच्चा-

ब्रह्मणा स्वयं। आरभ्यानामिकामध्यात् प्रदक्षिणक्रमेण तु। तर्ज्जनीमूलपर्य्यन्तं जपेद्दशसु पर्व्वसु। अङ्गुलीर्न वियुञ्जीत किञ्चित् सङ्कोचयेत्तलं। अङ्गुलीनां वियोगे तु छिद्रेषु स्रवते जपः। अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने। पर्व्वसन्धिषु यज्जप्तं तत् सर्व्वं निष्फलं भवेत्। मन्त्रतन्त्रप्रकाशे, तत्राङ्गुलिजपं कुर्व्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत्। अङ्गुष्ठेन विना कर्म्म कृतं तदफलं भवेत्। मन्त्रकोषे, हृदये हस्तमादाय तिर्य्यक् कृत्वा कराङ्गुलीः। आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्। कल्पान्तरमाह, अनुलोमविलोमस्थैर्व्विन्दुयुक्तैरष्टकाक्षरैः। क्षमेरुकैः साष्टवर्गैः कृतया वर्णमालया।

ययामीति विचारयुक्तां मध्यमां करणविशदां स्थानप्रयत्ननिर्म्मलां वैखरीं प्रपद्यइति। त्रिषष्टिवर्णा वोपदेवमतानुसारेणोच्यन्ते। अत्रयं इत्रयं उत्रयं ऋत्रयं लृत्रयं एचोह्रस्वत्वाभावादेवाष्टौ विसर्गानुस्वारजिह्वामूलीयोपाध्मानीयाश्चत्वार इति सप्तविंशतिः। ककारादिमकारान्ताः पञ्चविंशतिः यवलाः सानुनासिका निरनुनासिकाश्चेति षट् रशषसहा इति पञ्चेति मिलित्वा त्रिषष्टिरिति। एवं स्थूलोङ्कारस्य ब्रह्मणःकण्ठे प्रथमोद्भूतत्वात् ब्रह्मवाचकत्वाच्च सर्व्ववर्णोत्तमत्वमिति। द्वादशाक्षरः ॐ नमोभगवते वासुदेवायेति मन्त्रः गतिर्भगवत्प्राप्तिर्हेतुः ज्ञानहेतुर्वा; यावान् यावत्फलविषयकः तावती तावद्विषयिणी सिद्धिर्लाभः। एकाग्रेति प्रत्याहृतचित्तेन विष्णुं ध्यात्वा जपेदित्यर्थः। ऋषिरिति प्रथमं मन्त्रं गृहीत्वा तत् साधकोऽपि ऋषिः, महेश्वरमुखाद् ज्ञात्वा यः साक्षात् तपसा मनुं संसाधयतिशुद्धात्मा स तस्य ऋषिरीरितः, इति गौतमीयात्। नारायणो धर्म्मपुत्त्रतयाऽवतीर्णः। परमात्मा सर्व्वान्तर्यामी विष्णुः। नरसिंहपुराणे नित्यत्वमाह यथा। अष्टाक्षरेण देवेशं नरसिंहमनामयं। गन्धपुष्पादिभिर्नित्यमर्च्चयेदच्युतं नरइति। जपेति

प्रत्येकं वर्णयुक्तमन्त्रा जप्ताःस्युः चिप्रसिद्धिदाः। तामाहुः, अकारादिलकारान्तं पञ्चाशन्मणिसूत्रकं। चकारं मेरुसंस्थाने लकारादिविलोमतः। वर्गाष्टकविभेदेन शतमष्टोत्तरं भवेत्। वैरिमन्त्रा अपि नृणां मन्ये मन्त्राश्च किं पुनः। अकारादिलकारान्तता अनुलोमता लकाराद्यकारान्तता विलोमता चकारस्तु मेरुतया न संख्याघटकः। साष्टवर्गैः अकचटतपयशवर्गयुतैः। एकैकान्तरितं मन्त्रं जपेदेवं फलप्रदं। अन्यत्र च। ब्रह्मनाड़ीगतानादिचान्तवर्णान् विभाव्य च। वर्णं विन्दुयुतं कृत्वा श्रेष्ठं मन्त्रं जपेत् पुनः। अकारादिषु संयोज्य तथा कादिषु च क्रमात्। तदा लिपिर्भवेद्वर्णमालाष्टशतसंख्यया। अनया सर्व्वमन्त्राणां जपः सर्व्वार्थसाधकः। विद्वान् वाग्मी श्रिया युक्तोमान्योद्गतकविर्भवेत्। ग्रथिता शक्तिसूत्रेणेति तन्त्रान्तरदर्शनात् कुण्डलिनी सूत्रत्वेन भावनीया। जपसमर्पणमाह, गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत् कृतं जपं। सिद्धिर्भवतु

जपधातुरित्यर्थः। मानसेचेति चकारेण व्यक्तवचनलाभः रपलपजल्पव्यक्तायाम्वाचीतिपूर्व्वोक्तानुकर्षादित्यभिप्रायेणाह व्यक्तवचन इति। अव्यक्तत्वं निजकर्णगोचरत्वं तथाच जिह्वौष्ठौचालयेत् किञ्चित् देवतागतमानसः। किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः। तथा तत्रैव। मानसः सिद्धिकामानामुपांशुः पुष्टिमिच्छतां। वाचिकोमारणे शस्तः कथितं जपलक्षणं। वाचिकः प्रस्फुटाक्षरः। तस्य निन्दामाह तन्त्रसारे। मनसा वा जपेत् स्तोत्रं वचसा वा मनुं जपेत्। उभयं निष्फलं याति भिन्नभाण्डोदकं यथा इति। देवतागतमानस इति जपाङ्गतयोक्तं ध्यात्वाविष्णुमित्येकवाक्यत्वात् तत्र क्त्वाप्रत्ययेनानन्तर्य्यस्या-

मे देव त्वत्प्रसादात्त्वयि स्थिते। मन्त्री श्लोकं पठित्वा तु दक्षहस्तेन विष्णवे। मूलानुनार्घतोयेन दक्षहस्ते निवेदयेत्। अनुमन्त्रः। विद्याकरधृतं, सहस्रं वा शतं वापि दशवानुदिनं जपेत्। कुर्य्यादष्टाधिकं तेषामिति जप्ये विधिः स्मृतः। तन्त्रान्तरे, विक्षेपादथवालस्यात् जपहोमार्च्चनान्तरा। उत्तिष्ठति तदान्यासं षड़ङ्गं विन्यसेत् पुनः। पञ्चरात्रे, अपवित्रकरोनग्नः शिरसि प्रावृतोऽपिवा। प्रलपन् वा जपेद्यावत्तावन्निष्फल-मुच्यते। विष्णुपुराणे, सर्व्ववेदेषु यत् पुण्यं सर्व-

विवक्षितत्वात् तच्चध्यानं मानसं शाब्दवोधरूपञ्चेति। मानसजप-लक्षणमाह गौतमीये। धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकां। उच्चरेदर्थमुद्दिश्य मानसः सजपः स्मृतः इति उच्चरेत् भावयेत् अत्रापि देवताध्यानमङ्गं। मन्त्रार्थचिन्तनेति, मन्त्रार्थयोश्चिन्तनेत्यर्थः। अभ्यासः दशावृत्त्यादिभेदाय। वाचके च परिज्ञाते इत्यन्तेन वाचकज्ञानस्यैव जपत्वमुक्तं तत्साधनतया वाच्यज्ञानमाह वाच्य एवेति प्रसीदति ज्ञान-विषयतया प्रसन्नो भवति। तथा व्याख्येयं, अर्थज्ञस्य प्रशंसापरतया व्याख्येयं जपविधिं पर्व्वादिनियमपूर्व्वजपविधिं। चतुर्थीति, तर्ज्जनी विशेषणं तासु मध्य इति पूरणीयं। तिस्रः कनिष्ठानामिकातर्ज्जन्यः मध्यमाया एकपर्व्वग्रहणनिर्देशात् वर्ज्जने हेतुमाह एवमिति, एवमव-शिष्टमध्यमापर्व्वद्वयं दशपर्व्व स्विति नात्रप्रातिलोम्येन जप स्तथाविधाना-भावादितिवोध्यं। किं पुनरिति सिध्यन्तीतिशेषः। ब्रह्मनाड़ी सुषुम्ना-मध्यवर्त्तिनीमूलाधाराद्ब्रह्मरन्ध्रगता। आदीति अकारादीत्यर्थः। तन्त्रा न्तरदर्शनादिति कुण्डलिनीति ब्रह्मनाड़ीयथा ब्रह्मरन्ध्रगतेत्यादिः। अत्रानुलोमेन विलोमेनच शतजपान्तरमष्टवारजपेतु अकचटादिवर्णा-नामेकैकस्यान्तिमं वर्णं विन्दुयुतं कृत्वामन्त्रं जपेदित्यर्थः। अयञ्च जपः मानसएव तथाच सनत्कुमारकल्पे। क्रमोत्क्रमगतैर्मालामातृ कार्णैः क्षमेरुकैः। सविन्दुकैः साष्टवर्गैरन्तर्यजनकर्मणीति अनुमन्त्र

तीर्थेषु यत् फलं तत् फलं नर आप्नोति स्तुत्वा देवं जनार्द्दनं। स्कान्दे, अहन्यहनि योमर्त्त्यो गीताध्यायन्तु संपठेत्। द्वात्रिंशदपराधैश्च अहन्यहनि मुच्यते। ते चापराधा वराहपुराणे दर्शिताः ( ८० )।

श्रीभागवते। नानातन्त्रविधानेन कलावपि तथा शृणु। ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यं। भृत्यार्त्तिहं प्रणतपालभवाब्धि-पोतं वन्दे महापुरुष ते चरणारविन्दं। त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्म्मिष्ठ आर्य्यवचसा यद-गादरण्यं। मायामृगं दयितयेप्सितमन्वधावद्वन्दे महा-पुरुष ते चरणारविन्दं। एवं युगानुरूपाभ्यां भगवान् युगवर्त्तिभिः। मनुजैरिज्यते राजन् श्रेयसामीश्वरोहरिः। स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत्। शिरोमत्

इति अनिति जीवत्यनेन मननविपर्य्ययेणेति व्युत्पत्तेः जीवनञ्चविलक्षणं सामान्यशब्दस्य विशेषपरत्वात् यद्वा धातूनामनेकार्थत्वात् अनधातोर्मन-नार्थकत्वादिदं। तेषां शतानां सहस्राणाञ्च नतु दशवाइतरस्यापि परामर्शः। संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिष्विति महाकपिल-पञ्चरात्रवचनस्वरसादेवमत्रसंख्यानुक्तावित्युपादानात् यत्र काम्यविधौ शत सहस्रयोरेवोपादानं तत्र नाष्टाधिक्यं नित्यनैमित्तिकपूजाद्यङ्गजपादौ चाष्टाधिक्यनियम इति वोध्यं। विक्षेपात् विषयान्तरानुसन्धानात्। अपवित्रकरः पादादिकरः कुशपवित्ररहितकरो वा प्राग्धृतोवस्त्रादिना। प्रलपन्शब्दान्तरमुच्चरन् सर्व्ववेदेष्विति अधीतेषु इति शेषः सर्व्वतीर्थेषु वासादिना ( ८० )।

हे प्रणतपाल हे महापुरुष इति सम्बोधनद्वयं ध्येयं ध्यानार्हं सदेत्यस्य सर्व्वत्रसम्बन्धः ध्येयत्वे हेतवः परिभवघ्नमित्यादयः। अन्ये:

पादयोः कृत्वा बाहुभ्याञ्च परस्परं। प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवादिति, भगवद्वाक्यं। स्मृतिः, न देवं पृष्ठतः कृत्वा प्रणामं क्वचिदाचरेत्। वरमुत्थाय कर्त्तव्यं न वृथा भ्रमणञ्चरेत्। एतद्विवृणोति पश्चात् कृत्वा तु योदेवं भ्रमित्वा प्रणमेन्नरः। तस्यैहिकं फलं नास्ति न परत्र दुरात्मनः। तथा भ्रान्त्वा चतुःपार्श्वं श्रीकृष्णं योनमेन्नरः। साष्टाङ्गप्रणिपातेन तस्य मुक्तिः करे स्थिता। स्कान्दे, अर्घं कृत्वा तु शङ्खेन यः करोति प्रदक्षिणं। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। वामनपुराणे, त्रिःप्रदक्षिणं यः कुर्य्यात् साष्टाङ्गकप्रणामकं। दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः। नारसिंहे, उरसा शिरसा दृष्ट्या वचसा

परिभवस्तिरस्कारस्तं हन्ति दूरीकरोति यस्तं तीर्थास्पदं गङ्गादितीर्थानामाश्रयत्वेन महापावनं। शरण्यं सर्व्वेषामाश्रयणीयं अधिकारिविशेषनिरपेक्षभजनीयमिति यावत्। भवाब्धिपोतं संसारार्णवतारकं त्यक्तेति यदगात् इत्यत्र यत् य इत्यर्थः आर्य्यस्य गुरोर्दशरथस्य वचसा। मायामृगं माययाधृतस्वर्णमयमृगरूपं राक्षसं दयितया सीतया एतेन भक्तवश्यता सूचिता। यद्वा यदिति चरणारविन्दविशेषणं ते तव यच्चरणारविन्दं शरण्यं अगात् मायामृगं अन्वधावत्। हे धर्म्मिष्ठ ते तवतच्चरणारविन्दं वन्दे इति। अत्र कलावपि तथाशृणु त्यनन्तरं। कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदं। यज्ञैः संकीर्त्तनप्रायैर्यजन्तिहि सुमेधस इति वचनमस्ति तन्त्वविधानेनेति, कलौ तन्त्रस्य प्राशस्त्यं द्योतयति। कृष्णेति वर्णोनाम यस्य कृष्णोवर्णो यस्येति समासाभ्यां नामतोरूपतश्च कृष्णावतारोदर्शितः ननु कृष्णवर्णत्वे रूक्षता स्यादतः आह त्विषेति इन्द्रनीलमणिवत् उज्ज्वलमित्यर्थः। अङ्गानि हृदयादीनि उपाङ्गादीनि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदाः

मनसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः। विष्णुधर्म्मोत्तरे, जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात्। केध्रुताञ्जलिभि र्नेमुरिति भागवतीयात् शिरोऽञ्जलिसंयोगोऽपि नमस्कारः। स्मृतिः, देवताप्रतिमां दृष्ट्वा यतिञ्चैव त्रिदण्डिनं। नमस्कारं न कुर्य्याच्चेदुपवासेन शुद्ध्यति। ब्रह्मपुराणे, यत् किञ्चित् क्रियते कर्म्म सदा सुकृतदुष्कृतं। तत्सर्व्वं त्वयि संन्यस्तं त्वत्प्रयुक्तं करोम्यहं। इत्यनेन समर्पयेत्। भागवते, मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्द्दन यत्पूजितं मया देव परिपूर्णं तदस्तु मे। पूजानन्तरं शङ्खपूजामाह मन्त्रतन्त्रप्रकाशे। पूजयेद्गन्धपुष्पाद्यैः शङ्खं वै देववद्बुधः।

सुनन्दादयः तैः सहितं यज्ञैरर्च्चनादिभिः संकीर्त्तनं नामरूपगुणादिवचनं तत् प्रधानैः यजन्ति आराधयन्ति तन्त्रविधानेनेत्यनेनास्यान्वयः। संकीर्तनमेव धेयमिति श्लोकद्वयं अत्र रामचन्द्रवन्दनकथनं श्रीकृष्णश्रीरामयोरेकरूपत्वं दर्शयति। युगानुरूपाभ्यां नामरूपाभ्यां युगानुरूपत्वञ्च कलौ लोकानां जड़त्वादिदोषवाहुल्यात् ध्यानाद्यनधिकारिणामुद्धारायाविष्कृतपरममङ्गलायनत्वं। एतच्च निमिं प्रति श्रीकरभाजनवाक्यं। 'भगवद्वाक्यमाह स्तुत्वेति, भगवन् प्रसीदेत्युक्त्वावन्देतेत्यन्वयः। पादयोः पादयोर्मध्ये परस्परं मिलिताभ्यां वाहुभ्यां सहेति बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं समदक्षिणोत्तरौपादौ गृहीत्वा यद्वा पृष्ठतः परस्परनिवद्धाभ्यामिति स्वामिपादाः प्रपन्नं पाहीत्याद्युच्चरन्। मृत्युग्रहः संसारः स एवार्णवस्तस्मात्। स्थानस्य संकीर्णत्वेऽप्याह वरमुत्थायेतिकर्त्तव्यमिति करशिरः संयोगरूपमितिवन्दनमिति शेषः। एतद्धि वृणोति प्रणामस्य दृष्टात्वविवरणं। दशाश्वमेधस्येति आनुषङ्गिकं कामनाविषयस्वा वस्तुतस्तु एकोहि कृष्णस्य कृतप्रणामोदशाश्वमेधाव-

नारसिंहे, अतः प्रभृति निर्म्माल्यं मा लङ्घय महामते। नरसिंहस्य देवस्य तथान्येषां दिवौकसां। भविष्ये, यश्च पूजयते देवान् ब्राह्मणोद्रव्यलोभतः। भृत्या भरतशार्दूल स याति नरकं ध्रुवं। भृत्या वेतनेन। देवलः, इष्टं दत्तमधीतञ्च तप्तं वाप्यात्मना तपः। प्रयच्छत्यपरेभ्यश्च धनार्थं धर्म्मविक्रयी। संवत्सरप्रदीपे, विष्णुालय-समीपस्थान् विष्णुसेवासमागतान्। चाण्डालान् पतितान् वापि न स्पृष्ट्वा स्नानमाचरेत्। उत्सवे वासुदेवस्य स्नायाद्योऽशुचिशङ्कया। तादृशं कल्मषं दृष्ट्वा सवासा जलमाविशेत् (८१)।

अथ द्वादशीनियमाः। द्वादश्यामपि विष्णुपूजनं। एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्वदियन्तथा, इति भविष्यपुराणात्। यद्वदिति, यथा द्वादश्यां विष्णूपासनाय एकादश्यामुपवासं

---

भृथैर्नतुल्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय इतिश्रीमच्छङ्कराचार्य्यधृतवचनात् मुक्तिरेवफलमिति। त्वयीति रात्रि भृत्येनेवेति शेषः त्वत्प्रयुक्तं त्वदर्थं त्वत्प्रीत्यर्थमेवेति यावत् अन्तर्य्यामिणा त्वया प्रवर्त्तितत्वादितिभावः। देववद्बुध इति अत्र देवाधिष्ठानादितिभावः अत्र संवत्सरप्रदीपे पुराणसर्व्वस्वेच स्कन्दपुराणं। न भूमौ स्थापयेत् शङ्खं कदाचिदपि मानवः। विष्णोः पूजावसानेतु शङ्खमेवं समर्च्चयेत्। ॐ त्वं पुरा सागरोत्पन्नो विष्णुनाविधृतः करे। निर्म्मितः सर्व्वदेवैश्च पाञ्चजन्य नमोऽस्तुते। इतरशङ्खेषु पाञ्चजन्यत्वं भावनयैव पूजाकार्य्येति भावः। पाञ्चजन्यस्यैव पूजनमिति वा (८१)।

अथ द्वादशी नियमा इति। उच्यन्ते इति शेषः। उपासनाय द्वादश्यामिति नच द्वादश्यां विष्णूपासनार्थत्वे एकादश्युपवासस्याङ्गत्व-

प्रकुर्व्वन्ति तथा इयमपि षष्ठीयुक्ता सप्तमी उपोष्या सप्तम्यां सूर्य्योपासनायेत्यर्थः। ब्रह्माण्डपुराणं, कांस्य मांसं सुरां चौद्रं लोभं वितथभाषणं। व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनं। शिलापिष्टं मसूरांश्च द्वादशैतानि वैष्णवः। द्वादश्यां वर्ज्जयेन्नित्यं सर्व्वपापैः प्रमुच्यते। पुनर्भोजनमध्वानं यानमायासमैथुने। उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी। वृद्धशातातपः, उपवासं द्विजः कृत्वा ततोब्राह्मणभोजनं। कुर्य्यात्तथास्य सगुण उपवासोहि जायते। सगुणः साङ्गः। कात्यायनः, मिथ्यावादे दिवास्वप्ने बहुशोजनसेवने। अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः। तथा, द्वादश्यां पारणे कुर्य्याद्वर्जयित्वाऽप्युपोदकीं। उपोदकी पूतिकाशाकं। कूर्म्मपुराणे, कांस्यं मांसं सुरां चौद्रं हिंसां तैलमसत्यतां द्यूतक्रीड़ां दिवानिद्रां व्यायामं क्रोधमैथुनं। द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत्। संवत्सरप्रदीपे, अभ्यङ्गञ्च परान्नञ्च तैलं निर्म्माल्यलङ्घनं। तुलसीचयनं द्यूतं पुनर्भोजनमेव च। वस्त्रपीड़ां तथा चारं द्वादश्यां वर्जयेद्बुधः। अभ्यङ्गो येन केनापि तैलं तिलतैलं मार्ष्टावपि निषिद्धं। अभ्यङ्गमार्ष्टौ आयुर्व्वेदे,

मायाति न प्रधानत्वमितिवाच्यं द्वादश्यामित्यत्र द्वादश्यामपीत्यर्थात् तथाचैकादशी द्वादश्योस्तुल्यत्वेन द्वादशीयुतायामेकादश्यामुपोष्य तद्दिने एकादशीनिमित्तकविष्णुपूजां विधाय परदिने द्वादश्यो तन्निमित्तक विष्णुपूजा एकादशीदिने द्वादशीक्षये च तन्त्रेणैकैवपूजेतिभावः, अतएव कात्यायनेनोक्तं प्रातःस्नात्वा हरिं पूज्य उपवासं समर्पयेदिति, अत्र-

मूर्ध्नि दत्तं यदा तैलं भवेत् सर्व्वाङ्गसङ्गतं। श्रोतोभिस्तर्पयेद्वाहू अभ्यङ्गः स उदाहृतः। तैलमल्पं यदङ्गेषु न च स्याद्वाहुतर्पणं। सा मार्ष्टिः पृथगभ्यङ्गो मस्तकादौ प्रकीर्त्तितः। स्मृतिः। घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितं अदुष्टं पक्कतैलञ्च स्नानाभ्यङ्गेषु नित्यशः। अभ्यङ्गइति द्वादशीतरपरं नित्यशइति पर्व्ववारादावपि। वारे द्रव्यदानेनापि प्रतिप्रसवमाह स्मृतिः, रवौ पुष्पं गुरौ दूर्व्वां भूमिं भूमिजवासरे। भार्गवे गोमयं दद्यात्तैलदोषोपशान्तये। दद्यात्तैलइति शेषः। निर्म्माल्यलङ्घनमन्यत्रापि निषिद्धमत्राधिकदोषकरं व्रतहानिकरं वा। क्षारं व्रणस्य। मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे। वस्त्राणां क्षारसंयोगोदहत्यासप्तमं कुलं, इति यमवचनात्। एवं परान्नमपि निषिद्धं प्रागुक्तवचनेभ्यस्तत्रप्रतिप्रसवमाह स्मृतिः गुर्व्वन्नं मातुलान्नञ्च श्वशुरान्नं तथैवच पितुः पुत्त्रस्य चैवान्नं न परान्नमिति स्मृतिः। यद्यपि यमेन, परपाकेन पुष्टस्य द्विजस्य गृहमेधिनः। इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत्। यस्यान्नेन तु भुक्तेन भार्य्यां समधिगच्छति। यस्यान्नं तस्य ते पुत्त्रा अन्नाद्रेतः प्रवर्त्तते। हारीतजमदग्निभ्यां, व्राह्मणान्नेन दारिद्र्यं क्षत्त्रियान्नेन

हरिपूजानन्तरमुपवास-समर्पणोक्तेः पूजनस्याङ्गत्वमुपवासस्य प्राधान्यं स्फुटमभिहितं। अध्वानं प्रतियानं गमनमित्येके अन्यथा पञ्चमीत्यनुपपत्तेः, द्विज इति व्रतकर्त्तृमात्रोपलक्षणं सर्व्ववर्णानां स्त्रीणाञ्चव्रताधिकारस्योक्तत्वात्। क्षौद्रं मधु असत्यता असत्यवचनं निर्म्माल्यलङ्घनं यद्यपि सामान्यतोनिषिद्धं तथापि व्रतहानिकरत्वेनात्रोक्तमिति। वस्त्र-

प्रेष्यतां। वैश्यान्नेन तु शूद्रत्वं शूद्रान्नैर्नरकं व्रजेत्, इति पराव्रं सामान्यतोनिषिद्धं। तथाप्यधिकदोषकरं व्रतहानिकरं वा। अष्टम्याञ्च चतुर्द्दश्यां षष्ठ्याञ्च द्वादशीन्तथा। अमावास्यां चतुर्थ्याञ्च मैथुनं योऽधिगच्छति। तिर्य्यग्यानौ समागच्छेन्मम लोकं न गच्छति। मम विष्णोः। द्वादशीमधिकृत्य कात्यायनः, प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत्। अज्ञानतिमिरान्धस्य व्रतेनानेन केशव। प्रसीद सुमुखोनाथ ज्ञानदृष्टिप्रदोभव। कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव। संसारार्णवमग्नानां प्रसीद मधुसूदन। विष्णुधर्म्मोत्तरे, द्वादश्याः प्रथमः पादोहरिवासरसंज्ञकः। तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः। पारणकालः स्वल्पापि द्वादशी। ननु, त्रयोदश्यां यदा न स्याद्द्वादशीघटिकाद्वयं। उपोष्या दशमीविद्धा सर्व्वैरेकादशी तदा, इति नारदीयवाक्यात् घटिकाद्वयमेव पारणकालः। घटिका दण्डः। यथा ब्रह्मसिद्धान्ते, घटिषष्ट्या दिवानिशमिति। अत्र केचित् घटिकाद्वयमिति पारणकालोपलक्षणं अन्यथा तदधिकेऽपि द्वादशीनिर्गमे प्रातर्वक्तावलोकनविद्धाऽप्येकादश्युपोष्या स्यात्। नच घटिकात्रयादिष्वपि द्वित्वमस्तीति तत्रापि

पीड़ा वस्त्रनिष्पीड़नं चारं वस्त्रेषु चारसंयोगः अत्र तुलसीचयन-वस्त्रनिष्पीड़नतत्चारसंयोगवर्जनं द्वादश्यामिति द्वादशीतिथिपरं नतु पारणदिनपरं तेन क्वचित्त्रयोदश्यां पारणे न निषेधः अभ्यङ्गादिनिषेधे पारणदिनपरं वचनान्तरैकवाक्यत्वात् मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे। वस्त्राणां चारसंयोगो दहत्यासप्तमं कुलमिति वचनात संक्रान्त्यां

तद्वाक्यादरइति वाच्यं यतः पूर्व्वसंख्यानाशेनैवोत्तर-संख्योत्पादनात्। अन्यथा पशुना यजेत इत्यत्र एकत्व संख्याविवक्षायामपि उपात्तपश्ववयवविनाशे पश्वन्तरावयवेन सहानुष्ठानं प्रपद्येत, तस्माद्यथा काकेभ्योदधि रक्षतामित्यनेनोपघातकमात्रं लक्ष्यते तेन श्वादिभ्योऽन्नं रक्षतएव। तथाच भट्टपादाः, काकेभ्योरक्षतामन्नमितिबालोऽपदेशतः। उपघातप्रधानत्वात् श्वादिभ्यः किं न रक्षति। तथा घटिकाद्वयमित्यनेनापि पारणयोग्यकाल उपलक्ष्यत इत्याहुः। तन्न। प्रत्यक्षएव पूर्व्वसंख्याप्रत्ययनाशादुत्तरसंख्याप्रत्ययोत्पादनियमः शाब्दबोधे तु न तथा नियम इति सिद्धान्तः। पशुना यजेतेत्यत्र विधेयविशेषणत्वेनैकत्वस्य विवक्षितत्वांद्वित्वव्यवच्छेदः अत्र तु कलाद्वयं त्र्यस्पर्शीत्यनाख्ययोक्तेः स्वल्पेतिश्रवणात् अजेनापि पारणाश्रवणाच्च घटिकाद्वयमिति न नियमः किन्तूपलक्षणं। तथाच नारदीये, एकादश्याः कलाह्येका द्वाद-

घश्चदश्याश्च द्वादश्यां श्राद्धवासरे। वस्त्रं न पीड़येत् स्नानं नापि क्षारेण योजयेदितिवचनस्य स्नानं स्नायते अनेनेति स्नानसम्बन्धीति वस्त्रस्य विशेषणं क्षारसंयोगान्वयि वस्त्रमात्रस्यानुषङ्गः। वस्तुतस्तु अभ्यङ्गादि साहचर्य्यात् पारणदिनमात्र एव वस्त्रनिष्पीड़नादिनिषेधः। तथा मन्द-मङ्गलवारादिसाहचर्य्येन क्वचिदुक्तत्वात् द्वादश्यादौ निषेधइति यथायोगं मन्तव्यं। येन केनापि घृतसार्षपादिनापीत्यर्थः द्वादशीतरपरमिति द्वादश्यामभ्यङ्गस्य पृथग्निषेधादिति सार्षपादौ तैलपदप्रयोगो गौणः। गुर्व्वन्नं गुरुपत्नीच गुरुश्चेत्येकशेषात् तयोरन्नं न परान्नमित्यर्थः। एवं मातुलान्नं श्वशुरान्नमित्यत्राप्येकशेषात् मातुल-मातुलानीनां श्वशुरश्वश्रूणामन्नं न परान्नमित्यर्थः। अज्ञानतिमिरान्धस्येति ममेति

श्यास्य कलाद्वयं। द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणं। कलाद्वयं त्रयं वापि द्वादशी च यदा भवेत्। पारणे मरणे वापि तिथिस्तात्कालिकी स्मृता। तात्कालिकी नतूपवासादिवत्तिथ्यन्तरसहायतापि। तथा, स्वल्पायामपि राजेन्द्र द्वादश्यामरुणोदये। स्नानार्चनक्रियाः कार्य्या दानहोमादिसंयुताः। भागवतटीकायां, कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्धमेवहि। अमध्याह्नाः क्रियाः सर्व्वाः कर्त्तव्याः शम्भुशासनात्। निशीथात् महानिशायाः। विशेषतोनिशीथे च शुभं कर्म्म न शर्म्मणे। अतोविवर्ज्जयेत् प्राज्ञो दानादिषु महानिशां, इत्यनेन निशीथमहानिशयोरेकत्वश्रुतेः पूर्व्ववचनेऽरुणोदयइति श्रुतेश्च। स च कालः स्कान्दनारदीययोः। उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः। तथा हलायुधधृता स्मृतिः। प्रदोषे घटिकायुग्मं प्रभाते घटिकाद्वयं। दिनवत् सर्व्वकर्म्माणि कारयेन्न विचारयेत्। अत्राप्य-

विशेष्यमध्याहार्य्यं स्वल्पापीति पारणयोग्येत्यर्थः। दशमीविद्धाऽरुणोदयविद्धा यथा घटिकायादण्डरूपत्वे प्रमाणं पूर्व्वसंख्यानाशेनैवेति, उत्तरसंख्यायां पूर्व्वसंख्याशा प्रतिबन्धकत्वादितिभावः। तथाच तृतीयदण्डोत्पत्तौद्वित्वनाशेन त्रित्वोत्पत्ते र्दण्डद्वयाभावइति तत्र पारणं नस्यादिति पर्य्यवसितं प्रपद्येत इति तथाच पक्षान्तरे एकत्वं नास्तीति वक्तव्यमितिभावः। तस्माद्दण्डद्वयविवक्षायां दण्डत्रयात्मकद्वाभ्यां पारणाभावप्रसङ्गात्। उपलक्ष्यते इति तथा च काकेभ्यो दधिरक्षतां इत्यत्रयथाकाकपदं दध्युपघातकपरं तथाघटिकाद्वयमित्यत्र घटिकाद्वयपदं पारणयोग्यद्वादशीपरमितिभावः। पूर्व्वसंख्यानाशे नोत्तरसंख्याहेतुरसम्भवात्। किन्तु पूर्व्वसंख्याज्ञाननाशे उत्तरसंख्याज्ञानंहेतुः एको-

सामर्थ्ये कात्यायनः, सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वा तु नैत्यिकान्ते भुजिक्रिया। देवलः, सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथं। अद्भिस्तु पारणं कृत्वा पुनर्नक्तं न दोषकृत्। नक्तं नक्तव्रतं। एतदप्युपलक्षणं सङ्कटे विषमे इत्युपक्रमात्। अद्भिः पारणविधानात्तन्नियमः। द्वादश्य निर्गमे तु नारदीयं। त्रयोदश्यान्तु शुद्धायां पारणं पृथिवीफलं। शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयं। पारणं तुलसीमिश्रितनैवेद्येन कुर्य्यात्। तथाच स्कन्दपुराणं, कृत्वा चैवोपवासन्तु भोक्तव्यं द्वादशीदिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनं। अस्य व्रतस्य, न व्रतिनां व्रते इति विष्णुवचनादशौचेऽपि कर्त्तव्यता। अत्र व्रतिनामारब्धव्रतिनामित्यर्थतया अशौचे आरम्भो न कार्य्यः। विष्णुधर्म्मोत्तरे। असम्भाष्यान्हि सम्भाष्य

द्वावित्यप्रयोगात् एको न द्वावित्यादिप्रयोगाच्च स च कार्य्यकारणभावः प्रत्यक्षमन्तर्भाव्यैवेति, शास्त्रतो घटिकाद्वयद्वादश्यां पारणप्राप्तौ ज्योतिःशास्त्रतो घटिकात्रयद्वादशीज्ञाने घटिकाद्वयस्यापि ज्ञानं तत्र पारणप्रवृत्तुरपपत्ते रित्यभिप्रायेणाह तत्रेति। ननु पशुना यजेत इत्यत्र पशुद्वयेनापि यागसम्बन्धः स्यादिति अत्राह पशुनेति, एकत्वं अद्वितीयत्वरूपं। द्वित्वव्यवच्छेदः पशुद्वयेन यागव्यवच्छेदः। कलाद्वयं त्रयं वापीति नारदवचने वाकारोऽनास्थायां अनास्था च द्वित्वादिसंख्यायां तदुपादानञ्च पारणयोग्यद्वादश्यां द्वादशीपदस्य लक्षणाग्राहकं इत्यभिप्रायेणाह अत्र तु द्वादशीपारणेतु। जलेनेति दण्डद्वयनियमे नित्यक्रियां कृत्वापि पारणसम्भवादितिभावः। न नियमः न नियमितं। महानिशाया इति महानिशा च विज्ञेया मध्यमं प्रहरद्वयमिति वचनात् प्रहरत्रया-

तुलस्याः कलिकादलं। आमलक्याः फलं वापि पारणे प्राश्य शुध्यति। संवत्सरप्रदीपे, यस्य नाभौस्थितं पत्रं मुखे शिरसि कर्णयोः। तुलसीसम्भवं नित्यं तीर्थैस्तस्य मखैश्च किं। युक्तोयदि महापापैः सुकृतं नार्जितं यदि। तथापि मीयते मोक्षस्तुलसी भक्षिता यदि। विद्याकरधृतानि, यः कश्चिद्वैष्णवोलोके मिथ्याचारोऽप्यनाश्रमी। पुनाति सकलान् लोकान् शिरसा तुलसीं वहन्। विष्णोः शिरःपरिभ्रष्टां भक्त्या यस्तुलसीं वहेत्। सिध्यन्ति तस्य कार्य्याणि मनसा चिन्तितान्यपि। न धारयन्ति ये मालां तुलसीकाष्ठसम्भवां। नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेः। अरुद्राक्षधरोभूत्वा यद्यत् कर्म्म च वैदिकं। करोति जपहोमादि तत् सर्व्वं निष्फलं भवेत्। स्कान्दे, ध्यानधारणहीनोऽपि रुद्राक्षं धारयेत्तु यः। सर्व्वपापविनिर्म्मुक्तः स याति परमां

दूर्द्धमित्यस्याशि तथापि एवशब्दहिशब्दाभ्यां वचनान्तरप्रामाण्यारुणोदयकालमेव लक्षयन्ति तेन सार्द्धप्रहरत्रयोर्द्धकाले क्रियाकर्त्तव्यतोक्तेतिभावः। ननु निशीथपदं मध्यरात्रदण्डद्वये रूढ़ं तदेव कथं न विवक्षितं इत्यत आह पूर्व्ववचनश्रुति, तथाच तदेकवाक्यतया निशीथपदेन महानिशा न विवक्षिता अन्यथा नानाश्रुतिकल्पनापत्तेरितिभावः। नन्वरुणोदयपदस्यैव लक्षणया निशीथोर्द्धकालपरमित्यपि वक्तुं शक्यते इत्यत आह हलायुधधृतास्मृतिरपीति, तन्नियमः द्वादश्यां पारणनियमः। तन्नियमोऽपि पारणदिने द्वादशीसत्त्व एव तदसत्त्वेत्वाह द्वादश्यनिर्गमेत्विति पारणमिति कल्केतिशेषः। पारणीति क्वचित्पाठः पारणी पारणविशिष्टः पृथिवीफलं पृथिवीदानफलं शिरइत्युपलक्षणं तुलसीकाष्ठसम्भूतामिति अत्र सर्व्ववर्णसाधारणोनित्याधिकारः वैष्णवामृते भगवत्समीपे ब्राह्मणस्य

मतिं। तथा, कृत्वा चैवोपवासन्तु भोक्तव्यं द्वादशीदिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनं (८२)।

अथ स्वदत्तनैवेद्यभक्षणं। ननु स्वदत्तस्याविनियोज्यत्वात् स्वदत्तनैवेद्यं कथं भुञ्जीतेति चेत् वचनात् तथा यथा स्वदत्तेऽपि क्रयणात् स्वोपयोगः। तथाचाश्वमेधिके पर्व्वणि युधिष्ठिरं प्रति व्यासवचनं, दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहं। हिरण्यं दीयतामेभ्यो ब्राह्मणेभ्योधराऽस्तु ते। यथा वा मध्यमपिण्डभोजनं पत्न्याः, तथाच यमः, स्नाता वै मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता। शङ्खलिखितौ, पत्नी वा मध्यमं पिण्डमश्नीयादार्त्तवस्नाता। वायुपुराणे, पत्न्यै प्रजार्थं दद्याद्धि मध्यमं मन्त्रपूर्व्वकं। सामगानां मन्त्रस्तु। आधत्त पितरोगर्भं कुमारं पुष्करस्रजं। यथेह पुरुषः स स्यात्तथा कुरुत सत्तमाः।

---

चन्द्रशर्म्माख्य नियमधारणं यथा, पूजाच तुलसीपत्रैर्मया कार्य्या सदैवहि। तुलसीकाष्ठसम्भूता माला धार्य्या सदा हरेरिति। अरुद्राक्षधरः रुद्राक्षधारणहीनः। निष्फलम्भवेदिति एतेन रुद्राक्षधारणस्य कर्म्ममात्राङ्गत्वमुक्तं (८२)।

अविनियोज्यत्वात् स्वस्वत्वाभावेन विनियोगानर्हत्वादिति, व्यासानुमत्या हिरण्यदानेन धरायाग्रहणस्य क्रयरूपत्वेन पुनः स्वत्वोत्पादनात् तत्र स्वीयत्वेन व्यवहारो न दोषाय, विष्णुमुद्दिश्य दत्तद्रव्ये प्रतिदानाभावेन कथं तत्र विनियोजत्वमतोऽनुरूपं स्थलमाह यथावेति मध्यमं पिण्डं पितामहपिण्डं। पत्नीवेति वाकारः पक्षान्तरमाह तेन गोऽजविप्रेभ्योदद्यादित्यर्थः। आर्त्तवस्नाता ऋतुस्नाता। ननुपत्न्याभोजनेऽपि स्वविनियोगासिद्धिरत आह पत्न्यै प्रजार्थमिति। तथाच पत्नी न.

मत्स्यपुराणे, पत्नीन्तु मध्यमं पिण्डमाशयेद्विनयान्विता। आधत्त पितरोगर्भं मन्त्रः सन्तानवर्द्धनं। एषमन्त्रः पौराणिकत्वात् साधारणः। प्रकृते तु विष्णुधर्म्मोत्तरे, पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधं। अनिवेद्य न भुञ्जीत यदाहाराय कल्पितं। अनिवेद्य हरेर्भुञ्जन् सप्त-जन्मानि नारकी। स्मृतिः, भक्तये चणं चणोविष्णोः स्मृतिः सेवा स्ववेश्मनि। स्वभोजास्यार्पणं दानं फलमिन्द्रादि-दुर्लभं। स्वभोज्यस्य मनूक्तवैश्वदेवाद्यवशिष्टरूपस्य यथा, अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्। यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते। भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि। भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती। अतएव स्मृतिः, यस्य चाग्नौ न हूयेत यस्य चाग्रं न दीयते। न तद्भोज्यं द्विजातीनां भुक्त्वा तूप-वसेदहः। शङ्ख-लिखितौ,

स्वयं गृहीत्वा भुङ्क्ते किन्तु पिण्डदात्रा पत्या दत्तमिति दातु-रेव विनियोग इतिभावः। सन्तानवर्द्धनमिति मन्त्रं पठित्वा पिण्डं दत्त्वेति शेषः। नन्वत्र वचनबलात् स्वदत्तस्य पुनरुपयोगोऽस्तु देवदत्त-स्थलेपुनरुपयोगे प्रमाणाभावात्। देवे दत्त्वा च दानानि देवेदत्त्वा च दक्षिणां। तत् सर्व्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेदित्यादि-वचनबोधाच्च कथं स्वोपयोगः इत्यत आह प्रकृतेत्विति, दानानि देयानि। हविर्भोजामन्त्रादि, भक्तेरुत्सवं भक्त्यादर्शनं विष्णोः क्षण उत्-सवः। भक्तक्षण इति पाठे भक्तानामुत्सवः विष्णोरुत्सवइत्यर्थः भक्ते-क्षणेन विष्णुभक्तदर्शनेन क्षण उत्सव इति वस्तुगतिः। अशनं अश-नीयं भृत्येषु भरणीयेषु अतिथ्यादिषु विप्रेषु श्राद्धभोजिष्वित्यादिः यस्य द्रव्यस्याग्रं अग्रभागरूपं न हूयेत यस्य चाग्रं न दीयते द्विजानां

न तदश्नीयाद्यदन्नं देवपितृमनुष्यार्थं न कुर्य्यादिति। अत्र पित्रर्थमित्यनेन पितृबलिनिःयश्राद्धावशिष्टं प्रतीयते। व्यक्तं मार्कण्डेयपुराणे, देवतातिथिभृत्येषु भूतेष्वभ्यागतेषु च। अभुक्तवत्सु येऽश्नन्ति तद्वत् पित्रग्निपक्षिषु। दुष्टान्नपूयनिर्यासभुजः सूचीमुखास्तु ते। जायन्ते गिरिवर्ष्माणः पश्यैते यादृशानराः। नरा इत्यत्र कर्म्मकर्त्तृत्वोभयप्राप्तौ कर्त्तृत्वमेव। अपादानसम्प्रदानकरणाधारकर्म्मणां। कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते, इति संक्षिप्तसारात्। ततश्च तदन्नं विष्णवे निवेद्य भोक्तव्यं। यत्तु, पितृशेषन्तु योदद्याद्धरये परमात्मने। रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः, इति भागवतोक्तं तत् पितृदत्तप्रतिगृहीतविषयमिति। मत्स्यसूक्तं, अनिवेद्य न भोक्तव्यं मत्स्यमांसादिकञ्च यत्। अन्नं विष्ठा पयोमूत्रं यद्विष्णोरनिवेदितं। अनेन स्वभोज्यं मत्स्यमांसादि देयमित्युक्तं। प्रागुक्तविष्णुपुराणवचनेनानेवंविधं निषिद्धमित्यविरोधः। अतएवायोध्या-

---

तद्द्रव्यं न भोक्तव्यमित्यन्वयः। देवतातिथीत्यत्रातिथिपदं पूर्व्वाज्ञातपरमिति न पौनरुक्त्यं। भूतेषु वस्युक्तेषु तद्वत् अभुक्तवत्सु। नरा इत्यस्य जायन्ते इति क्रियाकर्त्तृत्वं पश्यैति क्रियाकर्म्मत्वमिति कर्त्तृविभक्तिकर्म्मविभक्त्योः सन्देह इति, अत्राह नरा इत्यत्रेति, कर्म्मत्वं कर्म्मविभक्तिः कर्त्तृत्वं कर्त्तृविभक्तिः। श्रीभागवतोक्तं तट्टीकाकृत् स्वामिपादोक्तमिति। पितृदत्तेति, पितुरुद्देशेन दत्तेत्यर्थः तथाच पितृशेषपदं पितृदत्तपरमितिभावः। न विरोधइति, अतएव स्वयं भोज्यस्य देयत्वादेव नन्वेतावता स्वयं भोज्यस्य देयत्वमुक्तं नतु पूजादौ दत्तस्य स्वयं भोज्यत्वमित्यतस्तदपि साधयति हृदि रूपमिति, अच्युतः भगवत्पादान्न

काण्डे श्रीरामवाक्यं। यदन्नः पुरुषोराजं स्तदन्ना-स्तस्य देवताइति। भागवते। त्वयोपभुक्तस्रग्गन्ध-वासोऽलङ्कारचर्च्चिताः। उच्छिष्टभोजिनोदासास्तव मायां जयेमहि। तथा, हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः पादोदकञ्च निर्म्माल्यं मस्तके यस्य सोऽच्युतः। तत्रैव षष्ठस्कन्धीय पयोव्रते, उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः। अद्यादात्मविशुद्ध्यर्थं सर्व्वकामसमृद्धये। उद्वास्य विसृज्य। अत्र चित्तशुद्ध्यादिफल-कथनादन्यत्रापि भोजनाग्रतः स्वदत्तनैवेद्यभक्षणमव-गम्यते। अन्यथा व्रताङ्गत्वे फलानुपपत्तिः। अष्टम-स्कन्धेऽपि, गन्धपुष्पादिभिश्चार्च्चेद्द्वादशाक्षरविद्यया। शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति। ससर्पिः सगुड़ं दत्त्वा जुहूयान्मूलविद्यया। निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयं (८३)।

यत्तु, देवद्विजद्रव्यापहर्त्ताऽप्सु निमग्नोऽघमर्षण-मावर्त्तयेत्, इति सुमन्तूक्तं। अपि दीपावलोकं मे

च्युतः भगवत्तुल्योवा अन्यत्रापि व्रताकरणस्थलेऽपि अन्यथा व्रत-मात्रपरत्वे फलानुपपत्तेः व्रतफलानुपपत्तेरेव वक्तव्यतापत्तेर्नैत्वात्मशुद्धे-रितिभावः (८३)।

अतएव उपयुज्यमानद्रव्यस्य ग्रहणनिषेधादेव, न निर्म्माल्यमिति, एवञ्च यावन्निर्माल्यं न भवति तावदग्राह्यमितिभावः। नैवेद्यभक्षणा-दिति, एवञ्च देवे दत्त्वा तु दानानीत्यादिकमतिरिक्तदानपरमिति, अत सन्तोषताः। पितृशेषन्तु योदद्यादित्यत्र शेषपदं न दत्तपरं किन्त्ववशेष-परं मुख्यार्थत्वात् अतएव संवत्सरप्रदीपे तद्वचनं प्रागुक्ता विष्णो-र्निवेदितान्नेन यष्टव्यं देवतान्तरं पितृभ्यश्चापि तद्देयं तदानन्त्याय

सौभ्युञ्जयान्निवेदितमिति श्रीभागवतीयञ्च तद्देवोपभुज्य-मानद्रव्यपरं। अतएव योगिनीतन्त्रे, मणिमुक्ता-सुवर्णानां देवदत्तानि यानि च। न निर्म्माल्यं द्वाद-शाब्दं ताम्रपात्रं तथैव च। पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः। मोदकं कृषरञ्चैव यामार्द्धेन महेश्वरि। पट्टवस्त्रं त्रिमासञ्च यज्ञसूत्रं त्वहः स्मृतं। यावदुष्णं भवेदन्नं परमान्नं तथैव च। विसर्जनीये देवे तु विसर्जनात्तदीयद्रव्यप्रतिपत्तिव्यवहारः। संवत्-सरप्रदीपे ब्रह्मपुराणं। अम्बरीष नवं वस्त्रं फलमन्नं रसादिकं। कृत्वा कृष्णोपभोग्यञ्च सदा सेव्यं हि वैष्णवैः। अम्बरीष हरेर्लग्नं नीरं पुष्पं विलेपनं। भक्त्या

कुर्य्यादिति वचने निवेदितान्नेनेत्यत्र निवेदितशेषान्नेनेदतिव्याख्यानं पितृदत्तशेषप्रतिगृहीतविषयत्वेऽपि यत्पितृद्देश्यकदत्तं हरौ दीयते तत्-पितृकर्म्मशभागित्वानुपपत्तेश्च विष्णोर्निवेदितान्नेन देवतान्तरयागपितृपूजा-विधानानन्तरं पितृशेषन्त्विति वचनेन पितृदत्तदाननिषेधे देवतान्तरदत्त-दाननिषेधानुपपत्तेरिति अतएव यज्ञेश्वराय श्राद्धाग्रभागोदीयते। उच्छिष्टभोजिनोदासा इत्यादि वचनैः श्रीकृष्णाय दत्ते श्रीकृष्णोच्छिष्टत्व कथनाद्देवोद्देश्यकदत्तमात्रे तद्देवोच्छिष्टत्वावगमाद्देवतान्तरनिवेदितस्य श्रीकृष्णनिवेदितस्य च न पुनः श्रीकृष्णनिवेदनप्रसक्तिः एवं मणिमुक्ता-देरपि निर्म्माल्यताकथनेन देवतानिवेदितस्यादेरपि न पुन र्निवे-दनं देवता च सनिर्म्माल्या हन्ति पुण्यं पुराकृतमित्यादिवचनादिति। तथा पितॄणामपि श्राद्धभोक्तृत्वश्रुतेस्तदन्नस्यापि तदुच्छिष्टतदैव देवसा-मान्येभ्यश्च पितृभ्यश्च न पुनर्देयमिति कथं विशेषे विशेषेण पितृ-द्देश्यकदत्तगृहीतदाननिषेधाय पितृशेषन्त्विति वचनमिति। निरुक्त-वचनान्येवं व्याख्येयानि तत्र हत्याकोटीविनाशनमित्यादिफलश्रुतिबोधक-वचनैस्तत्तत्फलकामो विष्णुनैवेद्यं भक्षयेदिति नरमात्रनियोजको विधिः

न धत्ते शिरसा चाण्डालादधिकोहि सः। तथा, अग्निष्टोमसहस्रैश्च वाजपेयशतैस्तथा। तुल्यं फलं भवेद्देवि विष्णोर्नैवेद्यभक्षणात्। मत्स्यसूक्ते, एकान्त भक्तोदेवस्य भोजनादौ मनोरमे। श्रुत्वा परैरितं नाम मुच्यते दिनकिल्बिषात्। स्त्रीशूद्रोक्तं न शृणुयादभावे त्रिर्जपेत् स्वयं। तत्र मन्त्रः। उच्छिष्टभोजिनस्तस्य वयमुच्छिष्टकाङ्क्षिणः। येन लीलावराहेण हिरण्याक्षोनिपातितः। तथा, पादोदकञ्च निर्म्माल्यं नैवेद्यञ्च विशेषतः। महाप्रसादइत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः। पादोदकग्रहणे मन्त्रः, कृष्ण कृष्ण महावाहो भक्तानामार्त्तिनाशन। सर्व्वपापप्रशमनं पादोदकं प्रयच्छ मे।

कल्प्यते तत्र च नैवेद्यं स्वदत्तं परदत्तं वेति गम्यते, तत्रच परदत्तभोजने न विप्रतिपत्तिः स्वदत्तस्य पुनर,दानसम्पत्तये हृदि,रूपमित्यादि वचनं स्वदत्तमपि द्विविधं विष्णुमुद्दिश्यैव पूजादौ दत्तं स्वभोजनार्थं कल्पितदत्तञ्चेति तत्राद्यं मुख्यं तत्र पवित्रं विष्णुनैवेद्यमित्यादि बहुतरवचनं द्वितीयमपि विष्णौ समर्पणे विहितं प्रतिषिद्धञ्चेति द्विविधं तत्र स्वभोज्यस्यार्पणमित्यादि यद्यदिष्टतमं लोके इत्यादि, मत्स्य-मांसादिकञ्चेत्यादिवचनं साधकं मत्स्यमांसादिकञ्चेत्यत्रादिपदेन भक्ष्यत्वेन शास्त्रविहितद्रव्यग्रहणं नतु लसुनादेः भक्ष्येष्वपि विष्णौ यद्द्रव्य-समर्पणे दोषश्रवणं तत् स्वभोज्यमपि न देयं एवञ्च पितृशेषाम्नदाने दोषश्रवणात् कथं देयतेति स्वभोज्यार्पणमित्यत्र स्वभोज्यपदस्य वैश्वदेवाद्यवशिष्टेतरस्वभोज्यपरत्वाद्वैश्वदेवाद्यवशिष्टभिन्नस्य विष्णोर्देयत्वे देवतार्थत्वेन भोज्यत्वाच्चतेः नहि वैश्वदेवाद्यवशिष्टमेव भोज्यं नत्वन्यदितिवक्तुं शक्यते विष्णुनैवेद्यस्याप्यभोज्यत्वापत्तेः। यज्ञशिष्टाशिनः यज्ञावशिष्टे काले विहितं येऽश्नन्ति ते इति श्रीधरस्वामिचरणै र्व्याख्यातञ्च वैश्वदेवाद्यवशिष्टभोजनं हि वर्णाश्रमाचारविहितं सामान्यं नैवेद्य

संहारणमन्त्रः, अकालमृत्युहरणं सर्व्वव्याधिविनाशनं। विष्णोः पादोदकं पुण्यं शिरसा धारयाम्यहं। तन्त्र-मन्त्राणामनुष्ठानकरणत्वेन विधानात् पूर्व्वसिद्धस्यैव करण-त्वान्मन्त्रान्ते कर्म्मारम्भः। तीर्थकाण्डकल्पतरौ नरसिंह-पुराणं, गङ्गाप्रयागगयनैमिषपुष्कराणि पुण्यानि यानि कुरुजाङ्गलयामुनानि। कालेन तीर्थसलिलानि पुनन्ति पापात् पादोदकं भगवतस्तु पुनाति सद्यः। पद्मपुराणे, ये पिबन्ति नरानित्यं शालग्रामशिलोदकं। प्रक्षालय-न्त्यसन्दिग्धं ब्रह्महत्यादिपातकं। वशिष्ठसंहितायां, शालग्रामशिलातोयमपीत्वा यस्तु मस्तके। प्रक्षेपणं प्रकु-

भक्षणं हि मोक्षसाधनतया ततो बलवद्विशेषः यदि च वर्णाश्रमाचार वतेत्यादिना वैष्णवस्यापि तदाचरणं तथापि वर्णाश्रमाचारविहितपञ्च यज्ञावशिष्टस्याशनमुक्तं तदङ्गतयाविधेयं तच्च नियमरूपं हुतशेषं भक्ष-येत् श्राद्धशेषं भक्षयेदित्यादिविधिवचनात् यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते, इत्यादिस्मृतौ तथैव बोधनाच्च यस्यचाग्रं नहूयेतेत्यादि-वचने च यस्येत्यत विष्णुनैवेद्येतरस्वं विशेषणन्देय मन्यथा विष्णुनैवेद्य-भक्षणबाधापत्तेः विष्णुपूजनस्य पितृपूर्व्वमेव विहितत्वात् परदत्तविष्णुनैवेद्य भोजनानुपपत्तेश्च सर्व्वत स्वार्थमात्रपक्कान्नादिभोजननिषेधे तात्पर्य्यात् देवतातिथिभृत्येष्विति मार्कण्डेयपुराणवचनञ्च देवतापूजादिनिमित्तता साधकमेव नतु तदवशिष्टातिरिक्तद्रव्यभोजननिषेधकं न च श्राद्धशेषसत्त्व एव तद्भोजनं प्रतिपत्तिरूपकर्म्माङ्गस्य प्रतिपाद्याभावे निवृत्तिदर्शना-दिति शेषसत्त्वे तद्भोजनमावश्यकं कथमन्यथा नित्योपवासस्थले पितृ-शेषघ्राणस्य विधानं सङ्गच्छते ततश्च हरये तन्निवेदनाशक्यत्वात् अन्नं विष्ठेत्यादिवचनविरोध इति वाच्यं, हरयेऽनिवेदितभोजननिषेधवाक्ये कर्म्माङ्गाचमनीयजलपानेतरवत् कर्म्माङ्गपितृशेषकणिकाभोजनातिरिक्त त्वस्य विशेषणीयत्वात् नहि यथेष्टशेषभोजन मङ्गं कुत्राप्यश्रुतत्वात् कृत-नैवेद्यभोजननियमे वैष्णवे नं भोजनमेव पितृशेष मन्नं नैवेद्य मेव पञ्चयज्ञावं-

र्व्वीत ब्रह्महा स निगद्यते। स्मृतिः, नैवेद्यप्राशनात् पूर्व्वं देवपादोदकाहुतिः। होतव्या जठरे वह्नौ स्वेन पाणितलेन तु। तेन पादोदकेनापोशानं कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या। बह्वृचगृह्यपरिशिष्टे, पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतं। अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्। अग्राह्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलं। शालग्रामशिलास्पर्शात् सर्व्वं याति पवित्रतां। कालिकापुराणं, योयद्देवार्च्चनरतः स तन्नैवेद्यभक्षकः। केवलं सौरशैवे तु वैष्णवोनैव भक्षयेत्। सामान्यं त्वन्यनैवेद्यं भक्षयेदन्य-

मानएव तैर्भोक्तव्यमिति। वस्तुतो वैष्णवैः श्राद्धशेषोन रक्षणीयः शेषसत्त्वएव तद्भोजननियमात् शेषसत्त्वे किं कार्य्यमित्याकाङ्क्षायामेव शेषभोजनविधानादिति तेषां शेषाभोजनेऽपि नक्षतिरिति पितृशेषन्तूपलक्षणमुपयुक्तावशिष्टमेव विष्णवे न निवेद्यं व्यवहारोऽपि तथैति सर्व्वं समञ्जसं, यद्विष्णोरनिवेदितमित्यत्र तत्स्वरूपभूततत्तद्देवतान्तरपरिग्रहः शिवस्य तदभेदेऽपि तन्नैवेद्यभोजननिषेधोवाचनिक इति। हरिभक्तिविलासमतन्तु भगवत् प्रसादेनैव श्राद्धादि कार्य्यं विष्णोर्निवेदितान्नेनेति वचनात् न ददाति हि योविप्रः पितॄणां श्राद्धकर्म्मणि। तद्भुक्तमन्नंतीर्थञ्च तत् सर्व्वं विफलम्भवेत्। कल्पकोटिसहस्राणि कल्पकोटिशतानि च। पतन्ति पितरस्तस्य नरके पूयशोणिते, इति पद्मपुराणीयभृगुवाक्याच्च तन्मते न कोपि विरोध इति, भोजनादौ भोजनादिसमये तदानीं स्वयमुच्चारणायोगात् अभावे विशिष्टनामवक्तुरभावे। विर्ज्जयेदिति भोजनादि प्रागित्यर्थः भोजनादावित्यादिना पानशयनादिपरिग्रहः भोजनस्यादाविति व्याख्याने परेरितनामश्रवणस्य मुख्यकल्पत्वासम्भवात् स्वयमसामर्थ्य एव प्रतिनिधिदानात्। देवस्य नामेत्यनुषङ्गेनान्वयः। तस्य विष्णोरुच्छिष्ट भोजिनोभक्ता स्तेषामुच्छिष्टकाङ्क्षिणोवयमित्यर्थः इदञ्च भक्त्यतिशयद्योतनार्थं भगवदुच्छिष्टाकाङ्क्षा च कैमुतिकन्यायेनोक्तेति भावः।

दैवतः। भविष्ये, निर्म्माल्यं नोभयोर्भोक्तव्यं रुद्रस्य तपनस्य च। उपयुज्य च तन्मोहान्नरके पच्यते ध्रुवं। अतएव पुरश्चरणचन्द्रिकायां, सुषुम्नावर्त्मना पुष्पमाघ्रायोद्वासयेत् सुधीः। निर्म्माल्यं मस्तके धार्य्यं सर्व्वाङ्गेष्वनुलेपनं। नैवेद्यञ्चोपयुञ्जीत दत्त्वा तद्भक्तिशालिने। नन्दिकेश्वरपुराणे, दत्त्वा नैवेद्यवस्त्राणि नाददीत कदाचन। त्यक्तव्यं शिवमुद्दिश्य तदादाने न तत्फलमिति शिवदत्ते विशेषः। स्मृतिः, ब्रह्मचारिगृहस्थैश्च वनस्थयतिभिः सह। भोक्तव्यं विष्णुनैवेद्यं नात्र कार्य्या विचारणा। एवञ्च, यद्धन्तकारं नैवेद्यं भुक्त्वा कृच्छ्रं यतिश्चरेदिति वचनं तद्विष्णुनैवेद्येतरपरं (८४)।

अकालमृत्युहरणमिति। पापविशेषणाजामिलादेरिवोपस्थितोयो मृत्युस्तद्धरणमित्यर्थः तेन नाकाले म्रियते कश्चिदित्यनेन न विरोधः। अनुष्ठानकारणत्वात् अनुष्ठानसाधनत्वात् अनुष्ठानं तत्तत्क्रिया। कुरुजाङ्गलेति तत्तद्देशस्थतीर्थसम्बन्धीत्यर्थः पवित्रं सर्व्वेषां पावनं चान्द्रायणं चरेदिति वैष्णव इतिशेषः, समानत्वन्यनैवेद्य मित्युक्तः, अन्यदेवस्य नैवेद्यमित्यत्र स्वयं दत्तमिति विशेषणं पूरणीयमिति साम्प्रदायिकाः। शालग्रामशिलास्पर्शादिति शालग्रामशिलायां यदि शिवं पूजयति तदा सर्व्वं ग्राह्यमिति, तिथितत्त्वे व्याख्यातं। शिवोपासकेन शिवनैवेद्यं भक्ष्यमित्यभिप्रायेणाह योयद्देवार्च्चनरतइति। तन्नाशयेत् स्वहृदि स्थापयेत् तद्भक्तिशालिने निर्म्माल्यसेविविष्वक्सेनप्रभृतये। हन्तकार माह मार्कण्डेयपुराणं। भोजनं हन्तकारम्वा अग्रं भिक्षा यथापि वा। अदत्त्वा नैव भोक्तव्यं यथाविभवमात्मनः। ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयं। अग्राच्चतुर्गुणं प्राहुर्हन्तकारं मनीषिणः। ग्रासः पलमात्रमिति नव्यवर्द्धमान इत्याह्निकतत्त्वं हन्तकारमित्युपलक्षणं। नैवेद्यं देवनिवेदितं यद्वा हन्तकारं देवनिवेदितं हन्तशब्दस्य त्यागार्थकत्वादिति (८४)।

अथ जलाशयोत्सर्गः। तत्र, प्रदद्यात् सर्व्वभूतेभ्यो जलपूर्णं जलाशयमिति मत्स्यपुराणवचनाज्जलाशयोत्सर्गस्य सर्व्वभूतसम्प्रदानकत्वे नापकृष्टचेतनोद्देश्यकत्वादुद्देश्यगतस्वामित्वाजननाद्यागत्वं। तथाच श्राद्धविवेकः, देवतोद्देश्यकद्रव्यत्यागोयागः। देवतात्वञ्च वेदमेयत्यागोद्देश्यत्वं। उद्देश्यत्वञ्च तस्येदमित्यारोपज्ञानविषयत्वमिति। अतएव जलाशयोत्सर्गमुपक्रम्य मत्स्यपुराणे, प्राप्नोति तद्यागबलेन भूयइति यागत्वेनाभिहितं। ततश्च तज्जलं स्वस्वत्वदूरीकरणेन नद्यादिवत् साधारणीकृतं। सामान्यं सर्व्वभूतेभ्यो मया दत्तमिदञ्जलं। रमन्तु सर्व्वभूतानि स्नानपानावगाहनैरिति

प्रसङ्गादाह अथजलाशयोत्सर्ग इति। सर्व्वभूतेभ्यः सर्व्वप्राणिनश्च उद्दिश्य प्रदद्यात् त्यजेदिति सर्व्वभूतोद्देश्यकत्वेन। अपकृष्टेति पश्वादिरूपेत्यर्थः। यद्वा विप्रकृष्टेत्यर्थः प्रतिग्रहरहितः पर्य्यवसितः, उद्देश्यगतेति। तथाच प्रतिग्रहस्य स्वामित्वहेतुत्वेन तदभावान्न स्वत्वजनकत्वं जलाशयोत्सर्गस्येतिभावः। वेदमेयेति वेदबोधितेत्यर्थः तस्येदमित्यारोपः तदंशे एतत्स्वत्वभागितारोपः तत्स्वत्वाभाववति तत्स्वत्वप्रकारक इतियावत् तथाच देवानां स्वत्वाभावेऽपि स्वत्वभागितया तदुद्देश्यकविसंवादीच्छाविशेष एव यागइतिभावः। लक्षणन्तु विधिबोधितस्वजन्यस्वत्वाभाववन्निष्ठस्वत्वप्रकारतानिरूपितोद्देश्यताकत्यागोयागइति त्यागश्च स्वस्वत्वनाशकेच्छा उद्देश्यताविषयताविशेषः अतएव श्राद्धस्य पित्रपेक्षया यागत्वं पितॄणां स्वत्वाभावात् ब्राह्मणापेक्षया दानत्वं ब्राह्मणस्वत्वजननादिति शूलपाणिमतानुसारादुक्तं चेत्यत्रत्याद्युद्देश्यकत्यागवारणाय वेदमेयेति। अथ देवानां पितॄणाञ्चचेतनत्वात् स्वत्वं मा भवतु जलाशये त्यागानन्तरस्नानकर्तृत्वपादानेन स्वत्वजननात् कथं स्वत्वारोपः नच सर्व्वभूतानां स्वत्वाजननात् सर्व्वभूतेषु स्वत्वभागित्वोद्देशेनारोपइति वाच्यं तथापि

मन्त्रलिङ्गादुपादानं विना कस्यापि न स्वत्वमिति। तत-
श्चान्ययागवदुत्तरप्रतिपत्तेरश्रुतत्वेन साधारणजलस्य परि-
ग्रहमात्रेण गोतमोक्तेन स्वामित्वश्रुतेर्यजमानस्यापि तथा-
त्वेन स्वामित्वात्तत्र स्नानादावदोषइति। तथाच
गोतमः, स्वामी ऋक्थक्रयसम्विभागपरिग्रहाधिगमेषु।
ब्राह्मणस्याधिकं लब्धं चत्रियस्य विजितं निर्व्विष्टं वैश्य-
शूद्रयोरिति। परिग्रहोऽनन्यपूर्व्वस्य जलतृणकाष्ठादेः

यं ब्राह्मणमुद्दिश्य धनं त्यक्तं तद्ब्राह्मणस्यदैवादसन्निधानादिना स्वीकारा-
भावात् तत्र त्यागस्य यागत्वापत्तिरिति अहन्यहनि ब्राह्मणाय दद्यादिति
विधिबोधितस्यापि तत्र सत्त्वात्। तथाच दानमेवस्वत्वजनकं देवानां
पितॄणाञ्च चैतन्याभावाच्चैतन्यस्यापि स्वत्वहेतुतया न तेषां स्वत्वमिति
देवाद्युद्देश्यकत्यागस्य यागत्वमिति जलाशयोत्सर्गस्य दानत्वमेव नतु
यागत्वमितिचेन्न देवानां पितॄणाञ्च तृप्त्यादिफलश्रुतेः फलदातृत्वचेतनत्वा-
दिश्रुतेश्च चैतन्याङ्गीकारेऽपि तेषां प्रतिग्रहाभावान्न स्वत्वमिति सिद्धान्तात्
यत्र मृतब्राह्मणादिकमुद्दिश्य दत्तं तादृशस्थले परस्वत्वाभावेन दान-
लक्षणाभावात् यागत्वस्वीकाराच्चेति वस्तुतो यजिदेवपूजायामिति
वैयाकरणानुशासनात् मन्त्रकरणकप्रीतिहेतुद्रव्यत्यागो-यागलक्षणं।
तत्रैवमुख्यप्रयोगः परमेश्वरस्य प्रीत्यनुपगमे प्रीत्युद्देश्यकसमन्त्रकद्रव्यत्याग
एव यागइति वक्तव्यं समन्त्रकत्वविशेषणात् पित्रादिप्रीत्युद्देशेन द्रव्य-
त्यागे न तन्नप्रयोगः। देवपूजादौ देवताप्रीतिमुद्दिश्य एव द्रव्यत्यागान्न-
देवानां तत्रस्वत्वं पूजाराधनादिपदवाच्यायां गौरवित-प्रीतिहेतुक्रिया-
यामपि यागपदस्य निरूढ़ा गौणी लक्षणा तत्रगौरवितत्वं भक्तिविषयत्वं।
भक्तिश्चभजामीतिप्रतीतिसिद्धो नीचविषयकसमूहालम्बनव्यावृत्तोमानस-
ज्ञानविशेषः यत्र च द्रव्यस्य स्वत्वभागिता मुद्दिश्य द्रव्यं त्यजति तत्र
दानमेव। जलाशयोत्सर्गादौ सर्व्वभूतस्वत्वमुद्दिश्य न त्यागः किन्तु
सर्व्वभूतानां स्नानपानादिना प्रीतिमुद्दिश्येति तत्र न सर्व्वभूतानां स्वत्वं
न वा तत्र ददाति प्रयोगः। गौरवित-प्रीतिहेतुत्वेऽपि तत्र त्यागस्य भक्ति-

स्वीकारइति मिताक्षरा। वृत्त्यधिकारे व्यक्तमाह प्रस्तस्वः, दायाद्यं शिलोञ्छौ चान्यद्वापरिगृहीतमिति। अपरिगृहीतमिति, अपरिगृहीतमन्यास्वीकृतं अस्वामिकमिति यावत्, निर्द्दिष्टं वेतनलब्धं निर्वेशोभृतिभोगयोरित्यमरत्रिकाण्डशेषयोः ( ८४ )।

अथ रजस्वलासूतकिनोर्व्रतं। पुलस्त्यः, एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि। नारी विधवा। सधवाया-निषेधात्। तथाच विष्णुः, पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्। आयुष्यं हरते पत्युर्नरकञ्चैव गच्छति। तथाच, बहुकालिकसङ्कल्पोगृहीतश्च पुरा

प्रयोजकत्वाभावात् न पूजादि व्यवहारः, पूजादिपदवाच्यतया भक्तिप्रयोजक प्रीतिहेतुत्यागरूपक्रियायाविवक्षितत्वात् दानस्थले प्रीतेरनुद्देश्यत्वात् ददाति इत्यत्र न पूजयतीति प्रयोगः। न च जलाशयोत्सर्गस्य मन्त्रकरणकत्वाभावात् न यागत्वमिति, कथं, प्राप्नोति तद्यागबलेन भूय इति यागत्वाभिधानमिति वाच्यं प्रीत्युद्देश्यकत्वेन स्वत्वाजनकत्वेन च साम्यात् गौणलक्षणया तत्र प्रयोगात् यागाङ्गत्वेन यागत्वातिदेशाद्वेति। साधारणीकृतं सर्व्वभूतानामौपादानिकस्वत्वयोग्यंकृतं मन्त्रलिङ्गात् मन्त्रबोधितसामान्यत्वात् उपादानं मदीयत्वेन ग्रहणं। ततश्च साधारणत्वाच्च अन्ययागवदिति उत्तरप्रतिपत्तेः यागोत्तरमिष्टद्रव्यस्याचार्य्यादिसमर्पणस्याश्रवणात् तथाच यत्रोत्सृष्टस्य यजमानकर्तृकोत्तराप्रतिपत्तिश्रवणं तत्रैव तत्सापेक्षं ग्रहणं स्वत्वसाधकं यत्र च तत्श्रवणं नास्ति तत्राविशेषात् सर्व्वेषामौपादानिकं स्वत्वमितिभावः। जलस्योत्सृष्टजलाशयस्य तथात्वेन सर्व्वभूतान्तर्गतत्वेन स्वामित्वात् दायाद्यर्थं लब्धपित्रादिधनं। शस्यादेः पतितस्वामित्यक्तमञ्जरीग्रहणं शिलं कपोतवदेकैकशः शस्यकणानां विपण्यादिपतितानां ग्रहणमुञ्छः ( ८५ )।

व्रतमध्ये व्रतेसंकल्पिते। यदाऽशुद्धागतावतीच क्रियते इत्यनेन

यदि। मृतके सूतके चैव व्रतं तन्नैव दुष्यति। एतेन काम्यव्रतारम्भोऽशौचे न कार्य्यः। मृतके सूतके चैव न त्याज्यं द्वादशीव्रतं। तथा, सूतके मृतके चैव प्रणम्य मनसा हरिं। एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते। मृतके च नरः स्नात्वेति प्रथमचरणे पाठोवराहपुराणे। भविष्योत्तरपद्मपुराणयोः, एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। मृतके सूतके वापि अन्यस्मिन्न-प्यशौचके। सर्व्वथा न परित्याज्या इच्छता श्रेय आत्मनः। एकादशीमुपक्रम्य वराहपुराणे, तस्मात् प्रमादे दुःखे वा सूतके मृतकेऽपि वा। स्नात्वा काम्यव्रतं कुर्य्याद्दानार्च्चनविवर्जितं। मत्स्यपुराणे, गर्भिणी सूतिका नक्तं कुमारी च रजस्वला। यदाऽशुद्धा तदान्येन कारयेत् क्रियते सदा। उपवासाचरणे गर्भादिपीड़ासम्भावनायां नक्तं भोजनं कुर्य्यात्। उप-वासेष्वशक्तस्य तदेव फलमिच्छतः। अनभ्यासेन रोगाणां किमिष्टं व्रतमुच्यतां, इति नारदप्रश्नानन्तरं, उप-वासेष्वशक्तानां नक्तं भोजनमिष्यते, इति मत्स्यपुराण एवेश्वरप्रतिवचनात्। स्वयमशुद्धा अन्यद्वारा पूजादि कार-येत् कायिकमुपवासादि सदा शुद्धाशुद्धिकाले स्वयं क्रियते। स्मृतिपरिभाषायामप्येवं। अथोपवासानुकल्पः। मनुः, विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः। आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः। प्रभुः प्रथमकल्पस्य

कायिकोपवासस्य प्रतिनिधिनिषेधोऽसमर्थे किं कर्त्तव्यमित्याकाङ्क्षाया-माह नक्तमिति ब्राह्मणभोजनाद्युपलक्षकं। अनभ्यासेन पुनरकरणेन

योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्म्मतेर्विद्यते फलं। अत्राप्यत्प्रतिनिध्यनुकल्पानां पर्य्यायता। कालविवेकधृतवराहपुराणं, उपवासासमर्थस्तु किञ्चिद्भक्ष्यं प्रकल्पयेत्। तथा एकादशीमधिकृत्य स्मृतिः, एकभक्तेन नक्तेन भक्षन् वृद्धातुरः क्षिपेत्। नारदीये, अनुकल्पोन्नृणां प्रोक्तः क्षीणानां वरवर्णिनि। मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभं। नत्वेवं भोजनं कैश्चिदेकादश्यां प्रकीर्त्तितं। एवमनुकल्पातिरिक्तं। ब्रह्मवैवर्त्तः, उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्याद्यद्भक्ताद्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसंख्यातान् यथाशक्ति व्रते नरः। देवीं गायत्रीं। वायुपुराणे। उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत्। न दुष्यत्युपवासेन उपवासफलं लभेत्। नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यं। यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च। उपवासनिषेधस्तु असामर्थ्यादशीति, तत्रापि हविष्यादिरनुकल्पः। अत्र सर्व्वत्र तुलसीं भक्षयेत्। तुलसीं विना या क्रियते न पूजा स्नानं न तद्यत्तुलसीविवर्जितं। भुक्तं न तद्यत्तुलसीविवर्जितं पीतं न तद्यत्तुलसीविवर्जितं, इति गारुड़ात्। अनुकल्पेऽपि द्वादश्यां विष्णू-

रोगाणां रोगगतबहुवचनं गणार्थं तेन गर्भपीड़ादिपरिग्रहः। यद्वा रोगाणामनभ्यासेनाप्रतिक्षेपेणाशक्तस्य इत्यन्वयः। किमितिकटाक्षेण-प्रश्नः काम्यव्रतं संकल्पितव्रतं दानार्च्चनविवर्जितमिति दानार्च्चने स्वयं

पौसन पारणञ्च कर्त्तव्यं। एकभक्तेन नक्तेन तथैवा-याचितेन च। उपवासेन दानेन नैवाद्वादशिकोभवेदिति वचनात् (८६)।

अथोहव्यवस्था। अत्रैकभक्तादीनामुपवासकार्य्य विधानात् सोमधर्म्माणां फलचमसे प्राप्तिरिव एष्वपि मन्त्रादिप्राप्तौ मन्त्रस्योहेन प्रयोगः कार्य्यः। अतएव एकभक्तादावपि पूर्व्वापरदिनयोरेकभक्तादिकोधर्म्मः कार्य्यः। यद्वा द्वादशीव्रतं खल्वेतद्भगवतोवासुदेवस्यार्च्चन जपहोमादिकं प्रधानं कर्म्म उपवासादिकन्त्वङ्गं कर्त्तृ संस्कारकं लिङ्गात्। अतोऽङ्गभूतोपवासप्रकाशक मन्त्रो-

न कुर्य्यात् किन्तु प्रतिनिधिना कुर्य्यादेव, विधेः विहितस्य, व्रते व्रतविषये। नक्तमिति हविष्याभ्यादेः कालपरं नतु नक्तव्रतपरं तथात्वे उत्तरोत्तरं प्राशस्त्याभिधानानुपपत्तेरिति (८६)।

उपवासकार्य्ये उपवासाशक्तस्य उपवासजन्यफलजननाय फलचमसे सोमप्रतिनिधीभूतदधिमिश्रितवटत्वक्चूर्णं। ऊहेन उपवासधर्म्मकल्पनेन प्रयोगोऽनुष्ठानं, अतएव ऊहेन प्रयोगादेव। कार्य्यइति एतत्कल्पेउपवासप्रकाशकमन्त्रः पाठ्यः। तदपाठकल्पमाह यद्वेति, जपहोमादिकं, जपहोमादिकञ्च। लिङ्गात् प्रागुक्तवचनात् उपवासप्रकाशकमन्त्र एकादश्यां निराहारइत्यादिको निवर्त्तते असमवेतार्थत्वादिति शेषः, अङ्गानां प्रकृतिविकृतिभावासम्भवाभ्रोहइति भावः, अस्य मन्त्रस्य जीमूत वाहन इत्याह इतिशेषः, तन्नेति न प्रकृतावूह इत्यस्यायमर्थः प्रकृतित्वं स्वोत्पत्तिविध्युत्थापिताकाङ्क्षोत्थाप्यविधिवोधित स्वासाधारणाङ्गसमुदायकत्वं तदन्यत्वं विकृतित्वं तदवयवोत्पत्तिविध्युत्थापकाकाङ्क्षोत्थापकोयस्तदुत्पत्तिविधिपूर्व्वकालीनविधिस्तद्वोधितं कर्म्म तत्प्रकृतिः, तदुत्पत्तिविध्युत्थापिताकाङ्क्षोत्थापितविधिवोधितावयवकंतदुत्पत्तिविध्युत्तरकालीनविधिवोधितं कर्म्म तद्विकृतिः स्वस्य स्वप्रकृतित्ववारणाय पूर्व्वकालीनविधिवोधितत्वं विशेषणं, तथा स्वस्य स्वविकृतित्ववारणाय तदुत्पत्तिविध्युत्तरकालीनविधि-

नक्तादिव्रते निवर्त्तते ब्रीहिमन्त्र इव यवे अतोऽस्या-प्रयोग एवेति जिमूतवाहन आह स्म। तन्न, ऊहं प्रकृत्य न प्रकृतावपूर्व्वत्वादिति कात्यायनसूत्रात् प्रकृता-वूहायोगात् विकृतावेवोह इति। अपूर्व्वोत्प्रेक्षणमूह इतितल्लक्षणात्। अत एकभक्तादीनां प्रकृतात्वात्वा-न्नोहइति। यदप्युक्तमङ्गत्वान्मन्त्रवाधइति तदपि न युक्तं एकोद्दिष्टे पार्व्वणविकृतावेवावाहनाद्यङ्ग एवोहदर्शनात्।

वोधितव विशेषणं। क्रमेण श्रुतिद्वयवोधितयोरेकजातीयावयवविकृतीभूत-कर्म्मणोः परस्परप्रकृतिविकृतिभाववारणाय तदवयवावयवकत्वं परित्यज्य निरुक्तलक्षणद्वये आकाङ्क्षाघटितत्वं वोध्यं अवयवत्वञ्च असाधारणाङ्गत्वं, अपूर्व्वत्वात् श्रुतिप्रतिपादिताङ्गत्वेनाङ्गान्तराकाङ्क्षाविरहात्। अपूर्व्वोत् प्रेक्षणं अपूर्व्वस्य प्राकृतापूर्व्वविधिवोधितस्याङ्गस्योत्प्रेक्षणंप्रकरणादिनाऽन्यत्र कल्पनं ऊहइति पर्य्यवसितं। यद्वा अपूर्व्वस्य स्वाङ्गतया अश्रुतस्य मन्त्रत्वेन युक्त्याकल्पनमूहइति, अत्र युक्तेरनिर्द्देशात् प्रकृतौ श्रुतमन्त्रादे र्विकृतौ प्रयोगे समवेतार्थकत्वाय श्रुतशब्दपरित्यागेनाश्रुतशब्दघटित-मन्त्रस्यापि लाभइति। ऊह वितर्के इतिधातुपाठात्, प्रकृतावैवोक्तत्वादिति, प्रकृतौ नूतोपवासप्रतिनिधित्वेनोक्तत्वात् प्रकृतावेवान्तर्भावादित्यर्थः अयम-भिप्रायः, उपवासो यथा स्वाङ्गतया श्रुतत्वात् प्रकृति स्तथा नक्तादि-व्रतमपि स्वाङ्गतया श्रुतत्वेन प्रकृतिर्नतु तयोः प्रकृतिविकृतिभावइति नक्तादिव्रतस्य उपवासानुकल्पत्वेऽपि उपवासेतिकर्त्तव्यतानपेक्षतया न तद्धर्म्मशालित्वमिति। अनुकल्पपदार्थस्तु अनु अनन्तरं कल्पः सादृश्ये वा अनु, सादृश्यञ्चैकफलजनकत्वेन परन्तु फलगतवैलक्षण्यं मुख्याभावे प्रति-निधिरितिस्मरणात्। प्रभुःप्रथमकल्पस्येत्याद्युक्तवचनाच्च। विकल्पस्थलेच कल्पयोस्तुल्यकक्षत्वमिति विशेषः। उक्तं यदति इत्यादिना, जीमूतवाहनोक्तं अङ्गत्वादुपवासस्याङ्गस्य प्रतिनिधित्वेनाङ्गत्वात् मन्त्रवाधइति एकभक्तादे-रित्यादि, मन्त्रवाधः मन्त्रकरणत्ववाधः, आवाहनाद्यङ्ग एवोहदर्शनादिति, पार्व्वणोक्तावाहनयङ्ग मन्त्रस्य वहुवचनान्तपित्रादिपदत्यागेनैकवचनान्त-

अतएव, एकभक्तेन योमर्थं उपवासव्रतञ्चरेदिति, उपोष्य नक्तेन विभो इत्यादि स्कन्दपुराणादिवचनादेकभक्तादिषु उपवासपदप्रयोगेण तद्धर्म्मातिदेशात्त्रप्रमाठ इति परिशेषखण्डे हेमाद्रिणाप्युक्तं। तथाच जैमिनिः, उक्तं क्रियाभिधानमन्यत्र तच्छ्रुतौ विधिप्रदेशः स्यादिति। क्रिया अग्निहोत्रादि तस्या अभिधानं नाम अग्निहोत्रादिपदमुक्तं, उत्प्रेक्षाधिकरणे तस्यान्यत्र श्रवणे विधि-

पिवादि-पदघटनया प्रयोगदर्शनादित्यर्थः, एवञ्च प्रधानएवोद्देशेनत्वङ्गेइति नियमे व्यभिचारादेकभक्ताद्यङ्गोपवासाद्यङ्गस्योक्तेः बाधकाभावइतिभावः, ननु पार्व्वणैकोद्दिष्टयोः प्रकृतिविकृतिभावादङ्गेऽपि तदात्वकल्पनादुपवासैकभक्तयोः प्रकृतिविकृतिभावानङ्गीकारात् कथमुपवासधर्म्मैरेकभक्ताद्याचरणमित्यतआह अतएवेति, अङ्गेऽप्यूहकल्पने बाधकाभावादेवेत्यर्थः, एकभक्तेनेत्यभेदे तृतीया तेन एकभक्तात्मकोपवासपदार्थव्रतं चरेदित्यर्थः। उपवासपदार्थत्वञ्च गौणधर्म्मविशेषं, नक्तेन नक्तव्रतेन उपोष्येति क्रियाविशेषणे तृतीया तद्धर्म्मातिदेशादित्युपवासादिपदघटितसङ्कल्पपाठादिधर्म्मातिदेशात्, अन्यथैकभक्तादीनामुपवासात्मकत्वकीर्त्तनवैफल्यात्सङ्कल्पाकाङ्क्षायां मन्त्रान्तरानुपदेशात् उपवासमन्त्रस्योपस्थितत्वेन तेनैवाकाङ्क्षापूरणाच्च, ननु सर्व्वाङ्गातिदेशस्तेन पूर्व्वापरदिवसीयएकभोजनाद्यङ्गातिदेशाभावे न क्षतिः। अत्रोक्तसूत्रस्यान्यत्रइत्यस्य विवरणं उत्प्रेक्षाधिकरणे इति, उत्प्रेक्षणीयाङ्गकर्म्मणीत्यर्थः उक्तमित्यनेनास्यान्वयः। सूत्रस्थिततच्छ्रुतापिवक्षयार्थमाह तस्येति, तस्याग्निहोत्रादेर्यावज्जीवकर्त्तव्यतेति यावत्पदमभिव्याप्तपरं तेन जीवनकालं व्याप्य कर्त्ता यस्य सचासौ सायंप्रातर्होमश्चेति तस्मिन्नारभ्योत्तरतत्पुरुषीयजीवनाधिकरणदिनत्वव्यापक-तत्पुरुषीयसायंप्रातःकालावच्छिन्नहोमइति यावत्, शक्तस्येत्यनेनास्यान्वयः तेन निर्व्विशेषितकर्त्तव्यं य क्षतिरुक्तस्य क्षणिकतया जीवनकालाव्यापकत्वेऽपि न क्षतिः तत्पुरुषीयहोमत्वेन तत्पुरुषीयजीवनकालीनदिनत्वव्यापकत्वसम्भवादिति। एतादृश-होमेऽग्निहोत्रपदशक्तिग्राहिकां श्रुतिमाह

प्रदेशः स्यात् विधेयधर्म्मातिदेशः स्यादिति सूत्रार्थः। यथा यावज्जीवकर्त्तकसायंप्रातर्होमे यावज्जीवमग्निहोत्रं जुहोति यदग्नये च प्रजापतये च सायंप्रात र्जुहोतीत्यादिभिः सपरिकराभिहितत्वेन शक्तस्याग्निहोत्रशब्दस्य उपसङ्क्रिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यनेनोपसदाख्ययागानन्तरं क्रियमाणमाससाध्ये कौण्डपायिनामयनाख्ययागेऽप्यग्निहोत्रपदप्रयोगमात्रात्तद्धर्म्मातिदेशः मुखे चन्द्रपदवत्। व्रीहिमन्त्रस्य तु यवे बाधोऽनङ्गत्वात्। किन्तु प्रकृतावेव व्रीहिभिर्यजेत यवैर्यजेतेति विकल्पेन

यावज्जीवेत्यादि, परिकरोऽङ्गं तेन सह वर्त्तमानं सपरिकरमभिहितो यस्तत्त्वेन इत्यर्थः। अग्निहोत्रपदस्येत्यस्य अयनाख्ययागेऽपि प्रयोगमात्रादित्यनेनान्वयः। यदग्नयेचेत्यादिकं प्रयोगविधिस्तत्र यदिति सायंप्रातर्जुहोतीति क्रियाविशेषणं तदेव यजनमग्निहोत्रात्मकयागइत्यर्थः उत्तरपदस्य यत्पदेन तत्शब्दोनापेक्ष्यते साधुचन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामतामिक इत्यादिवत्। उपसङ्क्रिश्चरित्वेति उपसच्छब्दोऽत्र सतिलव्रीहिचरुकरणकपरः चरित्वेत्यस्य यजित्वेत्यर्थः अभेदे तृतीया। ततश्च सतिलव्रीहिचरुकरणकोपसदाख्ययागानन्तरमिति यावत्। मासमेकमिति अग्निहोत्रपदेनात्र कौण्डपायिकर्त्तव्यायनाख्ययाग उच्यते इति बोध्यं, तद्धर्म्मातिदेशादिति अत्रेतिकर्त्तव्यतान्तरानुपदेशात् अग्निहोत्रपदप्रयोगाच्च प्रकृतिविकृतिभावस्य लभ्यमाणत्वादितिभावः। मुखे चन्द्रपदवदिति मुखे चन्द्रपदप्रयोगे यथा चन्द्रपदस्य लक्षणया चन्द्रसदृशपरतया मुखे चन्द्रगताह्लादकत्वादिधर्म्मातिदेशवदिति पर्य्यवसितार्थः। व्रीहिमन्त्रस्य यवे नोह इत्यन्वयः अत्र हेतुः प्रकृतिविकृतिभावाभावात् प्रकृतिविकृतित्वाभावादित्यर्थः पर्य्यवसितः अत्र च हेतुः विकल्पेन श्रवणादित्युक्तं। ननु व्रीहिश्रुतिसहचरितश्रुत्युक्तत्वेन कथं न यवे तन्मन्त्रहत आह असमवेतार्थत्वादिति, मन्त्राणां यवप्रयोगे व्रीहिमन्त्राणामदृष्टार्थकता यवयागजन्यपरमापूर्व्वसाधनता तथाच छुंपड़िति रूक्षत्व

श्रवणात् प्रकृतिविकृतिभावाभावादोहः। अतोऽसमवेतार्थत्वाद्बाधः, न च हुं फड़ादिवन्मन्त्रस्यादृष्टार्थकताऽस्तु कथमसमवेतार्थत्वाद्बाध इति वाच्यं। यस्य सर्व्वथा दृष्टार्थत्वासम्भवस्तस्यैव तथाकल्पनात् ( ८७ )।

तथाच जैमिनिः। अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंयोगोऽर्थेन नित्यसंयोगात् गौण प्रत्यायनेऽपीति। अस्यार्थः इतोऽर्थाभिधानसामर्थ्यान्मन्त्राणां

निरर्थकत्वेऽपि तत्प्रयोगोऽदृष्टार्थकतया यथा क्रियते तथा व्रीहिमन्त्रस्यार्थाविरतयाऽदृष्टार्थकतया प्रयोगोऽप्युपपद्यत इतिभावः दृष्टार्थत्वासम्भवे विशिष्टार्थशाब्दबोधजनकत्वासम्भवः, तथात्वकल्पनात् अदृष्टार्थकत्वकल्पनात्। तथाच हुंफड़िति मन्त्रो न दृष्टान्तः विषमत्वादितिभावः ( ८७ )।

अर्थाभिधानसामर्थ्यात् प्रकृतद्रव्यदेवतारूपविशिष्टार्थविषयकबोधजननयोग्यत्वात् जननयोग्यत्वञ्च जननानुकूलयोग्यतादिशालित्वं, शेषभावः अङ्गभावः कर्म्माङ्गता मन्त्राणां पाठ्यमानमन्त्राणां तस्मादर्थाभिधानसामर्थ्येनाङ्गभावादुत्पत्तिसंयोग इति, उत्पत्तिरद्गतापत्तिः ज्ञानं यतइति व्युत्पत्त्या शाब्दबोधानुकूलधर्म्मविशेषात्मिका शक्तिस्तयार्थेन संयोगः सम्बन्धः शाब्दरूपः मन्त्राणां तात्पर्य्यविषय इतिशेषः। लक्षणायाः शक्यसम्बन्धरूपतया लक्षणाज्ञानजन्यशाब्दबोधस्य लक्षणाघटकशक्तिज्ञानजन्यतावश्यकतया न तद्व्यावृत्तिरित्यतोभावार्थमाह औत्पत्तिकेनेति शक्त्याश्रयेणेत्यर्थः शक्त्याश्रयत्वमेव मुख्यत्वमित्यावेदयितुमाह मुख्येनेति, यद्वा औत्पत्तिकेन शक्त्या प्रतिपादितेन मुख्येन शक्त्याश्रयणार्थेन अजहत्स्वार्थलक्षणया बोधव्यावर्त्तनाय शक्त्याप्रतिपादितेनेति, साक्षात्शक्तिप्रतिपादितत्वलाभाय शक्त्याश्रयणेति, सम्बन्धइति तात्पर्य्यविषय इतिशेषः, तेनैव मुख्यार्थेनैव नित्यपदमव्यभिचारिपरमित्याह अव्यभिचारितया इति विशेषणे तृतीया संयोग उपस्थापकत्वरूपसम्बन्धः अव्यभिचारितान्दर्शयति गौणप्रत्यायनेति, मुख्यं प्रत्या-

शेषभावोऽङ्गभावस्तस्मादुत्पत्तिसंयोगश्चौत्पत्तिकेन मुख्यार्थेन संयोगः सम्बन्धः स्यात् कुतः नियसंयोगात् तेनैवाव्यभिचारितया संयोगात्। गौणप्रत्यायनेऽपि यतोमुख्यं प्रत्याय्यैव गौणं प्रत्याययति मुख्यप्रत्यायने तु न गौणप्रत्यायनमपेक्षते अतोमुख्येनास्याव्यभिचारितया संयोगः। तथाच, गौणे सदपि सामर्थ्यं न प्रमाणान्तरं

व्यैवेति, शब्दार्थसादृश्याश्रयस्य गौणपदार्थत्वात् मुख्यार्थज्ञानं विना गौणार्थज्ञानासम्भवादितिभावः। एवञ्च मन्त्रा मुख्यार्थतात्पर्य्यकप्रयोगविषयत्वेन वेदगम्या यतः प्राथमिकत्वेन मुख्यार्थोपस्थापकत्वादित्यादि युक्त्या मुख्यार्थपरतयैवसति प्रमाणान्तरं प्रयोक्तव्या मन्त्रा इति पर्य्यवसितं। अत्राभियुक्तवचनं प्रमाणमाह तथाचेति, गौणेऽर्थे गौणार्थविषयकशाब्दबोधे सामर्थ्यं शब्दस्य तादृशशाब्दबोधनिरूपितानुकूलाकाङ्क्षादिमत्त्वं प्रमाणान्तरं विना मुख्यार्थबाधकगौणार्थबोधकप्रमाणं विना नाविर्भवति, गौणार्थबोधोपधान-प्रयोजकं भवति मुख्ये तु मुख्यार्थबोधे तु शब्दादेव शब्दात्मुख्यार्थोपस्थापितादेव एवकारेण प्रमाणान्तरापेक्षा व्यवच्छिद्यते। तत्शब्दनिष्ठमुख्यार्थबोधोपधायकत्वमाविरस्ति स्फुटीभवति। ननु मुख्यार्थे तात्पर्य्यग्रहासत्त्वे कथं शब्दादेव मुख्यार्थबोधइत्यत आह तात्पर्य्यञ्चेति, औत्सर्गिकमितिशेषः। तथाच मुख्यार्थे बाधकाभावे तात्पर्य्यग्रहस्य प्रायः सम्भवादितिभावः। गौणार्थपरता गौणार्थतात्पर्य्यं तदभावात् प्रमाणान्तराभावात् न सिद्ध्यति न विषयीभवति। तथाच मुख्यार्थबाध एव गौणार्थतात्पर्य्यकल्पनादिति तात्पर्य्यग्रहरूपकारणस्य मुख्यार्थेऽसत्त्वे सामग्रीविरहात् न मुख्यार्थबोधस्तत्रैव प्रमाणान्तरसहकारिणगौणार्थतात्पर्य्यग्रहाद्गौणार्थबोधः मुख्यार्थबाधे तु न गौणार्थतात्पर्य्यबाधकाद्यपेक्षेतिभावः। हुंफडित्यादि दृष्टान्तवैषम्यं स्फुटयति यस्य मन्त्रस्य दृष्टं घटकपदानां अर्थविशेषबोधानुकूलशक्तिमत्त्वं न लभ्येत न प्रमाणगम्यं तस्य मन्त्रस्यादृष्टार्थकल्पनाऽदृष्टार्थकप्रयोगविषयत्वकल्पना। मन्त्रोच्चारणतो मन्त्रघटकपदतोदृष्टा दृष्टार्थविषयिका पदार्थस्मृतिर्नभवति स्मारितं

विना। आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्। तात्पर्य्येञ्च स्ततोमुख्ये गौणार्थपरता पुनः। प्रमाणान्तर-विज्ञेया तदभावान्न सिध्यति। तथा, यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पनं। लभ्यतेऽर्थस्मृतिर्दृष्टा मन्त्रो-च्चारणतस्त्विह। अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलो-दयः। इतिदृष्टार्थसम्पत्तौ नादृष्टमिहकल्प्यतइति। अतो यस्य क्वचिद्द्रव्यदेवतादिप्रकाशकरूपदृष्टार्थतासम्भव-

इह दृष्टार्थकमन्त्रप्रयोगस्थले। अर्थस्मृतिर्मन्त्रघटकपदज्ञानजन्या प्रयो-गार्था प्रयुज्यते यस्मैविशिष्टार्थबोधाय सप्रयोगः वाक्यार्थानुभवः सएवार्थः फलं यस्याः सा प्रयोगार्था प्रयोगाद्वाक्यार्थानुभवात् फलोदयः कर्म्मफलोदयः। यद्वा मन्त्रोच्चारणतः प्रत्येकपदसन्धानेन समुद्भूत-पदार्थानुसन्धानजन्यवाक्यज्ञानादर्थस्मृतिः मन्त्रार्थस्मृतिः। सा च प्रयोगार्था मन्त्रपाठफलिका वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वात् प्रयोगाच्च तादृ-शार्थज्ञानपूर्व्वकमन्त्रपाठाच्च फलोदयइति दृष्टार्थसम्पत्तौ दृष्टार्थस्य सम्प-त्त्यैव फलोदयेन नादृष्टमिहेति दृष्टार्थकमन्त्रस्य स्वार्थज्ञानद्वारैव फल-जनकत्वसम्भवे तत्रादृष्टकल्पनस्य व्यर्थत्वादितिभावः। हुंफडित्यादि मन्त्रस्यार्थाप्रसिद्धा तत्प्रयोगविधेरन्यथानुपपत्त्या तत्प्रयोगस्यादृष्टजन-कत्वस्वीकारेण तद्वारा फलजनकत्वमिति बोध्यं, वाधएव इति तस्या-दृष्टार्थकत्वे प्रमाणाभावादितिभावः। यच्च कृष्णलादौ तदुपादानलोप इति तदुपादीयते सम्पाद्यतेऽनेनेति व्युत्पत्त्या तत्प्रयोजनोपधायक-क्रियालोपइत्यर्थः। कृष्णलो लोहकलायाख्यः कलायः निस्त्वक्कलाय-विशेष इति केचित् तदनुष्ठानवेलायां तत्क्रियाकरणदशायां एव-कारेण शास्त्रावधारण दशायां प्रयोजनाभावनिश्चयो व्यवच्छिद्यते पुरुष-दोषेण आलस्यादिरूपपुरुषदोषेण प्राक् शास्त्रावधारणवेलायां तन्निश्चयात् प्रयोजननिश्चयात् पदार्थः कार्य्यरूपः नियमापूर्व्वमात्रार्थमिति नियम-विधिप्रतापूर्व्वमात्रार्थमित्यर्थः। मात्रपदेन पुरोडाशसम्पादकवैतुष्यादि-रूपदृष्टप्रयोजनस्य प्राक्सिद्धत्वेन तदर्थकत्वव्यवच्छेदः। अत्र व्रीहीन्-

स्तस्य मन्त्रस्य तदसम्भवे वैकल्पिकोऽर्थे वाधएव। अतएव विद्याकार: शास्त्रावधारणवेलायां यत्र हि प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानादिलोपः शास्त्रार्थः यथा कृष्णलेऽवघातादि लोपः। यत्र त्वनुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते तदा प्राक् तन्निश्चयात् शास्त्रप्राप्तिः पदार्थो नियमापूर्व्वमात्रार्थमनुष्ठेयएव। अतएव प्रकृतावपि आलस्यादिना व्रीह्यादिस्थाने तण्डुलादिषु गृहीतेषु अवघातादि समाचरन्ति याज्ञिकाः पठन्ति च। घाते न्यूने तथा छिन्ने

व्रीहीनवहन्तीत्यादिविधि र्नापूर्व्वविधिः पुरोडाशसम्पादकवैतुष्यसाधनतायाअवघाते लौकिकप्रमाणत एव सिद्धत्वात् किन्तु नियमविधिर्नखदलनादिनापि वैतुष्यसम्भवात् नियमार्थमवघाते विधुपत्यानात् स चावघातः मन्त्रपूर्व्वकः कार्य्यः। तत्र वैतुष्यरूपफलं केवलावघातेनैव सिद्ध्यति मन्त्र तु यागजन्यपरमापूर्व्वसाधनतया विधिवोधितयागाङ्गमिति तण्डुलेऽपि मन्त्रपूर्व्वकोऽवघातः कार्य्यः। अन्यथा यागात् परमापूर्व्वनिष्पत्तेरवश्च व्रीहीनवहन्तीत्यत्र व्रीहिपदं तुषोपलक्षिततण्डुलपरं नतु तुषस्य विशेषणता येन तण्डुलावघाते व्रीह्यवघातो न स्यादिति चिन्त्यं। यद्वा यत्र क्रिया दृष्टार्थद्वारा यज्ञाङ्गं तत्र मन्त्रस्तु अपूर्व्वविधिवोधितयागाङ्गं तत्र क्रियापूर्व्वं तन्मन्त्रपाठाभावेऽपि यागकाले तन्मन्त्रस्य पाठ्यता क्रियापूर्व्वत्वरूपाङ्गाभावेऽपि प्रधाननिष्पत्तेः, मान्त्रिके घाते मान्त्रिके छिन्ने कुशादौ कुशादिच्छेद इति यावत्। मान्त्रिके सान्नाय्ये हविषि च न्यूने सति इत्यन्वयः। अवघातादावित्यादिपदेन छिन्नसान्नाय्ययोः परिग्रहः। मन्त्रा याज्ञार्थसाधका इत्यस्य भावार्थमाह मन्त्रार्थज्ञानस्येति, नास्त्युपयोगइति, तदानीं मन्त्रस्यासमवेतार्थत्वादिति शेषः। नच मन्त्रस्यासमवेतत्वेऽपि पाठेऽदृष्टार्थता स्यादितिवाच्यं तन्मन्त्रस्य उद्बोधकविधयाशास्त्रावधारणकालीनानुभवमूलकवाक्यार्थस्मृत्युपधायकतया तद्द्वारैव यागोपकारकत्वस्वीकारात्

साम्नाय्ये मान्त्रिके तथा। यज्ञे मन्त्राः प्रयोक्तव्यामन्त्रा-यज्ञार्थसाधकाः। मान्त्रिके मन्त्रसाध्येऽवघातादौ तत्-काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः प्रयोक्तव्याः अस्मिंस्तु पक्षे मन्त्रार्थज्ञानस्य नास्त्युपयोगइति। इत्थ मेव प्रयोगानुष्ठानमित्याह। एवञ्चोपवासविधौ प्रकृता-वेवाशक्तविषयत्वेनातुल्यवलानां विकल्पायोगादेकभक्ता-दीनां प्रतिनिधित्वमेव। तदा तु प्रतिनिधौ यथा-श्रुतमन्त्रपाठः। समवेतार्थता तु गौण्या लक्षणया वेति (८८)।

तथाच प्रथमाध्याये कात्यायनसूत्रं, शब्देऽविप्र-तिपत्तिरिति। प्रतिनिहितद्रव्ये श्रुतशब्दः प्रयोज्यः श्रुतद्रव्यबुद्ध्या प्रतिनिध्युपादानात् शब्दान्तरप्रयोगे द्रव्या-

इत्थमेवचेति, एवं रीत्या एवेत्यर्थः। संप्रति इदानीं प्रयोगानुष्ठानं तण्डुला-र्थं अवघातादिनिष्पन्नपुरोडाशादिना यागानुष्ठानमित्याह इति विद्याकर इत्यनेनास्यान्वयः। उपसंहरति एवञ्चेति, प्रकृतौ मुख्ये योऽशक्तस्तद्विष-यत्वेनैव तत्तत्पुरुषकर्त्तव्यत्वेनैव अयमतुल्यवलत्वे प्रतिनिधित्वेच हेतु-स्तदा तु मुख्येऽशक्तिकाले तु। गौण्या सादृश्यलक्षणया तत्र सदृश-वस्तुप्रतिनिधौ सादृश्यलक्षणा विसदृशप्रतिनिधौ इतरलक्षणा सुसदृश-स्थलेऽपि क्वचित् इतरलक्षणा लाघवात् यवादिप्रतिनिधिगोधूमादि प्रयोगे यवपदस्य यवावयवलक्षणा यवावयवत्वमपेक्ष्य यवावयवारब्धत्व-रूपसादृश्ये गौरवात् गोधूमगतस्यापि यवावयवगतत्वसम्भवादिति तथा चेति प्रतिनिधौ यथाश्रुत मन्त्रपाठ एवेत्यर्थः (८८)।

सूत्रमिति आहइतिशेषः, शब्दे प्रतिनिधिद्रव्यत्यागादौ मुख्यप्रयोगा-ङ्गशब्देऽविप्रतिपत्तिर्मुख्यार्थवाधेन नाप्रयोज्यतेति भावार्थमाह प्रति-निहित इति, श्रुतः मुख्यप्रयोगाङ्गतया श्रुतः श्रुतद्रव्यबुद्ध्या श्रुतद्रव्य-सादृश्यबुद्ध्या तत्सादृश्यबुद्धिस्थ श्रुतशब्दस्य गौण्या लक्षणया सम्पाद्यम-

न्तरबुद्धिप्रसङ्गात्। यथा, अग्न्यभावे तु विप्रस्य पाणावेव जलेऽपि वेति। मत्स्यपुराणदर्शनात् हस्तादिहोमपक्षे अग्नौ करिष्ये इत्यनूह्य एव प्रयोगइति अतएव यज्ञपार्श्वः। तैलं प्रतिनिधिं कुर्य्याद्यज्ञार्थे याज्ञिकोयदि। प्रकृत्यैव तदा होता ब्रूयाद्घृतवतीमिति। अत्र द्रव्यपदमुपलक्षणं सर्व्वप्रतिनिधावेव नोहो न वा वाधः। किन्त्व विकृतएव मन्त्रः पाठ्यइति। एतेन यम्लोकोक्तं एकभक्तेन योविप्र उपवासव्रतञ्चरेदिति, उपोष्य नक्तेन विभो इत्यादिषु उपवासपदप्रयोगाम्मासमग्निहोत्रं जुहोतीतिवन्नाम्नोऽतिदेशात्प्राप्तस्योहेन प्रयोग इति, तथा समवेतार्थत्वाय एकाहारादि पदं प्रयोज्यमिति हेमाद्रिणोक्तमपि निरस्तं। एवं नरं पशुत्वमागत-

इति बोध्यं। यद्वा श्रुतद्रव्यबुद्ध्या श्रुतद्रव्याभेदारोपेण आरोप आहार्य्य भ्रमः द्रव्यान्तरबुद्धिप्रसङ्गात् द्रव्यान्तरत्वेनैव बुद्धिप्रसङ्गात् तेन प्रतिनिधिद्रव्ये द्रव्यान्तरत्वबुद्ध्यावश्यकत्वेऽपि न क्षतिः। न च द्रव्यान्तरत्वेन प्रयोगे कोदोष इति वाच्यं विधिवाक्ये द्रव्यान्तरत्वेनाप्राप्तत्वात्। वस्तुतस्तु श्रुतद्रव्यबुद्धेरत्यत्र श्रुतत्वं श्रवणविषयत्वं द्रव्येश्रवणविषयताव्यापारानुबन्धिनी। तथाच शक्त्या लक्षणया वा श्रुतशब्दजन्यबोधविषयत्व मिति पर्य्यवसितं द्रव्यान्तरबुद्धिप्रसङ्गात् श्रुतशब्दघटितमन्त्रकरणक एव द्रव्यत्यागः कार्य्यः इति नियमभङ्गप्रसङ्गात्। अतएव यत्राग्नये स्वाहेति मन्त्रःश्रुतस्तत्र वह्नये स्वाहेति न प्रयुज्यते, तथाश्रुतार्थस्तु न युक्तिसिद्धः श्रुतशब्दप्रयोगेऽपि द्रव्यान्तरबुद्धिसम्भवात् शब्दान्तरप्रयोगेऽप्याहार्य्यश्रुतद्रव्यबुद्धिसम्भवाच्चेति, प्रकृत्यैवानूहेनैव घृतवतीमिति शब्दघटितमन्त्रं द्रव्यपदमिति सूत्रव्याख्यायां प्रतिनिहितद्रव्य इत्यत्र द्रव्यपदमित्यर्थः। उपलक्षणमुपवासादिप्रतिनिहितैकभक्तादीनां ग्राहकं एवञ्च यम्लोकग्रन्थकार स्तु नोक्तमितीत्यनेनास्वारस्यः। सम्मविधानेन नरं

मिति वराहपुराणीये तु नारीं पञ्चत्वमागतामिति न लिङ्गोहः, स्त्रीपुंदाहस्य समविधानेन प्रकृतिविकृतित्वाभावात्। न च वैभक्तिकार्थपुंस्त्वविशिष्टबोधात् स्त्रियां बाध इति वाच्यं, प्राथमिकत्वाद्बलीयसः प्रातिपदिकस्यार्थवत्त्वेन स्त्रीपक्षेऽपि विनियोगात्। किन्तु वैभक्तिकलिङ्गस्य स्त्रियां प्रयोगसाधुतामात्रं पुंसि त्वर्थसाधुतापि। अतएवैकपाशिके दैक्षे पशावाम्नातस्यादितिः पाशान्प्रमुमोक्तृति मन्त्रस्य निःसन्दिग्धार्थपाशप्रातिपदिकलिङ्गेन विनियोगो न तु पश्वाङ्गाविना बहुवचनेन बहुपाशिकायां विकृतावुत्कर्षः, नापि प्रकृतावेव पाशपदे अवयवलक्षणा किन्तु प्रयोगसाधुतैव बहुवचनस्येत्युक्तं। एवञ्च, एतद्वः पितरोवासइति जल्पन् पृथक् पृथक्,

दद्यादित्याद्येकविधिना नरदाहत्वेनैव प्राप्ता, प्राथमिकत्वात् प्रथमोपस्थितत्वात् बलीयस उत्तरकालीनप्रत्ययार्थोपस्थितिनिरपेक्षान्वयबोधसमर्थस्य प्रतिपदिकार्थस्य प्रकृतेरर्थवत्त्वेन समवेतत्वेन लिङ्गस्य नरमिति पुंस्त्वस्य स्त्रियामिति बाधेऽपीति शेषः, पुंस्त्वबोधकविभक्तेरिति च शेषः, प्रयोगसाधुतामात्रं प्रयोगस्य साधुताऽर्थविशेषसम्पादकत्वेन व्याकरणनिष्पन्नत्वं तन्मात्रं तद्रूपंफलमितिशेषः। साधुताज्ञानस्य शाब्दबोधहेतुत्वे साधुतापदमत्र साकाङ्क्षतापरं। तथाच विभक्त्यर्थलिङ्गस्याविवक्षितत्वमितिभावः। अर्थसाधुता पुंस्त्वरूपलिङ्गपरता, दैक्षे दीक्षणीये पशौ पशुयागे आम्नातस्य विहितस्य निःसन्दिग्धार्थः अबाधितमुख्यार्थकपाशात्मकप्रातिपदिकस्तस्य लिङ्गेन विशिष्टार्थबोधनसामर्थ्येन विनियोगः पाठः पश्वाङ्गाविना प्रातिपदिकोत्तरप्रयुक्तेन बहुवचनेन हेतुना विकृतौ विकृतियागे उत्कर्षःपाठ्यता प्रकृतीभूतपशुयागप्रकरणीयस्यापि बहुवचनार्थबाधान्नतत्र पाठ इत्यभिप्रायः। एतदभिप्रायनिषेधकं नत्विति अत्र हेतुलाभाय पश्वाङ्गाविनेत्युक्तं सम्भवत्प्रयोगसाधुतामात्रकेण इत्यर्थः

इति ब्रह्मपुराणेन प्रकृतावेव पार्व्वणे पित्रादिषु प्रत्येकं एतद् इति बहुवचनान्तमन्त्रप्रयोगात् तत्रानर्थक्यात्तद्विकृतावेकोद्दिष्टेऽपि बहुवचनान्तप्रयोगो न तु एकवचनान्तत्वानूहेत एकोद्दिष्टे, इतिविष्णुवचनादेकवचनान्तऊहः। एतद्वचनात् ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितृन् इत्यादिमन्त्रान् बहुवचनान्तान् प्रकृतौ समवेतार्थानेकोद्दिष्टे एकवचनवदूहेत पितरमित्यादिविकृतान् कुर्य्यात् एकस्मिन् पितरि बहुवचनस्यासमवेतार्थत्वात्। अतएव दैवे पशाववदितिः पाशं प्रमुमोक्त्विति अदितिः पाशान् प्रमुमोक्त्विति पाशमन्त्रौ एकवचनबहुवचनान्तौ श्रुतौ, अदितिः खण्डनरहिता देवमातेति भाष्यव्याख्यानाददितिरित्येव पाठः।

तथाच प्रातिपदिकार्थस्य अविवक्षया क्वचिदपि प्रयोगादर्शनात् तदर्थस्यावाधितत्वे विभक्त्यर्थाविवक्षयापि क्वचित् प्रयोगदर्शनात् विभक्त्यर्थ बाधेऽपि तदविवक्षया प्रयोग उपपद्यत इति भावः। प्रकृतावेव प्रकृतियागएव एवकारेण बहुपाशिकायां विकृतौ न लक्षणेति लभ्यते। अवयवलक्षणेति तथा चावयवस्य बहुत्वेन बहुवचनान्वयसम्भव इति भावः। नापीत्यत्र हेतुर्भागाभाव एव बोध्यः। ननु बहुवचनान्वयानुपपत्तिरेव मानमित्यत आह किन्तु प्रयोगसाधुतैव इति, एवकारेणार्थवत्त्वव्यवच्छेदः। एवञ्च विभक्तेः क्वचित् पदसाधुतामात्रार्थकत्वे च, एकवत् एकवचनान्त पदवत् बहुवचनस्य बहुवचनार्थबहुत्वस्यासमवेतत्वादिति। असमवेतार्थकत्वादिति पाठे बहुवचनस्येति यथाश्रुतं बोध्यं। अदितिरिति दो छेदे इति धातुनिष्पन्नत्वादिति शेषः। विकृतावपि द्विपाशिकायामपि तन्मन्त्रलाभ एकवचनान्ततन्मन्त्रलाभः एतत्ते पितर्वास इति मन्त्रलाभ इति यावत्। अनूह एवेति अतद्विपाशिकायां बहुवचनान्तमन्त्रपाठो निराकुलतया सम्भवति। एकोद्दिष्टे बहुवचनान्तमन्त्रपाठो न युक्त एकः

अत्रैकवचनान्तस्य प्रकृतौ समवेतार्थत्वाद्विपाशिकायां विकृतौ द्विवचनोहः कार्यः। बहुवचनान्तस्य तु प्रकृतावसमवेतार्थत्वात् विकृतावपि तथैव मुख्यत्वान्नोहः किन्तु बहुवचनान्तस्यैव प्रयोगइत्यन्तं। यत्तु, द्वैतनिर्णये एतद्-इति वाक्यं पृथक् पृथगिति वीप्सावशेन पार्व्वणमात्र-विषयकं एतेन तन्मन्त्रस्थबहुवचनस्य पार्व्वणएव प्रयोग-साधुतामात्रं नत्वेकोद्दिष्टेऽपि तत्र वीप्सासहितवाक्या-प्रवृत्तेरिति, तन्न, तद्वाक्याप्रवृत्तौ कथं तन्मन्त्रलाभः। प्रकृतिवद्विकृतिरिति न्यायाल्लाभइति चेत्तदा द्विपाशि-कायां बहुवचनानूहवाधाय्यनूहएव। पितृपदस्य तु प्रकृतौ समवेतार्थत्वात् प्रत्येकोद्दिष्टे प्रेतपदोहइति। प्रोद्गातॄणां भक्ष्यः फलचमसइत्यादौ मन्त्रेतरस्मिन् प्रोद्गातृपदेन प्रोद्गात्रादिलक्षणेन विभक्त्यर्थान्वय-

वमन्त्रानूहेत एकोद्दिष्ट इति वचनादेकवचनान्तप्रयोगस्यावश्यकत्वात् तद्वचनस्य सङ्कोचे प्रमाणाभावात् पार्व्वणे बहुवचनान्तमन्त्रपाठस्य वाचनिकत्वादगत्या बहुवचनस्य तत्र निरर्थकता एकोद्दिष्टे तथा कल्प-काभावात्। नचैकवन्मन्त्रानूहेतेति वचनं न्यायमूलकमिति प्रकृतौपद-साधुतामात्रकबहुवचनान्तघटितमन्त्रवाक्यस्य विकृतावपि सम्भवेन कथ-मूह इतिवाच्यं सर्व्वत्रैव विकृतौ प्रकृत्यर्थविवक्षयैव विभक्तेः पदसाधुता मात्रार्थकतया अनूहमन्त्रपाठसम्भवेऽश्रुतपदकल्पनाया अन्याय्यतापत्तेः। तस्माद्वचनादेवैकोद्दिष्टे एकवचनोहस्य दृष्टत्वादन्यत्रापि विकृतौ प्रकृतिश्रुतमन्त्रस्य विभक्त्यूहेन प्रयोगस्य वक्तव्यत्वात् द्विपाशिकास्थले वचना भावात् न बहुवचनस्थले द्विवचनोहः। युक्तिस्तु सार्थकपदस्थले एवेति चिन्त्यं। ननु विभक्तेः पदसाधुतामात्रेणापि प्रयोगः प्रोद्गातॄणां भक्ष्यः फलचमस इत्यादिवाक्ये प्रोद्गातृपदे तद्गणे ऋत्विङमात्रे लक्षणा इत्यादि बहुवचनान्ता गणस्य संसूचका इति भाष्यादिति सिद्धान्तः कथ-

व्युत्पत्तेः मन्त्रे तु न व्युत्पत्तिमात्रेणार्थपरता किन्तु प्रातिपदिकलिङ्गेनैव विनियोगः। सम्भूयकारिता तु पाशानिति मोचनकर्म्मतापरत्वेनापि, अतएवोक्तं न विभक्ते-

मित्यत आह प्रोद्गातृणामिति प्रोद्गात्रलक्षणेवेति विभक्तार्थवहुत्वस्यान्वयानुपपत्तेरितिभावः। ननु विभक्तार्थवहुत्वानन्वये का क्षतिरिति तत्राह विभक्तार्थान्वयव्युत्पत्तेरिति तथान्वयस्य व्युत्पत्तिसिद्धत्वात् अन्यथा व्युत्पत्तिभङ्ग इति भावः। ननु मन्त्रे तथा व्युत्पत्तिभङ्ग इत्यत आह मन्त्रेत्विति अर्थपरता विभक्तेरर्थपरता प्रातिपदिके यल्लिङ्गं तस्यार्थ प्रकाशनसामर्थ्यविनियोगात्तथाच प्रातिपदिकार्थेऽन्वयबोध एव विभक्तेरर्थवत्त्वमितिभावः। यद्वा प्रातिपदिकलिङ्गं प्रातिपदिकनिष्ठं यत्स्वार्थ प्रकाशनसामर्थ्यं तदेकविनियोगात् तन्मात्रतात्पर्य्येण मन्त्रस्य विनियोगात् न विभक्त्या अर्थवत्त्वमपि विवक्षित मितिशेषः। ननु प्रकृत्यर्थान्वितस्वार्थवोधकत्वं प्रत्ययानामिति नियमभङ्ग इत्यत आह सम्भूयकारितेति मिलितार्थपरता तथाच कर्म्मत्वरूप विभक्तार्थान्वयेनैव नियमरक्षणादितिभावः। एकं वचनं एकत्वादिकं प्रयोजनमर्थः। न च प्रोद्गातृणामित्यत्र षष्ठीविभक्तेः कर्त्तृत्वार्थतया वहुत्वाविवक्षयापि वहुवचनस्योपादानात् कथं प्रोद्गातृपदे लक्षणेति वाच्यं मन्त्रेतरत्र विभक्तेः संख्यावोधकत्वनियमात्। अन्यथा क्वचिदेक—वचनादेरनियमापत्तेः। प्रत्युत प्रथमोपस्थितत्वादेकवचनस्यैव प्रोद्गातृणामित्यत्र प्रयोगापत्तेः। मन्त्रेतु यत्र यथा मन्त्रोऽभिहित स्तत्र तथैव पाठ्य इतिनियमादितिभावः। अतएव कर्म्मत्वान्वयेनैव विभक्तेश्चरितार्थादेव नोत्कर्षः न विभक्त्यर्थवहुत्वान्वयः। प्रकृतौ तथान्वयाभावादितिभावः। कर्म्मणः कर्म्मत्वस्य यद्वा द्वितीयाविभक्तेः कर्म्मार्थः। अभेदेनास्य प्रकृत्यर्थेनान्वय इति वैयाकरणमतेनोक्तं। प्रकृतौ एकपाशिके पशौ भावादन्वययोग्यत्वात् पाशवैधर्म्म्यात् पाशसाहुल्याभावात् पाशपदवित्तद्विशेषपदवटितत्वादिति यावत्, विसदृशत्वात लिङ्ग संख्यावच्छिन्नस्वार्थपरत्वं एतदेव विवृणोति तथाहीति सन्निहितार्थपरत्वात् प्राकृतविषयत्वात् एतद्वाक्ये पूर्ववाक्ये रूपान्तरासन्निधानात्,

ष्वं चनमेवैकं प्रयोजनमिति। अतएव द्विपाशिकायां विकृतावपि नोत्कर्षः। तथाच भट्टवार्त्तिकं, प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्म्मणः। उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्यावकल्पतइति। अस्मात्त्वमभिजातोऽसि इति साग्नेर्मन्त्रस्य तु स्त्रियां वाधः पाशवैधर्म्म्यात्, तथाह्यस्मादिति इदमः सर्व्वनामत्वेन सन्निहितार्थपरत्वादेतद्वाक्ये रूपान्तरासन्निधानात् स्वपदोपात्तलिङ्गसंख्याविशिष्टैक विभक्तिरिदंपदार्थः पुमानेकइति यावत्, ततश्च

रूपान्तरस्य पुंस्त्वाद्यनवच्छिन्ननरत्वादिमात्रस्यासन्निधानात् अनुपस्थितेः स्वपदोपात्तेति अभिजातान्वययोग्येत्यर्थः। सर्व्वनाम्नां प्रागुपस्थित लिङ्गसंख्याविशिष्टान्वयबोधपरतया औत्सर्गिकत्वादिति भावः। मन्त्रार्थस्तु अस्मात् पुरुषात् यतस्त्वमभिजातोऽसि आधानसमये उत्पन्नोऽसि अतस्त्वं हेऽग्ने इमं दहेति स्त्रीसकाशादुत्पन्नत्वाभावेनास्य मन्त्रस्य स्त्रियां वाधइति भावः। प्रातिपदिकलिङ्गादेवेति स्वघटकेदंपदात्मकप्रातिपदिकार्थे लिङ्गसंख्याविशिष्टनरबोधसामर्थ्यादित्यर्थः। न सन्निधेरपेक्षेति पुंतात्पर्य्यकनरपदोपस्थापितत्वापेक्षेत्यर्थः। सन्निधेरुपस्थापितत्वात् तत्परत्वादेनमित्यस्य स्त्रीपरत्वात् नत्विति मानुषः शुद्धिमृच्छति इत्यनन्तरोक्तपदोपस्थापितपुंस्त्वविशिष्टपरत्वं। अथ विभक्त्या विभक्त्युपस्थापित पुंस्त्वान्वयार्थं सङ्कोचः पुंतात्पर्य्यकत्वं। अथ विभक्तेरेकवचनादेरेकत्वादिपरतयानुशासनात् तदनुरोधेन एकवचनाद्यूहः क्रियते लिङ्गबोधार्थं नोहः प्रातिपदिकविशेषसहकारेणैव विभक्तेर्लिङ्गोपस्थापकत्वात् प्रातिपदिकस्य च स्वार्थान्वययोग्यतैव प्रयोगाल्लिङ्गविशेषबोधाय तदूहास्वीकारादिति तात्पर्य्यमवसितं तत्र स्त्रीदेवताप्रतिष्ठायां अस्यैप्राणाः प्रतिष्ठन्त्विति मन्त्रस्य कथं लिङ्गोहेन पाठइतिचेन्न इदंपदस्य सन्निहितवाचित्वात् अमुकदेवताया इहप्राणाइत्यादि प्रागुपन्यस्तमन्त्रे स्त्रीदेवतात्वेनैव सन्निहितत्वात् तत्परत्वं अस्यै इत्यस्य न सम्भवतीति अस्यै इत्यूहेन पाठः स्त्रीसपिण्डने येचात्वेति मन्त्रा तस्यै इत्यत्र तस्यैइति-

प्रातिपदिकलिङ्गादेव पुंसि मन्त्रविनियोगइति। नरं पञ्चत्वमागत मित्यादिस्तुस र्वनामत्वात् सन्निधेरपेक्षा किन्तु लिङ्गसंख्यानपेक्षयैव प्रातिपदिकार्थता। नचैवं तदिनं संशयादन्नमिति याज्ञवल्क्यादिमनुष्य स्त्रीपरीक्षायां वाधः स्यात् एनमित्यस्य सर्व्वनामत्वेन अन्नात्त्वमितिवत् सन्निहितविभक्त्युपनीतपुंस्त्वविशिष्टव्यक्तिपरत्वेन पाशवैधर्म्यादिति वाच्यं। एनमित्यस्य मानुषः शुद्धिमिच्छतीति स्ववाक्यएव मानुषत्वेन स्त्रिया अपि सन्निधेस्तत्परत्वात्

नोक्तः तच्छन्दस्य यत्तदिने यः पठति स जानाति इत्यादौ जनत्वादिसामान्यरूपेणेव प्रागुपस्थितलौकिकत्वादिसामान्यरूपेण स्त्रीपुंसाधारण्येनोपस्थापनात् तत्परेति तत्पदस्यापि तथावोधने सामर्थ्यात् तस्येइतिनोक्तः। नच मन्त्रे येत्यत्र यांश्चेत्यत्रच याद्यूहः कार्य्यइति तत्रैत्यत्र तस्मै इत्यूहइतिवाच्यं नरं पञ्चत्वमागत मित्यत्र दत्तोत्तरत्वात्। प्रतिनिधिस्थले सुतशब्दप्रयोगे इतियदुक्तं तच्छन्दकरणकदाने मन्त्रेच बोध्यं। तेन केवल-लौकिकवाक्ये न सुतशब्दप्रयोगइति धेनुदानाद्यनुकल्पवराटिदानादौ वराट्यादिशब्देनैवदानवाक्यं। नरत्वं बलिरूपेण इत्यत्र छागत्वं बलिरूपेणेत्यूहेन पाठः। प्रकृत्यर्थासमवेतत्वे तदूहेन पाठस्यावश्यकत्वात् वैकल्पिकस्थले एव न प्रकृत्यूहेन पाठः। अस्मात्त्वमभिजातोऽसि इत्यत्रास्यास्त्वमित्यूहेनापि न पाठः। अभिजातत्वानन्वयात् नचाग्न्याधाने पत्न्या अपि सहकारितया कथमभिजातानन्वयानुपपत्तिरितिवाच्यं अग्नेःस्त्रियाः साक्षादजनकत्वात् तथाप्रयोगे लक्षणापत्तेर्लक्षणाग्राहकमानाभावाच्च अभावे चान्यद्रव्याणामुदकेनापि पूजितः, इतिनृसिंहपुराणीयवचनात् पुष्पाभावे च देयानि पत्राण्येव जनार्द्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्नुयादिति आह्निकतत्त्वधृतवचनाच्च देवपूजायां पुष्पादि प्रतिनिधुदकदाने इदं पुष्पार्थमुदकममुकदेवतायै नमः इत्येवं क्रमेण वाक्यरचनां कुर्व्वन्ति। वस्तुतस्तु तत्रेदंपुष्पं अमुकदेवतायैनम इत्येवं क्रमेणैव जलदानं पुष्पे इदं पदा-

यं तु पश्चाद्भावि पुंस्त्वविशिष्टोऽर्थः, अतोमानुषत्वेन स्त्रिया-अपि सन्निधेस्तस्यामपि प्रवृत्तस्य प्रातिपदिकस्य न विभक्त्या सङ्कोचः पाशन्यायतौल्यात् ( ८८ )।

अथैकभक्तं। स्कान्दे, दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचन। नियमेन, ब्रह्मचर्य्यं तथा शौचं सत्यमामिषवर्जनं, इत्यादिसामान्यव्रतधर्म्मेण। चतुर्थप्रहरे तु न्यूनं ग्रासत्रयेण त्विति देवलः। द्वात्रिंशत्तु गृहस्थस्येति पद्मपुराणोक्तसंग्रासेसा त्रयन्यूनतेति। अत्र च परदिनार्द्धातीतकाले तत्तिथ्यलाभेऽपि परदिनएव तत्समये एकभक्तं कुर्य्यात्। तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तिथिरिति सुमन्तुवचनेनोपवासार्हतिथिखण्डविशेषसम्बन्धिदिनएव प्रतिनिधितयैकभक्तविधानात्।

यस्य जलस्याभेदसम्बन्धेनाहार्य्यारोपात्मकशाब्दबोधस्वीकारेणैव तादृशवाक्यसम्भवात्। सर्व्वोपचारवस्तूनामभावे भावनैवहि। निर्मलेनोदकेनाथं पूज्यतेऽसौ नारदइति, राघवभट्टधृतवचनात् तत्र भावना इत्यत्रापि सर्व्वोपचारवस्तूनामन्वयः, तथाच पूजाता जलेन भावनाच पुष्पादीनामित्यन्वयदर्शनादाहार्य्यारोपेण दानसूचनमितिभावः। नच प्रतिनिधिस्थले मन्त्रे गौण्या लक्षणया वा समवेतार्थतेति कथमुक्तं तत्रापि चाहार्य्यारोपात्मकशाब्दबोधस्वीकारसम्भवादितिवाच्यं लौकिकवाक्ये तथा स्वीकारसम्भवेऽपि वैदिकमन्त्रे तथास्वीकारे भ्रमजनकत्वलक्षणाप्रामाण्यापत्तेरितिदिक् ( ८८ )।

अथैकभक्तमिति, दिनार्द्धसमयेऽतीते इति, अत्र अष्टधाविभक्तदिनपञ्चांशोमुख्य स्वदधस्तनकालःपर्य्युदस्त इति बोध्यं ग्रासत्रयन्यूनतेति, तथाच ग्रासत्रयेण न्यूनं द्वात्रिंशद्ग्रासं उनत्रिंशद्ग्रासमित्यर्थः। परदिन एवेतीति, एतच्च परदिवसीये तिथिखण्डे विहितैकादश्युप-

स्वतन्त्रै कभक्तएव दिनार्द्धसमयातीतकाले तत्तिथिनियमः। एवं नक्तादिष्वपि। अथ नक्तव्रतं। स्कन्दपुराणे, प्रदोष-व्यापिनी ग्राह्या सदा नक्तव्रते तिथिः। उदयात्तु तदा पूज्या हरेर्नक्तव्रते तिथिः। भविष्यदेवीपुराणयोः, हविष्यभोजनं स्नानं सत्यमाहारलाघवं। अग्निकार्य्यमधः-शय्यां नक्तभोजी षड़ाचरेत्। एवं नक्तव्रतस्य गुरुत्वेन प्रागुक्तवायुपुराणवचने नक्तमिति हविष्यान्नादिभोजनस्य कालपरं नतु नक्तव्रतपरं तथात्वे उत्तरोत्तरगुरुव्रतोपदेश-प्रस्तावे तदनन्तरं केवल हविष्यान्नोपदेशानुपपत्तेः (६०)।

अथ हविष्यान्नं। स्मृतिः, हैमन्तिकं सिताखिन्नं धान्यं मुद्गास्तिलायवाः। कलायकङ्गुनीवारावास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी।

वासप्रतिनिध्यभिप्रायेण। एवञ्च यत्र पूर्व्वदिने उपवासविधिस्तत्र पूर्व्वदिन एव तत्प्रतिनिधिरेकभक्तादिनियम इति। स्वतन्त्रेति, अत्राप्युभयदिने तत्तिथेरलाभे लाभे वा परदिने एकभक्तव्रतं, उदयेतूपवासस्य नक्तस्यास्तमये तिथिः। मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति बौधायनवचनादेवमिति, उपवासप्रतिनिधिनक्तव्रतंतु प्रदोषव्यापिनी ग्राह्या उभयदिने प्रदोषे तिथिलाभे परदिने व्रतं तिथेरस्तसम्बन्धादुभयदिने ऽस्तसम्बन्धे परदिने, परदिने अस्तसम्बन्धाभावे वा त्रिसन्ध्यव्यापिन्यां नक्तव्रतंबोध्यं। हरिनक्तव्रते हरिसम्बन्धिनक्तव्रते एकादशीव्रतानुकल्प इति यावत् सत्यं सत्यवचनं अग्नीकार्य्यं अग्नौदेवताहोमः अधःशय्यामिति खट्वादिशयननिषेधकं (६०)।

सिताखिन्नमितिमितं शुक्लञ्च अखिन्नञ्चेति धान्यस्य हविष्यत्वे तण्डुलादेस्तदनुपपत्तिरिति धान्यपदं तदवयवपरं तत्र धान्यावयवे सिताखिन्नत्वे खिन्नतण्डुल देर्हविष्यत्वानुपपत्तिः धान्यावयवात्मकपदार्थैक-

पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिड़ी जीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुड़मैक्षवं। अतैलपक्कं मुनयो हविष्यान्नं प्रचक्षते। अत्रास्विन्नमित्यभिधानादन्यत्र स्विन्नधान्ये न दोषः। अतएव हारीतः, अथ सूनां व्याख्यास्यामो जङ्गमस्थावरादीन् प्राणिनः सूदयन्तीति सूनाः ताश्च पञ्चविधा भवन्तीत्युपक्रम्य चतुर्थोपर्य्यन्तमभिधाय आह आदीपनतापनखेदनभर्जनपचनादिभिः पञ्चमी तद्वैवं पञ्चैता निरययोनीरहरहः प्रजाः कुर्व्वन्ति पञ्चभिः पाकयज्ञैर्गृहस्थ वानप्रस्थान् पावयन्तीति। एषोर्थः कल्पतरुकृता कृतः सूदयन्ति प्राणैर्व्वियोजयन्ति। आदीपनं काष्ठादेः, तापनं तोयादेः, खेदनं धान्यादेः, भर्जनं यवादेः, पचनं तण्डुलादेः। पञ्चसूनाः पाकयज्ञैः सूनादोषात् पावयन्तीत्यर्थः। एतेन धान्यखेदनं गृहस्थवानप्रस्थाभ्यां कर्त्तव्य-

देशे धान्येऽन्वये व्युत्पत्तिभङ्गः। अन्यथा पशुरपशुरित्यादौ लक्षणां विनापि योग्यतापत्तिः पशुपदार्थैकदेशे लोमादौ पशुभेदसत्त्वादिति चेन्न क्वचित् पदार्थतावच्छेदकेऽपि पदार्थान्वयस्वीकारात् यथा परमसुन्दर इत्यादौ पदार्थतावच्छेदकसौन्दर्य्ये परमपदार्थान्वय इति। पशुरपशुरित्यादौ तात्पर्य्यानुपपत्तितएव लक्षणास्वीकारात्। यद्वा धान्यपदं सितास्विन्नधान्यावयवे लाक्षणिकं सितास्विन्नपदं तात्पर्य्यग्राहकं यथा चित्रपशुरित्यादौ चित्रपदं तात्पर्य्यग्राहकं उत्तरपदं चित्रगोसम्बन्धिनि लाक्षणिकमिति। एवं मुद्गादावप्युन्नेयं दधि चानुद्धृतसारपयोजातं बोध्यं मन्यन्तेति, हविष्यभोजनानियमस्थले पचनादिभिरित्यादिना दूरत्वार्थकरसादिपरिग्रहः निरययोनीः प्राणिवधद्वारा पापसाधनानि, पाकयज्ञैः विश्वदेवादिभिर्हेतुभिः पञ्चसूनाः पञ्चसूनाजनितपापानि स्वनाशात् स्वनाशद्वारा पावयन्ति शोधयन्ति। एतेन गृहस्थवानप्रस्थाणां

मिति प्रतीयते। किन्तु तत्र धानाख्याङ्गुरजननयोग्यतानाशादेव पापं भवति तच्छान्तिरपि पञ्चयज्ञैर्ज्ञेया। अतएव मनुनापि पञ्चसूनाविवरणे चुल्लीत्युक्तं। धान्यादौ स्वेदनविधानात् कृताकृतएव पाकशुद्धिविवेचनं, द्विःखिन्नत्वादिदोषश्च नाकृते। तद्विहितं कात्यायनेन, कृतमोदनशक्त्वादि तण्डुलादि कृताकृतं। व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा मतं। अतो लाजमोदकादि यथा तथा पक्वमपि श्राद्धादौ दीयते। अगस्त्यसंहितायां, दधि चीरं घृतं गव्यमैक्षवं गुड़वर्जितं। नारिकेलफलञ्चैव कदलीं लवलीन्तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीं। व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः। हैमन्तिकं सितास्विन्नमित्यादिवचनानुसारादेव भोजव्यवहारः। हविष्येषु यवामुख्यास्तदनु व्रीहयः स्मृताः। माष-कोद्रव-गौरादीन् सर्व्वालाभेऽपि वर्जयेदिति कात्यायनवचनन्तु होमप्रकरणात्तत्रैव। नारायणोपाध्यायेनाप्येतद्वचनं अथ हविष्यान्नस्याग्नौ जुहुयादिति गोभिलोक्तं हव्यंस्पष्टयतीति व्याख्यातं। एतेन, कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः। हविष्यभुग्जपन्

---

सूनादोषनाशार्थं यज्ञविधानेन, चुल्लीत्युक्तमिति, गृहस्थस्य नामग्रहणयोरादीपनादेः कर्त्तव्यत्वेन चुल्ल्या आवश्यकत्वादिति, धान्यादावित्यादिना मुद्गादिपरिग्रहः। स्वेदनविधानादिति, स्वेदनस्य कर्त्तृविशेषानिर्द्देशाच्चेति पूरणीयं पाकशुद्धिविवेचनं कर्त्तृविशेषादिकृतत्वनिबन्धनशुद्धाशुद्धिविवेचनं। नाकृते इति, कृतस्वेदस्यापि धान्यस्याकृतत्वनिर्द्देशात् धान्यपाकस्य येन केनापि कृतस्य दोषाभावज्ञापनादितिभावः। तण्डुलादीत्यादिना

स्नातः सर्व्वपापैः प्रमुच्यते, इति विष्णुवचनं हविष्येषु यवा मुख्या इत्यादिवचनबोधितमिति कल्पतरूक्तं निरस्तं। एवञ्च, व्रीहयोमुष्टिमात्राःस्युर्म्माषमुद्गायवाअपि, इति शारदातिलकोक्तं यत्तद्विशिष्य यत्र होमे माषादि विहितं तत्परिमाणपरमिति। स्नानस्य वैदिककर्म्माङ्गत्वेन सामान्यव्रतधर्म्मत्वे सिद्धे नक्तव्रते पुनरुपादानमादरातिशयार्थं (अशक्त्या सामान्यधर्म्मव्युदासेनापि नक्तव्रतसिद्ध्यर्थंवा)। नक्तभोजनकालस्तु भविष्यपुराणे, नक्षत्रदर्शनान्नक्तं केचिदिच्छन्ति सत्तमाः। मुहूर्त्तोनदिनं केचित् प्रवदन्ति मनीषिणः। नक्षत्रदर्शनान्नक्तमहं मन्ये नराधिप। स्मृतिः, नक्तं निशायां कुर्व्वीत गृहस्थो विधिसंयुतः। यतिश्च विधवा चैव कुर्य्यात्तत् सदिवाकरं। सदिवाकरन्तु यत्प्रोक्तमन्तिके घटिकाद्वये।

द्विदलादिपरिग्रहः। जलयोगे धान्यपाकस्य स्वेदनरूपत्वात् धान्यभर्जनेन जातस्य लाजमोदकादेर्नस्विन्नत्वमित्यभिप्रायेणाह अतएवेति, यथा तथा कृतमपि शूद्रादिकृतमपि। न च लाजादेर्धान्यपाकजत्वे शूद्रादिकृतस्य शुद्धत्वेऽपि मोदकादेः कथं शूद्रकृतस्यापि शुद्धत्वमिति वाच्यं स्विन्नमन्नमुदाहृतमित्यनेन सजलतण्डुलपाकेन जातस्य एवान्नत्वबोधनाद्गुड़ादियोगेन पक्वस्य मोदकस्यान्नत्वाभावात् शूद्रादिकृतत्वनिबन्धनदोषस्य अतएव अश्रवणाद्द्विदलादेरपि कृताकृतत्वेन तत्रच पाकशुद्ध्यादिविवेचनं बोध्यं। मनुते बुधा इति एतद्वचनं पुरश्चरणस्थानीयमिति पुरश्चरणकर्त्तृकर्त्तृकभक्षणीयहविष्यान्नबोधकं तेन सर्व्वत्र हविष्यत्वेन नारिकेलादिकं न गृह्यत इत्यभिप्रायेणाह हैमन्तिकं सितास्विन्नं इत्यादि वचनानुसारादेवेति। ननु व्रीहिरपि कात्यायनेन हविष्यत्वकथनात् कथं हैमन्तिकमिति वचनेन व्यवहार इत्यत आह होमप्रकरणात् तत्रैवेति नारायणोपाध्यायेनापीति व्याख्यातमित्यनेनान्वयः

निशानक्तन्तु विज्ञेयं यामार्द्धे प्रथमे सदा। (भविष्ये, उपवासात् परं भैक्ष्यं भैक्षात् परमयाचितं। अयाचितात् परं नक्तमिति, प्रधान मुपवास स्तदसमर्थे नक्तं तदसमर्थे अयाचितं तदसमर्थे भैक्ष्यं एवमन्यतमक्लेशानां तुल्यवद्विध्यसम्भवात्। ) सौरनक्तकालस्तु तिथितत्त्वेऽनुसन्धेयः। मार्कण्डेयः। एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन नैवाद्वादशिको भवेत्। अत्र-विष्णुपूजापारणयोरङ्गान्तरापेक्षया प्राधान्यमवगम्यते आनुकल्पिकेऽप्येतयोरावश्यकत्वात् (८१)।

अथ पुत्रादिप्रतिनिधिः। स्कन्दपुराणं, पुत्त्रञ्च विनयोपेतं भगिनीं भ्रातरन्तथा। एषामभाव एवान्य ब्राह्मणं विनियोजयेत्। गरुड़पुराणं। भार्य्या भर्त्तृव्रतं कुर्य्याद्भार्य्यायाश्च पतिस्तथा। असामर्थ्ये द्वयोस्ताभ्यां व्रत-

एतद्वचनात्कर्त्तृगोभिलोक्तं हविष्यं कर्म्म हविष्यान्नयोरिति सुपां सुपिति स्मरणात् हविष्यान्नेनेत्यर्थः। एतेन कात्यायनवचनस्य होमपरत्वेन निरस्तमित्यनेनान्वयः। विष्णुवचनं विष्णुवचनोक्तहविष्यं बोधितं विहितं। नक्तव्रतकालमाह स्मृतिरिति, यतिविधवयोः कालमाह यतिश्चेति, अन्तिके निशामनोऽपि सौरनक्तकालः सूर्य्यमुद्दिश्य यन्नक्तव्रतं तत्काल इत्यर्थः। नक्तेन नक्तव्रतेन अयाचितेन अयाचितभक्षणान्नेन याच्ञां विना लब्धद्रव्यभोजनेन इति यावत्। दानमाह ब्रह्माण्डे उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्यात् यद्भक्ताद्द्विगुणं भवेदिति। अत्रेति एकादश्युपवासानन्तरदिने अवगम्यते इति पूर्व्वोक्तवचनादित्यर्थः। आवश्यकत्वादिति कर्त्तव्यमिति शेषः। नैवाद्वादशिको भवेदित्यनेन द्वादशी सत्त्वे न तत्परित्याग इति सूचितं (८१)।

विनियोजयेदिति व्रतं इत्यादि, द्वयोः प्रत्येकं भर्त्तृभार्य्ययोस्ताभ्यां भर्त्तृभार्य्याभ्यां हेतुभ्यां दक्षिणा द्रव्यादिवेतनरूपा। अत्र पुत्रादौ

भङ्गो न जायते। वराहपुराणे, पितृमातृपतिभ्रातृ स्वसृगुर्व्वादिभूभुजां। अदृष्टार्थमुपोषित्वा स्वयञ्च फलभाग्भवेत्। अत्रैव विषये कात्यायनः, दक्षिणा नात्र कर्त्तव्या शुश्रूषा विहिता च सा। ननु प्रतिनिधौ ममेह शर्म्मेत्यादिमन्त्रस्य फलं कुत्रान्वेत्विति चेत् प्रधानएव। तथाच शारीरकभाष्ये श्रुतिः, यां वै काञ्चन यज्ञ ऋत्विज आशिषमाशासते यजमानायैव तामाशासत इतिहोवाचेति। ब्राह्मणसर्व्वस्वे यजमानायेत्यत्र यजमानस्येतिपाठे विशेषः। सरलायांसूत्रं, यां वै काञ्चनऋत्विगाशिषमाशास्ते सा यजमानस्यैवेति। अत्र ऋत्विग्यजमानपदे प्रतिनिधिप्रधानपरे आकाङ्क्षितत्वात्। अतएव प्रतिनिधिपुत्रादिना आयान्तु नः पितरइत्यादिरनूहएव पठ्यते। वाक्यस्य काल्पनिकत्वात्तच्च न तथेति। कालमाधवीये, काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके हि सः। काम्येषूपक्रमादूर्द्ध्वं केचिदिच्छन्ति सत्तमाः। नित्यं नैमित्तिकञ्च प्रतिनिधिनाप्युपक्रम्य कारयेत् काम्ये तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात् असामर्थ्ये

शुश्रूषेति पुत्रादीनामित्यादि, यजमानाय यजमानार्थं। इत्यञ्च ममेहेत्यत्रास्मत्पदं नोच्चारयितृपरं किन्तु लक्षणया स्वोच्चारयितृप्रयोजकपित्रादिपरं। एवमायान्तु न इत्यत्रापि वाक्यस्य कल्पनायाः स्वारसिकत्वादिति भावः। उपक्रम्य संकल्प्य अस्यापि प्रतिनिधिनेत्यनेनान्वयः। मात्रपदेन काम्यव्यवच्छेदः। प्रतिनिधिलाभादिति कालमाधवीयवचनादित्यर्थः। सजातीयमिति सधुवर्ज्जनस्य प्रतिनिधिर्न गुडवर्ज्जनमपीति भावः। भावस्तु कदाचिदिति अभावस्य प्रतिनिधि रित्यन्वयबोध। क्वचिद्वचनबलादभावोपि अभावस्य प्रतिनिधिः। यथैकादश्यादौ हविः-

उपक्रमादूर्द्ध्वं प्रतिनिधिनापि कारयेत्। एतच्च काम्य-
श्रौतपरं काम्यस्मार्त्तन्तु अन्यद्वाराप्युपक्रम्य कार्य्यं।
तथाच पराशरभाष्ये शातातपः, श्रौतं कर्म्म स्वयं
कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्, अशक्तौ श्रौतमप्यन्यः
कुर्य्यादाचारमन्ततः। अन्तत उपक्रमात् परतः। एतच्च
काम्येऽपि प्रतिनिधिविधायकं नित्यनैमित्तिकमात्रपरत्वे
श्रौतस्मार्त्तभेदोपादानं व्यर्थं स्यात् तयोरविशेषादेव
प्रतिनिधिलाभात्। अतएव भारतपाठादौ तथासमा-
चारः। स्मृत्यर्थसारे, नाभावस्य प्रतिनिधिरभावान्तरमि-
ष्यते। सजातीयत्वेऽप्यभावान्तरमभावस्य प्रतिनिधिर्नेष्यते।
भावस्तु कदाचिद्यथोपवासादौ ब्राह्मणभोजनादीति।
नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्।
श्रोत्रियाणामभोज्यं यद्द्रव्यं हि तदशेषतः। ग्राह्यं
प्रतिनिधित्वेन होमकार्य्ये न कुत्रचित्। द्रव्यं वैक-
ल्पिकं किञ्चिद्यत्र सङ्कल्पितं भवेत्। तदभावे सङ्-
ग्राह्यं न तु वैकल्पिकान्तरं। उपात्ते तु प्रतिनिधौ
मुख्यार्थो लभ्यते यदि। तत्र मुख्यमनादृत्य गौणेनैव

ष्यभोजनातिरिक्तभोजनाभावो भोजनसामान्याभावरूपोपवासप्रतिनिधिः।
नच तत्र हविष्यान्नभोजनमेव प्रतिनिधिरिति वाच्यं। तथा सति
हविष्यभोजनं कृत्वा द्रव्यान्तरभोजनेऽपि प्रतिनिध्यनुष्ठानजन्यादृष्टोत्
पत्त्यापत्तेः। एवञ्च नक्तं हविष्यान्नमित्यादिवचने हविष्यान्नादिपदं
तदतिरिक्तभोजनाभावपरं वस्तुतो हविष्यान्नादिपदं तदतिरिक्तभोज-
नाभावविशिष्टतद्भोजनपरं। अन्यथा भोजनसामान्याभावस्थले हवि-
ष्यातिरिक्तभोजनाभावस्यापि सत्वान्मुख्यप्रतिनिधिजन्यादृष्टद्वया-
पत्तेः। एवं अनोदनमित्यत्र ओदनभोजनाभावविशिष्टकिञ्चिद्भोजन-

समापयेत्। संस्काराणामयोग्योऽपि मुख्यएव हि गृह्यते। नतु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः। मुख्ये कार्य्यासमर्थे तु लब्धेऽप्येतस्य नादरः। प्रतिरूपकमादाय शक्तमेवोपयुज्यते। कार्यरूपैस्तथा पर्णैः क्षीरैः पुष्पैस्तथा फलैः। गन्धैरसैः सदृग्ग्राह्यं पूर्व्वालाभे परं परं। ग्राम्याणान्तु भवेद्ग्राम्यमारण्यानामरण्यजं। यवालाभे तु गोधूमा स्तथा वेणुयवादयः। हविष्ये गोघृतं ग्राह्यं तदभावेऽपि माहिषं। आजं वा तदभावे तु साक्षात्तैलं प्रयुज्यते। तैलाभावे ग्रहीतव्यं तैलजं तिलसम्भवं। तैलजं तिलभृष्टं तिलसम्भवं तिलपिष्टादि। तदभावे तु सस्नेहं कौसुम्भं सर्षपोद्भवं। वृक्षस्नेहस्तथा ग्राह्यः पूर्व्वाभावे परः परः। तदभावे गवादीनां क्रमात् क्षीरं विधीयते। तदभावे दधि ग्राह्यमलाभे तिल इष्यते। यत्र मुख्यं दधि क्षीरं

मैव लब्धं अन्यथा उपवासकृतेषु मुख्यप्रतिनिध्युभयसिद्ध्यापत्तेरिति, न कुत्रचिदभावस्याभावः प्रतिनिधिरिति। नचोपवासासमर्थ एव प्रतिनिधेः फलजनकस्य, प्रभुः प्रथमकल्पस्येत्यादिवचनेन वोधनात् कथमुपवासे कृते उभयफलसिद्धिरिति वाच्यं। उपवासासमर्थस्य 'रोगादियुक्तस्य सत्यपि कथञ्चिद्दैववशात् उपवासस्थल एव प्रति-निधिफलसत्त्वापि सम्भवात्। नच तत्रोपवासप्रतिनिधिभ्यां एकमेव फलं जन्यत इति वाच्यं प्रतिनिधिफलन्यूनताश्रवणात् मुख्यफलप्रतिनिधिफलं प्रत्येकप्रतिनिधेर्जनकत्वादिति दिक्। निषिद्धमिति, यत्र कर्म्मणि यन्निषिद्धं वस्तु सामान्यतोवा तत्र विहितद्रव्यस्यालाभे तत्सुसदृशमपि तद्वस्तु तत्र कर्म्मणि सामान्यतो वा न नियोजयेत्। यथामुद्गाभावे मासादिकमित्यर्थः। द्रव्यं वैकल्पिकमिति, व्रीहियवादिविकल्पस्थले व्रीह्यादिकारणकत्वेन यागे

तत्रापि तदलाभतः । अजादेः क्षीरदध्यादि तदभावेऽपि गोघृतं । मुख्यासन्नोऽथवा ग्राह्यः कार्य्यकारणसन्ततौ । अतएव घृताभावे पूर्व्वं दधि ततः पयः । तथा, सर्व्वत्र गौणकालेषु कर्म्म चोदितमाचरेत् । प्रायश्चित्तं व्याहृतिभि र्हुत्वा कर्म्म समाचरेत् । मत्स्यसूक्ते, घृतं न लभ्यते यत्र शुष्कक्षीरेण होमयेत् । क्षीरस्य च दधि ज्ञेयं मधुनश्च गुड़ो भवेत् । आयुर्व्वेदे, मधु यत्र न लभ्येत तत्र जीर्णगुड़ो भवेत् । पैठीनसिः, काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात् सर्व्वाभावे यवः प्रतिनिधिर्भवतीति । काण्डं नालं, प्ररोहोऽङ्कुरः । सर्व्वालाभे यवइति कल्पतरुः । अवयवइति नारायणोपाध्यायः । शान्तिदीपिकायां नारदीयपञ्चरात्रे, अभावे चैव धातूनां हरितालं विधीयते । वीजानामप्यभावे तु यव एकः प्रशस्यते । ओषधी-

मङ्गल्यते तदभावे शाल्यादिकं सदृशं ग्राह्यं नतु यवादिकमिति भावः । संस्कारागामयोग्योऽपि इत्यवघातादिरूपसंस्कारानर्होऽपि मुख्यो व्रीहितण्डुलादिरेव ग्राह्यो न तु तत्प्रतिरूपकशालिधान्यादिकमवघातयोग्यमपीति समुदितार्थः । मुख्ये व्रीह्यादौ कार्य्याक्षमे पुरोडाशाद्यनर्हे एतस्य मुख्यस्य प्रतिरूपकं तत्सदृशं शाल्यादिकं शक्तं पुरोडाशादियोग्यं । कार्य्यैरित्यादि तृतीयान्तानां सदृगित्यनेनान्वयः । परःपर इति मुख्याभावे तत्कार्य्यतुल्यकार्य्यं वस्तु ग्राह्यं तदभावे मुख्यसमानरूपं तदभावे मुख्यसमानपर्णमित्यादिकं वोध्यं तैलं तिलतैलं तत्रैव मुख्यप्रयोगात् कौसुम्भं कुसुम्भतैलं गवादीनामित्यादिना क्रमात् महिषाजयोः परिग्रहः । अभावे दध्यभावे, मुख्यासन्नः मुख्येन साक्षात् कार्य्यकारणभावरूपसम्बन्धवान् कार्य्यकारणसन्ततौ कार्य्याणां कारणानां

नामभावे तु सहदेवा प्रशस्यते। रत्नानामप्यभावे तु मुक्ताफलमनुत्तमं। लौहानामप्यभावे तु हैमपात्रं प्रकल्पयेत्। लौहानां तैजसपात्राणां। न्यायप्राप्तप्रतिनिधिमधिकृत्य जैमिनिः, न देवताग्निशब्दक्रियमिति। अस्यार्थः देवताया आहवनीयादेः मन्त्रस्य प्रयाजाद्यदृष्टार्थकर्म्मणश्चादृष्टमात्रार्थकत्वेनारादुपकारत्वान्न प्रतिनिधिः। व्रीह्यादीनान्तु सन्निपत्योपकारकानां पुरोडाशसाधनं दृष्टमेव प्रयोजनमिति तत्र प्रतिनिधिरुचित-

त्वाद्व्रीहौ तेषां साक्षात् परम्पराक्रमेण वा तुल्यं, गौणेति, मुख्यकालाकरणे चेदं बोध्यं। अवयवस्तत्तद्द्रव्यावयवः। ओषधीनां फलपाकान्तानां, सहदेवावत्वादण्डोत्पलयोः शारिवौषधी। सहदेवीतु सर्पाख्या सहदेवीतु पाण्डवीति। अत्र शारिवाद्या ओषधित्वेन स्यात्। नदेवतेति, इत्युक्तं तथाच देवतादिकं न प्रतिनिधिरर्हतीत्यर्थः। तत्र देवताः पूज्यत्वेन विधिप्राप्ता इन्द्रादयः। एवं यत्राग्नौ होमो विहितः येन मन्त्रेण कार्य्यकरणमुक्तं यच्च विहितं कर्म्म च तत्र तेषाम सम्पत्तौ सादृश्यादिन्यायेन न देवतान्तरादि ग्रहणं यत्रच वचनमस्ति तत्र तेषामपि प्रतिनिधिग्रहणं तथाच वैदिकाग्नेरभावे लौकिकाग्निजलादौ वैश्वदेव होमादि, यथोक्तमन्त्राज्ञाने गायत्र्यादि। चान्द्रायणाद्यशक्तौ धेनुदानादि क्रियते। देवतापदार्थमाह देवताया इत्यादि, अग्निपदार्थमाह आहवनीयादेरिति, शब्दपदार्थमाह मन्त्रस्येति, क्रियापदार्थमाह प्रयाजाद्यदृष्टेति, मात्रपदेन दृष्टफलव्यावर्त्तनं। आरादुपकारकत्वेन साक्षात् फलोपयोगित्वं न तथाच देवतायास्तत्तद्देवतात्वेनैव फलजनकत्वावगमात् नान्यत्र स्वल्पफलसिद्धिरितिभावः। सन्निपत्य परम्परया, साधनं जननं, दृष्टमेवेति, तथाच प्रधानकर्म्मसाधनस्य पुरोडाशस्य सिद्ध्यर्थं व्रीह्यादिकमुक्तं तदलाभे द्रव्यान्तरेण पुरोडाशादेर्निष्पत्तौ तद्ग्रहणमितिभावः। वस्तुतस्तु आरादुपकारकत्वात् कालान्तरे उपकारकत्वादाराद्दूरसमीपयोरित्यनेन आरादित्यस्य दूरार्थकत्वाददृष्टद्वारकेणेति.

द्रूयुक्तं । परिशिष्टं, मुख्यकाले तु मुख्यञ्चेत् साधनं नैव लभ्यते । तत्कालद्रव्ययोः कस्य गौणता मुख्यतापि वा । तत्र भरद्वाजः, मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनं । न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणं । गौणेषु तेषु कालेषु कर्म्म चोदितमारभेत् । प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ( ८२ ) ।

उत्तरमत सिद्धान्तरूपमिति केचित् । तदभिप्रायकं मीमांसाषष्ठाध्यायसूत्रं । पौर्व्वापर्य्ये पूर्व्वदौर्व्वल्यं

तत्रहेतु स्तत्काले फलजनन ऽदृष्टस्यौत्पादनानुपपत्तेः एवञ्च वचनं विना युक्त्या अदृष्टद्वारा फलसाधनस्य प्रतिनिधिग्रहणे तदागतफलस्यादृष्टत्वात् संशय एवेति न तदाचरणमितिभावः । सन्निपत्य साक्षात् तथाच फलस्यादृष्टत्वात् प्रतिनिध्याचरणमितिभावः गौणता अप्रधान्येन अनपेक्षनीयता, मुख्यद्रव्यालाभेन मुख्यद्रव्यलाभार्थं । अत्र हेतुमाह गौणेष्विति तथाच गौणकाले कर्म्माकरणे प्रायश्चित्तश्रवणात् मुख्यकालत्यागस्य पापहेतुत्वमवगम्यत इति तत्त्यागोऽनुचितः किन्तु दैवात् मुख्यकालेऽकरणे एवगौणे कर्त्तव्यमिति समाधानं ( ८२ ) ।

केषां मतमाह उत्तरमतमित्यादि, उत्तरमतं मुख्यद्रव्यानुरोधेन गौणकाल कर्त्तव्यतामतं सिद्धान्त इति, पूर्व्वमतन्तु पूर्व्वपक्ष इति शेषः । समुच्चयासम्भवादिति, पूर्व्वं अदक्षिणयागे कृते यागार्थं किञ्चिद्द्रव्येन विच्छेदकालीनसर्व्वस्वात्तदनन्तरं सर्व्वस्वदक्षिणयागासम्भवः प्रथमतः सर्व्वस्वदक्षिणयागकरणे धनाभावेनादक्षिणयागासम्भवइति न समुच्चयसम्भवइति । असञ्जातविरोधित्वात् प्रथमनिमित्ताधीनयागकरणे विरोधानुपस्थितेरुत्तरस्योत्तराभिधानस्य पूर्व्वनिरपेक्षस्य पूर्व्वविध्युत्थापिताकाङ्क्षानुत्थापितत्वात्तथाकाङ्क्षोत्थापितत्वं पूर्व्वस्यादौर्व्वल्यस्य बाधायोग इतिभावः । बाधकतयोदितत्वात् अन्यथा तदुत्थानासम्भव इति भावः । बाध्यत्वायोगादिति, तथाचोत्तरनैमित्तिकमेव कार्य्यमिति भावः । पूर्व्वमिति कर्म्मपदं असञ्जातत्वात् प्राग-

प्रकृतिवदिति, ज्योतिष्टोमेऽन्योन्यं सम्बध्य यज्ञशा-लातोवहिर्निर्गच्छतामृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते। यद्युद्गाता विच्छिन्द्यादद‌क्षिणेन यजेत यदि प्रतिहर्त्ता सर्व्वस्वदक्षिणेनेति। तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासम्भवात् किं पूर्व्वं कार्य्यं उत वा परमिति संशये हि अनु-पजातविरोधित्वात् पूर्व्वमिति पूर्व्वपक्षे राद्धान्तः पौर्व्वा-पर्य्ये सति निमित्तयोः पूर्व्वस्यैव निमित्तस्य दौर्व्वल्यं उत्तरस्य पूर्व्वनिरपेक्षस्य तद्बाधकतयोदितत्वात् पूर्व्वोदय-काले उत्तरस्याप्राप्तत्वेन पूर्व्वेण बाध्यत्वायोगात्। उक्तं हि, पूर्व्वं परमजातत्वादबाधित्वैव जायते। परस्या-

नुक्तत्वात् तदर्थस्य प्रागनुपस्थितत्वेनेति यावत्। जायते स्वार्थबोधो-प्रधायकतया सम्पद्यते। अनन्यथोत्पादादिति, अन्यथा तद्बाधेनोत्-पादाभावात् विषयभेदविरहेन विरोधादयमभिप्रायः प्रथमतः यद्युद्गाता विच्छिन्द्याददक्षिणेन यजेतेति श्रुत्या उद्गातृविच्छेदकालसामान्ये अदक्षिणयज्ञस्य कर्त्तव्यतावोधो जायते अनन्तरं यदि प्रतिहर्त्ता तदा सर्व्वस्वदक्षिणेन श्रुत्यावोधकाले क्रमेणोभयविच्छेदस्थले समुच्चयासम्भव-ग्रहेण पूर्व्वश्रुतिजन्यबोधे अप्रामाण्यग्रहो जायते अनन्तरं पुनःपूर्व्व-श्रुत्यनुसन्धानेन उद्गातृमात्रविच्छेदे अदक्षिणयागकर्त्तव्यतावोधस्ततः-परश्रुत्या प्रतिहर्त्तृविच्छेदस्थलसामान्ये सर्व्वस्वदक्षिणयागस्य कर्त्तव्यता-बोधात् क्रमेणोभयविच्छेदे सर्व्वस्वदक्षिणस्यैव कर्त्तव्यता तथा प्रथमोक्त-द्रव्यप्रतिनिधिश्रुतिबाधेन परोक्तगौणकालकर्त्तव्यतावोधश्रुत्यामुख्यद्रव्येण गौणकालकर्त्तव्यतावोधनात् मुख्यद्रव्यार्थं गौणकालप्रतीक्षणमितिभावः। चरमभाविभिश्चरमोक्तश्रुतिप्राप्तैर्निरपेक्षन्यायनिरपेक्षश्रुतिलब्धैः। जघन्यत्वं अग्रोत्पन्नत्वं पूर्व्वनिरपेक्षपरोत्पन्नस्य रजतज्ञानस्य शुक्तिकायां रजता-रोपस्य शुक्तिकाज्ञानेन शुक्तिकेयमित्यवधारणेन तदनपबाधने रजतज्ञाना-

नन्ययोत्पादादुक्तवाधेम सम्भवइति। प्रकृतिवदिति तथाहि प्रकृतौ क्लिप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षिण्यां प्राप्ताः कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्वाध्यन्ते तद्वदिति। अतएव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः ज्येष्ठत्वञ्चानपेक्षितस्य वाध्यत्वे हेतु र्न वाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा वाधदर्शनात् तदनपवाधने तदपवाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः। तथाच, पूर्व्वात्परवलीयस्त्वं तत्र नाम प्रतीयतां। अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेदिति। यदि च पूर्व्ववचनस्य पूर्व्वपक्षत्वं वैयर्थ्यं स्यादतउभयवचनार्थौ विवक्षणीयौ तदा विषय-

नपवाधने रजतज्ञानेन शुक्तिज्ञानापवाधने इति शेषः तदपवाध्यात्मनः रजतज्ञान प्रतिबध्यस्य तस्य शुक्तिज्ञानस्य, मतोपसंहारकारिकामाह, तथाच, पूर्व्वात् परवलीयस्त्वं पूर्व्वात्पश्चादुत्तरोत्पन्नस्य वलीयस्त्वं। स्वमतं वक्तुमाह यदिचेत्यादि, पूर्व्ववचनस्य मुख्यकालमुपाश्रित्य गौणमप्यस्तिसाधनमिति वचनस्य पूर्व्वपक्षत्वे गौणेषु तेषु कालेष्वपि वचनेन निरुक्तपूर्व्वोक्तन्यायेन च वाध्यत्वे अप्रमाणत्वेन कल्पितत्वे इति यावत्। विषयभेदेनेति, तथाहीत्यादि, पशुस्थाने पशोरभावे तत्स्थालीपाकं हुत्वैतदेवेति संस्कारतत्त्वे विवृतमिदं। उभयोपसंहारासामर्थ्ये मुख्यद्रव्यमुख्यकालयोः समवायकरणासामर्थ्ये द्रव्यादरः। कर्त्रधीनत्वाभावादिति, तथाच स्वसाध्यस्यैव विहितस्यानादरे दोषो ननु स्वासाध्यस्येतिभावः, ननु यदा मुख्यद्रव्यसन्निधानं तदामुख्यकालो नास्त्वित्यत आह वर्जनीयत्वेति, द्रव्यद्वारा कर्म्मण्यनुष्ठिते सति कालस्य विशेषणत्वं द्रव्याभावे कर्म्मानुष्ठानाभावात् तस्य विशेषणत्वाभावात् द्रव्यापेक्षया न्यूनत्वमिति भावः। सिद्धे कर्म्मण्युपसर्ज्जनत्वेन विशेषणत्वेन उपस्थितत्वात् वर्जनीयेति पाठे रोगादिना कालान्तरकरणे मुख्यकालपरित्यागस्यावश्य-

भेदेन व्यवस्थापनीयौ तथाहि यत्राष्टकाश्राद्धादौ कालान्तराभावस्तत्र तत्कालानुरोधाद्विहितद्रव्यालाभेऽपि प्रतिनिहितद्रव्यमादाय मुख्यकाल एव तत्करणं ननु वचनानुपात्तस्वेच्छाकल्पनागौणकालप्रतीक्षणं। तथाच छन्दोगपरिशिष्टं, स्थालीपाकं पशुस्थाने कुर्य्याद्‌यद्यानुकल्पिकं। अपयेत्तं सवत्सायास्तरुण्या गोः पयस्य न्वित्यादि। यत्राब्दिकश्राद्धादौ कृष्णैकादश्यादिगौणकालोऽस्ति तत्र मृताहादावन्नाद्यभावे तदनुरोधेन उपवासादिरूपं प्रायश्चित्तं कृत्वा गौणकाले तत् कर्त्तव्यं तथाच लघुहारीतः, एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयं। अभावे पाकपात्राणां तदहः समुपोषणं। तथा छन्दोग-परिशिष्टं, संस्कारा

परिहारादित्यर्थः। ननु तथापि कालस्य हेतुत्वात् कथं न तदादर इत्यत आह निमित्तत्वमात्रेणेति, साधारणनिमित्तत्वेनेत्यर्थः बहिरङ्गत्वात् फलहेतुभूतकर्म्मस्वरूपाघटकत्वात्, चकारात्परं नादर इति शेषः द्रव्यादर इत्यत्र हेतुमाह द्रव्यस्यत्वित्यादि। ननु यागादिकर्म्मणः प्राधान्य एव तन्निर्व्वाहकस्य प्राधान्यमित्यत आह कर्म्मणः कारकत्वेन, साक्षात् मुख्यफलजनकत्वेन अन्तरङ्गत्वात् प्राधान्यं यद्वा ननु कालस्यापि जन्यमात्रहेतुतया कर्म्मनिर्वाहकत्वमस्तीत्यत आह कर्म्मण इति व्रीहिभिर्यजेतेति श्रुत्या कर्म्मणः करणत्वादित्यर्थः। अन्तरङ्गत्वात् कर्म्मस्वरूपघटकत्वात् व्रीह्यादिकरणकयागत्वेनैव फलहेतुत्वादिति भावः। अत्रेदमवधेयं। अदक्षिणेन यजेतेति श्रुत्यर्थबोधे अप्रामाण्यज्ञानजननं पुनरुद्भावमात्रविच्छेदनिमित्तकादक्षिणयागकर्त्तव्यताबोधकत्वस्यापेक्ष्य लाघवात् प्रथमतो निरपेक्षादक्षिणयागश्रुत्योद्भावविच्छेदसामान्यनिमित्तकादक्षिणयागकर्त्तव्यताबोधानन्तरं सर्व्वस्वदक्षिणश्रुत्या बोधकाले कर्त्तृणोभयविच्छेद समुच्चयासम्भवग्रहेण केवलप्रतिहर्त्तृविच्छेद-

अतिपद्येरन् स्वकालाद्दैत् कथञ्चन। कृत्वैतदेव कुर्व्वीत ये तुप्रनयनादधः। ननु प्रत्याब्दिकश्राद्धे यथा गौणकालसत्ता तथा मुख्यकाले गौण द्रव्य-सत्तापि विद्यते का विनिगमना मुख्यद्रव्यग्रहणे इति चेदुच्यते यत्र तु विनिगमकवचनाभावस्तत्र यद्यपि क्रियायाः प्राधान्यात् कालोद्रव्यं द्वयमपि गुणभूतमेव तथाप्युभयोपसंहारासामर्थ्ये द्रव्यादरः कालस्य सूर्य्या-दिक्रियाघटितस्य कर्त्रधीनत्वाभावादवर्ज्जनीयत्वसिद्धेः अ-सन्निधिकत्वान्निमित्तत्वमात्रेण वहिरङ्गत्वाच्च। कालस्य निमित्तत्वं व्यक्तं भविष्ये। अतः कालं प्रवक्ष्यामि निमित्तं कर्म्मणामिह। द्रव्यस्य तु यागस्वरूपनिर्व्वाह-कत्वेनाभ्यर्हितत्वात् कर्म्मणः कारकत्वेनान्तरङ्गत्वाच्च।

---

निमित्तकसर्व्वस्वदक्षिणयागवोधकत्वनमतः पौर्व्वापौर्य्ये पूर्व्व दौर्व्वल्यमिति सूत्रोदाहरणं सामान्यविशेषाभ्यां श्रुतिद्वयं यत्रोक्तं तत्र पूर्व्वोक्तसामान्य-विधेः सङ्कोचकं यथा ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रमि-त्यादि व्यक्तमिदं प्रकृतिवदिति दृष्टान्तेन तथाहि प्रकृतिवद्विकृति रिति न्यायेन सामान्यतः प्रकृतिधर्म्मप्राप्तया कुशा अपि प्राप्ता विशेष श्रुत्या च तद्बाधकतया विकृतौ यागे शरविहिता इति भवतु भवतुवोभयविच्छेदे सर्व्वस्वदक्षिणस्य निरुक्तयुक्त्या आधिक्येनचाचरणं तत्रापि प्रकृतस्थले मुख्यकाले प्रतिनिधिद्रव्येण कार्य्यकरणमेव श्रेयः ननु मुख्यद्रव्यानुरोधेन गौणकालापेक्षणं गौणकाले तत्करणे प्राय-श्चित्तश्रवणात् मुख्यकाले कार्य्याकरणे पापमुत्पद्यते नच गौणकाले तत्करणप्रागभावविशिष्टं मुख्यकालकार्य्याकरणं पापहेतु गौरवात् तथा यत्र मुख्यद्रव्यानुरोधेन गौणकालापेक्षा कृता कथञ्चित् दैवात् गौणकाले तदकरणे पापस्थितिरेवस्यात् अत उक्तं वरमेकाहुतिः काले नाकाले लक्षकोटय इति, श्वः कार्य्यमद्यकर्त्तव्यं इत्यादिच। प्रथम-

पुत्रादिप्रतिनिध्यभावे तु ब्रह्मवैवर्त्ते:, उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्याद्द्व्यत्ताद्द्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसङ्ख्यान् वा यथाशक्ति व्रतेनरः। देवीं गायत्रीं। काश्यपपञ्चरात्रे, मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं समर्पयेत्। अत्र यो दीक्षितः कश्चिद्वैष्णवोभक्तितत्परः। निर्निमित्तमदीक्षायां नच क्षुद्व्याधिपीड़ितः। अन्नं वा यदि भुञ्जीत मूलं फलमथापि वा। अपराधमहं तस्य न क्षमामि तु कश्यप। क्षिपामि नरके घोरे हृच्छल्यं मम जायते। निमित्तं प्रारब्धचान्द्रायणादिव्रतविशेषइति, दीक्षायां चरुशेषप्राशनस्य विहितत्वाददीक्षायामित्युक्तं, क्षुद्व्याधिना पीड़ितः, सर्व्वमेतत् प्रदर्शनमात्रं शक्तौ निर्विरोध इत्यर्थः। अन्नादिकमप्युपलक्षणमिति जीमूतवाहनः। अत्र निमित्तं प्रारब्धचान्द्रायणादीति यदुक्तं, तन्न, चान्द्रायणादौ भोजनस्यावश्यकत्वाभावात्। किन्तु निमित्तं रविवाराद्युपवास-

वचनमष्टकाश्राद्धादिपरतया व्याख्यातमपि न सुन्दरं अष्टकादिश्राद्धे गौणकालकल्पनायाः कुत्राप्यभावान्नमुख्यद्रव्यालाभेनेत्यनुरोधलिखनासङ्गतेः, नच स्वकालादुत्तरोगौण इति सामान्यवचनबलादष्टकादेरपि गौणकालोऽस्तीतिवाच्यं मृताहाविदिते तथेति वचनेन देये पितॄणां श्राद्धेत्वित्यनेन चाष्टकादे गौणकालनिराकरणात्। यच्चोक्तं कालस्य निमित्तहेतुत्वेन दुर्व्वलत्वं तदप्यकिञ्चित्करं मुख्यकाले कार्य्यानुष्ठानस्यैव सम्पूर्णफलजनकत्वेन मुख्यकालसाङ्गकार्य्यानुष्ठानयोस्तुल्यकक्षत्वात्, प्रतिनिधौ फलहानेरावश्यकत्वेऽपि गौणकाले कर्म्माचरणे फलद्वयहानिः

पारणं जलपानरूपं। दीक्षायामपि चरुप्राशनं प्राण-रूपं, अन्यथा, पुरोडाशोऽपि सोमोवा संप्राप्ते हरि-वासरे। अभक्ष्येण समः प्रोक्तः किं पुनस्त्वाशनक्रिया, इति नारदीयं विरुध्येत। प्राणस्य चोभयरूपतामाह कालादर्शे श्रुतिः, पित्रामाग्नेयं तन्नैव प्राशितं नैवाप्रा-शितञ्च भवतीति। पित्रा मित्युपलक्षणं आकाङ्क्षायाअवि-शिष्टत्वात्। तेनैकादश्यां तदुभयत्र जलपारणं चरु-शेषप्राणञ्च विधायोपवासः कार्य्यः। अथ चान्द्रायणादि-ग्रासपरिसंख्या। भोजनस्य रागप्राप्तत्वान्नाप्राप्तप्रापको-विधिः सचाहरहः सन्ध्यामुपासीतेत्येवंरूपः। नापि तद्भक्षणस्यावश्यकत्वेन स्वायोगमात्रव्यवच्छेदफलकरूपो-नियमविधिः। सच तत्तत्तिथौ तत्तद्ग्रासान् भुञ्जीतेवे-त्येवंरूपः। तथाच, श्रुत्या व्याह्रियमाणे तु यत्रावश्यं क्रिया क्वचित्। चोद्यते नियमः सोऽत्र ऋतावभिगमो-यथा। तथात्वे पितृमरणादावपि भोजनं प्रसज्येत। हविष्यभोजनव्रतादावप्युपवासाभावश्चापद्येत। तद्भक्षण-समकालमेवान्यभक्षणेऽपि न दोषः स्यात्। तस्मादगत्या

प्रायश्चित्तस्य च श्रवणात् कालस्यप्राधान्याच्च, एकोद्दिष्टे पाकपात्राभावे यद्गौणकालादरणमुक्तं तत्पाकेनैव सदा स्वयमितिवचनपूर्व्वार्द्धेन पाकस्य नियमितत्वात्। यद्वा अभावे पाकपात्राणामिति वहुवचनस्य गणार्थ-त्वेन आमान्नादेरप्यभाव इति गम्यते इति प्रतिनिध्यामान्नादेः सम्भवं एकोद्दिष्टं मुख्यकाल एव कर्त्तव्यं सामान्यविशेषभावं विना श्रुति-विरोधे विषयभेदकल्पनया समाधानस्यासम्भवे श्रुत्योर्विरोधे न्यायस्तु वलवान् व्यवहारतः, इति वचनान्न्यायेन विरोधोवार्य्य इति, पुत्रादि प्रतिनिधिनोपवासाचरणे प्रधानस्योपवासस्य सिद्धिः किन्तु तत्र स्वतन्त्र-

श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका, इत्युक्तस्वार्थहान्य-न्यार्थकल्पनारागप्राप्तबाधरूपदोषत्रयदुष्टाप्यन्ययोगव्यवच्छे-दफलिका परिसंख्यैव युक्ता। सा तु सति भोजने तत्त-त्तिथौ तत्तद्ग्रासानेव भुञ्जीत नान्यदित्येवंरूपा। तस्मा-त्तदतिरिक्तभोजनाभावपरत्वेनोपवासेऽपि दोषाभावः। तथाच, अन्यार्थश्रूयमाणा च यान्यार्थप्रतिषेधिका। परिसंख्या तु सा ज्ञेया यथा प्रोक्षितभोजनं। अन्यथा, प्राजापत्यव्रते त्र्यहमद्यादयाचितमिति मनूक्तस्य अयाचितन्तु मध्याह्ने चतुर्विंशति शुद्धयदिति ब्रह्मपुराणोक्तस्यायाचित-स्यालाभे व्रतलोपापत्तिः स्यात्। अयाचितन्तु स्वकीया-

कत्वविरहेण प्रयोजककर्त्तव्यत्वेन च फलवत्त्वं स्वस्येति, दानाद्यनु-कल्पे च प्रधानस्योपवासस्य अभावेन ततोऽपि न्यूनफलमिति प्रतिनिध्यभावेऽपी त्युक्तं, व्रते व्रतविषये व्रतप्रतिनिधितयेतियावत् एवं प्रागुक्त-हविष्यान्नभोजनादिकमप्युन्नेयं दीक्षितोगृहीतमन्त्रः, अदीक्षायां यज्ञावशेषदीक्षाराहित्ये, निमित्तमित्यादिजीमूतवाहनमतं आवश्यकत्वा-भावादिति, तत्रभोजनविधिः परिसंख्यारूपत्वादितिभावः। यद्यपि व्रते-पञ्चगव्यपानादीनां क्वचित्शोधकतयानिमित्तत्वमस्ति तथापि तत्पानस्य जलपानतुल्यतया नदोषः। अभक्ष्येण इति वस्तुतो अत्राप्यन्नादिभोजनं निषिद्धं जलपारणमेव कर्त्तव्यमितिनिमित्तान्तरमेवविवेच्यं अशनक्रिया-सामान्यद्रव्यभोजनं पित्र्यं पितृशेषद्रव्यं एतच्च नित्योपवासदिनमधि-कृत्य वोध्यं जलपारणं रविवाराद्युपवासपारणदिनाभिप्रायकं जल-पानस्याप्यशितत्वमनशितत्वञ्चोक्तं चरुघ्राणं दीक्षाभिप्रायकमिदमुपलक्षणं श्राद्धशेषभोजनस्थले तच्छेषघ्राणंवोध्यं केचित्तु दीक्षितइति कथ-नाददीक्षायाञ्च निर्निमित्तं यदिभुञ्जीत इत्यन्वयेन अदीक्षितस्यापि निषेध-इत्याहुः चान्द्रायणादिवच्चान्द्रायणादिव्रतस्थानीयग्रासभोजनपरिसंख्या-

नुद्‌योगेन पराहृतंवस्तु। तथाच यतिधर्म्मे उशनाः, भिक्षाशनमनुद्‌योगात् प्राक् केनाप्यनिमन्त्रितं। अयाचितन्तु तद्भिक्ष्यं भोक्तव्यं मनुरब्रवीत्। याज्ञवल्क्यः, अयाचिताहृतंग्राह्यमपिदुष्कृतकर्म्मणः। अन्यत्रकुलटाषण्डपतितेभ्यस्तथा द्विषः। एतेन तदानीमयाचितत्वेन गृहे स्थितमप्ययाचितमिति निरस्तं। प्राजापत्ये परिसंख्यां व्यक्तीकरोति गोतमः, अथापरंत्र्यहं न कथञ्चन याचेतेति। तथा प्रायश्चित्तविवेककृद्भिरन्नादिजातप्राणिवधे मनूक्तघृतप्राशनस्य प्रायश्चित्तरूपत्वात् शवानुगमननिमित्तस्नानव शरीरशुद्धिहेतुरूपत्वाभावादन्नान्तरनिवृत्तिरवसीयतइति वदद्भिः सर्व्वत्र प्रायश्चित्ते परिसंख्योक्ता। दुर्गसिंहोऽपि अश्राद्धभोजीत्यस्य सति भोजनेऽश्राद्धमेवभुङ्क्ते नतुश्राद्धमित्यर्थः। नत्वश्राद्धंभुङ्क्तएवेति नियमस्तथात्वे यदाऽन्नाद्यभावादश्राद्धं न भुङ्क्ते तदा व्रतलोपःस्यात् यथा स्नानंमया कर्त्तव्यमेवेति नियमे सत्यस्नानात्व्रतभङ्ग इत्याह। अथ पारणनियमः। यद्यप्यत्र चान्द्रायणादिवत् परिसंख्यासम्भवस्तथापि पार तीर कर्म्मसमाप्ताविव्यस्माद्धातोरुत्पन्नः पारणशब्दोयद्यपि समाप्तिमात्रमभिधातुं समर्थस्तथाप्युपवाससमापकभोजनएव लोकशास्त्रयोः प्रयोगात् पङ्कजादिशब्दवत् प्रयोगाधीनयौगिकस्तस्मादुपवासव्रतस्य चरमाङ्गं भोजनमभिधत्ते पारणशब्दः। तथाच देवलः, उपवासेषु सर्व्वेषु पूर्व्वाह्ने पारणं भवेत्।

व्रत्। इत्यस्मादेतद्गणपठितपारधातोरुत्पन्नः कर्त्तृल्युटामिद्धः प्रयोगाधीनयौगिकः सामान्यशब्दस्य विशेषपरतायाः सर्व्वसिद्धत्वेन निरूढ़त्वाच्चपि

अन्यथा तु फलस्यार्थं धर्म्ममेवोपसर्पति। धर्म्मोयमः किञ्च यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधा नोपपद्येत, तदाह सएव। सङ्कटे विषमे प्राप्ते द्वादश्य पारयेत् कथं। अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं दोषकृत्। पारणन्तु भवेत् कथमिति वर्षकृत्ये पाठः नक्तं .त्रयोदशीनक्तभोजनंव्रतमिति। अब्भक्षणस्याशि तानशितत्वेन श्रुतावभिधानात्तदुभयव्रतसिद्धिः। यथ आपोवै सर्व्वं रसास्तासामशनेनाशितोऽनशितश्च भ तीति। एवञ्च, जलस्यापि नरश्रेष्ठ भोजनाद्भेषजादृते नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा, इ कालिकापुराणीयं रागप्राप्तपरं। अतएवादित्यपुरा पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनं। असम माप्ते व्रते पूर्व्वं नैव कुर्य्याद्व्रतान्तरं। इत्यत्र उपवा व्रते पारणनियमात् जलेन पारणं विधाय तद्दिने उपव सादिः कार्य्यः। अथ भैमी, विष्णुधर्म्मोत्तरे, मृ शीर्षे शशधरे माघे मासि प्रजापते। एकादश्य सितेपक्षे सोपवासो जितेन्द्रियः। द्वादश्यां ष

कोयोगरूढोवा। पारणस्य नियमिताङ्गत्वे प्रमाणमाह तथाचे सङ्कटे त्रयोदशीव्रतादिप्राप्तनिबन्धनसङ्कटे। एवञ्च श्रुताङ्जलप अनशितत्वेन च भेषजादृते भेषजरूपजलपानादिकं विना निवृ करणं नावसीदतीति कृत्यतत्त्वार्णवे तिथितत्त्वेच सकृत्तुषट्तिलीभू सर्व्वपापैः प्रमुच्यते त्रिंशद्वर्ष सहस्राणि स्वर्गलोकेमहीयते इति, मृगशी शशधर इति फलविशेषाय न भौमतिथिघटकं द्वादश्यामित्येकादश लक्षकं एकादशीं माघशुक्लैकादशीं कृत्यतत्त्वार्णवे विष्णुरहस्यं। म मासि सितेपक्षे एकादश्युपवासकृत्। द्वादशैकादशीभक्तत्यागस्य.प

तिलाचारं कृत्वा पापात् प्रमुच्यते। तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी। तिलस्य दाता भोक्ता च षट्तिली नावसीदति। मत्स्यपुराणे, यद्यष्टम्यां चतुर्द्दश्यां द्वादश्यामथ भारत। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुं। ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीं। उपोष्य विधिनानेन गच्छे द्विष्णोः परं पदं। भीमतिथिं भैमीत्वेन ख्यातामेकादशीं। अथ पार्व्वतीमहोत्सवोत्तरैकादश्युपवासः। आश्विनशुक्लपक्षमधिकृत्य कल्पतरौ ब्रह्मपुराणं, उपवासश्च कर्त्तव्य एकादश्यां प्रजागरः। द्वादश्यां वासुदेवस्य पूजितव्यश्च सर्व्वदा। अथ शयनादिकालः। भविष्यनारदीययोः। मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च। पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन। मैत्रमनुराधा, वैष्णव्यं श्रवणा, पौष्णं रेवती। भविष्ये, निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनं। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्। एवञ्च पादयोगप्राप्तौ फलातिशयः। तद्विधानं वामनपुराणे, एकादश्यां जगत्स्वामिशयनं परिकल्पयेत्। शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवं। अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः। लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत्। अनुज्ञां लब्ध्वेत्यन्वयः। एकादशीसमये दिवा

मस्तुते। यद्यपि सामान्यत एव एकादश्युपवासस्य जागरणस्य द्वादश्यां हरिपूजनस्य च नित्यत्वमभिहितं तथाप्याश्विनशुक्लपक्षे विशेषाभिधानं प्रतिनिश्याचरणनिवारणाय इतिबोध्यं, वैष्णव्यमध्ये श्रवणमध्यपादद्वये

शयनीयपरिकल्पनं रात्रौ द्वादशीक्षणे निद्रेति। विष्णुधर्म्मोत्तरे, स्वास्तीर्णशयनं कृत्वा प्रीणयेच्छेषशायिनं। आषाढ़शुक्लद्वादश्यां विष्णुलोके महीयते। स्वास्तीर्णशयनं शोभनास्तरणयुक्तखट्टादि। वराहपुराणेऽपि श्रीभगवानुवाच, अन्यत्तु संप्रवक्ष्यामि कर्म्म संसारमोचनं। कदम्बः कूटजश्चैव धवकोऽर्जुनकस्तथा। एभिरभ्यर्च्चनं कुर्य्याद्विधिदृष्टेन कर्म्मणा। ततः संस्थापनं कृत्वा मम मन्त्रविधिः स्मृतः। नमोनारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत्। मेघान्यपि मेघश्यामं ह्युपागतं सिच्यमानां महीमिमां निद्रां भगवान् गृह्णातु लोकनाथ वर्षास्विमं पश्यतु मेघवृन्दं। ज्ञात्वा च पश्यैव च देवनाथ मासां श्चतुरो वैकुण्ठस्य तु पश्य नाथ। आषाढ़शुक्लद्वादश्यां सर्व्वशान्तिकरं शिवं। य एतेन विधानेन भूमि मे कर्म्म कारयेत्। स पुमान्न प्रणश्येत्तु

अन्यत्र स्वापादिविहितनिशादिभिन्नकाले दशमी प्रतिपदोश्च। मेघानि मेघाः क्लीवत्वं छान्दसं मेघश्याममिति त्वामितिशेषः। सिच्यमानामिमां महीं हि उपामगतमित्यन्वयः, इमं निस्त्रिंशितं भवन्तं चत्वारि चतुरः शिवं मोक्षदं प्रणश्येत पतत् सितेऽहनि शुक्लपक्षे आराधनाय सन्तोषाय अभिनूयमानः स्तूयमानः। ऋषिः सर्व्वज्ञः ऋपे ज्ञानार्थत्वात् विषयविशेषानिर्द्देशात् विनिगमनाविरहेण ज्ञानस्य सर्वविषयकत्वं लभ्यते, वन्दितैरनिन्दितैर्वन्दनीयः। मैत्र श्रवणरेवतीनां क्रमेणादि मध्यावसानेषु पादेषु प्रस्वापावर्त्तबोधनमित्यन्वयः, आवर्त्तः पार्श्वपरिवर्त्तः प्राप्ताविति निशादौ नक्षत्रप्राप्तावित्यर्थः, ऋक्षासंयोग इतिनक्षत्राणामसम्भवे एकादश्यादिपञ्चतिथिषुनक्षत्राणा मसम्भवे द्वादश्यां सन्धिसमये तत्रच सायं सन्ध्यासमये शयनावर्त्तने प्रातःसन्ध्यासमये उत्थानमिति शेषः,

संसारेषु युगे युगे। शयने कुटजविधानाद्विष्णुधर्म्मो-त्तरीयनिषेधोऽन्यत्र। धवकः कपित्थः। संस्थापनं शय्यायां। भूमि इति पृथिव्याः सम्बोधनं। एवमुक्तेन मन्त्रेण कृष्णं सुष्वापयेत्ततः। सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदं। विबुद्धे त्वयि बुद्ध्येत जगत् सर्व्वं चराचरं। इति मन्त्रेण पूजयेत्। प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि। कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते कटदानं पार्श्वपरिवर्त्तः। कामरूपीयनिबन्धे। एवं संपूज्य विधिवद्भाद्रस्य द्वादशीदिने। मन्त्रेणानेन देवेशं पार्श्वेन परिवर्त्तयेत्। वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव। पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव। त्वयि सुप्ते जगन्नाथे जगत् सुप्तं भवेदिदं। विबुद्धे त्वयि बुद्ध्येत जगदेतच्चराचरं। ब्रह्मपुराणे, एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवं। प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः।

---

तिथ्यन्तरे पादयोगे यदभिहितं तस्य प्रमाणमाह किं तन्मैत्राद्यपादेनेति दशम्या अंशोयत्रपादे तेन यः पादोदिवाप्राप्त स्तेन वा किमित्यर्थः। सचासौ मैत्राद्यपादश्चेति समासे दशम्यंशेनइतयत्र यत्पदाभावात् तेनान्वये तत् पदार्थानन्वयात्। परन्तु तत् पदमव्ययं लुप्ततृतीयान्तं तथाच दशम्यंशेन मैत्राद्यपादेन योदिवा तेन मैत्राद्यपादेन यस्यप्रतिपदि तेनच मैत्राद्यपादेन किं इत्यर्थः, तथा दशम्यंशेन पौष्णशेषेण प्रतिपदि निशि यस्य तेन पौष्णशेषेण किमित्यर्थः। अर्थशब्दस्यार्थे उभयत्र दशमी प्रतिपदोर्व्वर्जनादुभयत्रैव तिथिपञ्चकमनुमतमित्यस्य लाभः न च पौर्णमास्यां प्रतिपदि चतुर्द्दश्याञ्च कदाचिदपिपौष्णशेषसम्भवोनभवति एवं चतुर्द्दश्यां न मैत्राद्यपादसम्भवइतिकथंदशमीप्रतिपदो र्व्वर्जनं अप्राप्ति

रात्रौ प्रसुप्तमित्यन्वयः बोधनन्तु दिवैव। वाराहे, कौमुदस्य तु मासस्य या सिता द्वादशी भवेत्। अर्द्धोदयस्तु मां तत्र तस्य पुण्यफलं शृणु। यावल्लोकाहि वर्त्तन्ते यावत् त्वञ्चैव माधवि। मद्भक्तोजायते तावदन्यभक्तोनजायते। कौमुदस्य कार्त्तिकस्य। माधवीति पृथिव्याः सम्बोधनं। कृत्वा वै मम कर्म्माणि द्वादश्यां मत्परोनरः। ममैववो-धनार्थाय इमं मन्त्रमुदीरयेत्। महेन्द्ररुद्रैरभिनूयमानो-भवानृषिर्व्वन्दितवन्दनीयः। प्राप्ता तवेयं किल कौमु-दाख्या जागृष्व जागृष्व च लोकनाथ। मेघागतानिर्म्मल-पूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ। अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ। एवं कर्म्माणि कुर्व्वी-रन् द्वादश्यां ये यशस्विनि। मम भक्तानरश्रेष्ठास्ते यान्ति परमां गतिं। अत्र मन्त्रद्वयपाठानन्तरं, उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते। त्वया चोत्थीयमानेन उत्थितं भुवनत्रयं, इति सम्प्रदायागतस्तृतीयश्लोकइति वाचस्पतिमिश्राः। शयनोत्थानमन्त्रास्तु कल्पतरुप्रभृति ग्रन्थसंवादाल्लिखिताः। तदेवमेकादश्यां द्वादश्यां वा

योग्यस्य निषेधासम्भवात् तथापि दशमीप्रतिपदोर्व्वर्ज्जने न•तात्पर्य्यं तिथिपञ्चके तथासम्भवं विधौ तात्पर्य्यात्। अत्रेदमवधेयं द्वादशी चक्रपाणिन इति पद्मपुराणीयवचने विष्णुतिथित्वेन द्वादश्यां शयना-दिकमुक्तमिति द्वादश्यामिव शयनादिकं एकादश्यामुत्थानं ब्रह्मपुराणे यदुक्तं तदेकादशीयुक्तद्वादश्यभिप्रायेण। अतएव दिवा एकादशीसमये शय्यानिर्म्माणं रात्रौ द्वादशीक्षणे प्रस्वापनमुक्तं वराहपुराणे द्वादश्यामु-त्थानस्योक्तत्वाच्च सर्व्वत्र मन्त्रवाक्येऽपि द्वादश्याएव ग्रहणादपि तथा बाच्यं यमस्मृतौ-यदाषाढ़ीपदमुक्तं तदेकादशीमारभ्य पौर्णमासीपर्य्यन्तं।

रेवत्यन्तपादयोगवशाद्दिवोत्थानं नक्षत्रयोगाभावे तु द्वादश्यामेव कारयेदिति गुरुचरणाः। जीमूतवाहनस्तु भविष्ये। आभाकासितपक्षेषु मैत्रश्रवणरेवती। आदिमध्यावसानेषु प्रस्वापावर्त्तबोधनं। आभाकासितपक्षेषु आषाढभाद्रकार्त्तिकशुक्लपक्षेषु एषाञ्च द्वादश्यां प्राप्तौ मुख्यः कल्पः। भविष्यपुराणं। निशि स्वापोदिवोत्थानं सन्ध्यायां परिवर्त्तनं। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्। विष्णुधर्म्मोत्तरे। विष्णुर्दिवा न स्वपिति नच रात्रौ प्रबुध्यते। द्वादश्यामृक्षसंयोगे पादयोगेन कारणं। अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः। पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत्। वचनान्तरं, रेवत्यन्तोयदा रात्रौ द्वादश्या च समन्वितः। तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीं। दिनान्ते त्रिधाविभक्तदिनतृतीयभागे दिवोत्थानमित्यनुरोधात्। रात्रौ विबोधोविनिघ्नन्ति पौरान्। स्वापोदिवा राष्ट्रकुलं न्टभर्त्तुः। सन्ध्याद्वये स्वल्पफला धरित्री भवेन्नराणामपि रोगदुःखं। वराहपुराणे, द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे। आभा-

निद्राप्रबोधनयोः काल इति ज्ञापनार्थं तेन दिनपञ्चपूजाभिधानमन्यत्रापि सङ्गच्छते तत्रैकादश्यां शय्यानिर्म्माणकालः द्वादश्यां प्रस्वापनं प्रागुक्तमन्त्राणां पाठस्तु तत्रैव त्रयोदश्यादिदिनत्रये सामान्यतः पूजापौर्णमासीकालेन क्रमेण निद्राग्रहणं प्रबोधोऽपि तथेति हरिनाथोपाध्याय प्रभृतयः। वस्तुतस्तु एकादश्यादिपञ्चतिथिषु निद्राप्रबोधकालत्वं नापि मुनिवाक्येऽश्रवणात् द्वादश्यामेव शयनोत्थानविधानात् उत्थानस्य च निद्रितस्यायोगाच्चेदं मतं न युक्तं परन्तु आषाढस्येयमाषाढी कार्त्तिकस्येयं कार्त्तिकीति व्युत्पत्त्या आषाढीकार्त्तिकीपदे द्वादशी-

कासितपक्षेषु शयनावर्त्तनादिकं। तदेवं शयनादौ कालचतुष्टयं द्वादश्यां निशादौ नक्षत्रमात्रयोगः। तदभावे निशाद्यनादरेण तिथ्यन्तरे पादयोगः। तस्याप्यभावे द्वादश्यां सन्ध्यायां नक्षत्रमात्रयोगः। तस्याप्यभावे द्वादश्यां सन्ध्यायामेवेति, वोधनन्तु द्वादश्यां रात्रौ रेवत्यन्तपादयोगे दिनतृतीयभागे इति विशेषः। विष्णुधर्म्मोत्तरे, किं तन्मैत्राद्यपादेन दशम्यंशेन योदिवा। पौष्णशेषेण किन्तेन प्रतिपद्यथ योनिशि। इति दशमीप्रतिपदो-र्निषेधादेकादश्यादिपौर्णमास्यन्तानां तिथीनामभ्यनुज्ञानं पद्मपुराणे, सर्व्वदेवशयनादिकमुक्तं यथा, प्रतिपद्धन-दस्योक्ता पवित्रारोपणे तिथिः। श्रियादेव्याद्वितीया तु तिथीनामुत्तमा स्मृता। तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च। पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च। सप्तमी भास्करस्योक्ता दुर्गायाश्चा-ष्टमी स्मृता। मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा। एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः। चक्रपाणिन इति पाणव्यवहारइत्यस्माद्धातोः। त्रयोदशी त्वनङ्गस्य

परे न चैतादृशव्युत्पत्त्या प्रतिपदादिग्रहणसम्भवात् तन्मात्रपरत्वं न सम्भवति विशेष्यवाचकपदासमभिव्याहृताषाढ़ादिपदस्य पौर्णमास्या-मेव प्रयोगः साधुरिति वाच्यं प्रागुक्तवचनैकवाक्यतया आषाढ़्यां संवि-शेदित्यत्र निद्रां त्यजति कार्त्तिक्यामित्यत्र द्वादश्यामेव, सन्ध्याकाले द्वादश्यभावे निशाद्यादरेण द्वादश्यां शयनादिकं। किन्तन्मैत्राद्यपादेति वचने दशमीपदप्रतिपत्पदे द्वादशीभिन्नपरे मतान्तरेऽपि तयोर्यथा-श्रुतार्थासङ्गतेः। तन्मते चतुर्द्दशीपौर्णमास्योः मैत्राद्यपाद पौष्णशेष-पादयोरसम्भवेन एकादश्यादिपञ्चकानुमतत्वासम्भवाच्चेति, मम प्रतिभाणः,

शिवस्योक्ता चतुर्द्दशी । मम चैव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता । यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या । तस्य देवस्य तस्मिंश्च शयनावर्त्तनादिकं । अत्र हरिशयनादावाषाढ़ादिविधानात्तत्साहचर्य्यादन्येषामपि तथा । ज्योतिषेऽपि, व्रजति यदा मिथुनं विहाय कर्कं त्यक्त्वा राजविवर्जितां तिथिं सूर्य्यः । भवति तदा नियतं द्विराषाढ़ः सुरशयविधिर्द्वितीये मासि । राज्ञा चन्द्रेण विवर्जितां अमावस्यां । पूर्व्वकृष्णपक्षे मिथुने संक्रान्ते इति शेषः । हरिनाथोपाध्यायास्तु यमः, क्षीराब्धौ शेषपर्य्यङ्के आषाढ़्यां सम्विशेद्धरिः । निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा । ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति । हिंसात्मकैश्च किं तस्य यज्ञैः कार्य्यं महात्मनः । प्रस्वापे च प्रबोधे च पूजितो येन केशवः । आषाढ़शुक्लैकादशीमारभ्य पौर्णमासीपर्य्यन्तं विष्णोर्निद्राग्रहणरूपशयनसमयः । अतएवैकादश्यां शयनमभिधाय तदादिदिनपञ्चके कर्म्मकथनं ब्रह्मपुराणे । वराहपुराणीये तु एकादशीका-

व्रजतीति, राजविवर्जितां तिथिममावस्यां त्यक्त्वा मिथुनं विहाय सूर्य्यो यदा कर्कटं यातीत्यन्वयः । तेन कर्कटसंक्रान्तिः शुक्लप्रतिपदादावित्यस्य लाभः । मिथुनसंक्रान्तिश्च पूर्व्वकृष्णपक्षे इति पूरणीयं । ततश्च शुक्लप्रतिपदादिदर्शान्तरूपचान्द्राषाढ़ः रविसंक्रान्तिशून्यत्वान्मलमासः । ततःपरं शुक्लप्रतिपदादिदर्शान्तोऽपि मासः मिथुनस्थरव्यारब्धत्वादाषाढ़ इति द्विराषाढ़ इति द्वितीये मासीति शुद्धत्वात् एवमेव श्रीदत्तोपाध्याया इति स्मृतितत्त्वबुभुत्सयेति एतेनैतद्ग्रन्थस्य निर्द्दोषत्वमुक्तं तत्त्वनिर्णायकत्वादिति कलियुगपावनावतारश्रीमदद्वैतवंशसम्भवश्रीराधा-

लीनमन्ते निद्राग्रहणाभिधानं। यमस्मृतौ पौर्णमास्यां शयनाभिधानं आषाढ़ीपदस्यानुपाधिस्तत्रैव प्रवृत्तेः एवञ्च ब्रह्मपुराणे यद्यप्येकादश्यां प्रवोधनमुक्तं तथापि तदादिदिनपञ्चकमेव प्रवोधसमयः। तेन वराहपुराणे द्वादश्यां प्रवोधाभिधानं। यमस्मृतौ कार्त्तिक्यां प्रवोधाभिधानं समञ्जसमिति एवमेव श्रीदत्तोपाध्यायाः। कल्पतरुकृतस्तु एकादश्यामेव शयनं प्रवोधश्च। यमस्मृतावाषाढीकार्त्तिकीपदमेकादशीपरं आषाढ़स्येयं कार्त्तिकस्येयमिति व्युत्पत्त्या न तत्प्रत्ययानुपपत्तिः अपवादविषये क्वचिदुत्सर्गप्रवृत्तेरित्याहुः। श्रीभगवद्वाक्यं, मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं ममार्पयेत्। फलाहारपदमशनगर्भं तेन सर्व्वथा अनशनपरत्वं। अत्र मलमासादिकृत विशेषोमलिम्लुचतत्त्वेऽनुसन्धेयः॥*॥ विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया। तत् क्षन्तव्यं वुधैरेव स्मृतितत्त्ववुभुत्सया॥*॥ इतिवन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचिते स्मृतितत्त्वे एकादशीतत्त्वं समाप्तम्॥*॥




सम्पूर्णम्।

मोहन गोस्वामिभट्टाचार्य्यविरचितैकादशीतत्त्वटिप्पनी सम्पूर्णा। सका १७५० शाके व्योमसुताद्रि-चन्द्रपरिमे शम्भुं मुहुः संस्मरन्। भाद्रे सूर्य्यजवासरक्षततिथौ पक्षेच कृष्णेतरे। राधामोहन शर्म्मणः कृतिमिमां टीकां मुदैकादशीतत्त्वस्यैव धरामरोहरिहरो यत्नाद् व्यलेखीदयं।



सम्पूर्णम्।